॥ श्रीः ॥

महाकविकालिदासप्रणीतम्

# रघुवंश-महाकाव्यम् ।

स्मार्तकर्मानुष्ठाननिष्ठ-कश्यपवंशावतंस-स्वधर्मधुरन्धर-पाठकोपाह्व
जयकृष्णशर्मतनुजनुषा विशुद्धानन्द-महाविद्यालयीय साहि-
त्यप्रधानाध्यापकेन गौरीनाथशर्म्मणा विरचितया
सुबोधिन्याख्यया व्याख्यया सरला-
र्थया प्राकृतभाषया
संक्षिप्तार्थया
च
संवलितम्

तच्च
काशीस्थ-शारदा-भवनात्
समुल्लसितम्

काश्यां तारायन्त्रालये श्रीरामेश्वरपाठकद्वारा मुद्रयित्वा प्राकाश्यं नीतम्

वैक्रमाब्दाः १९८६ कु०

# श्रीरघुवंश-महाकाव्यम् ।

## महाकवि-कालिदासविरचितम् ।



### प्रथमः सर्गः ।

*नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।*
*नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥ १ ॥*

इह खलु सकलकविकुलतिलकः, अप्रतिमप्रतिभः,
महाकविः कालिदासः—

"काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥" तथा "अयं सर्वत्र सुखदः श्रवणेऽनुष्ठितावपि" इत्याद्यालङ्कारिकवचनप्रामाण्यात् काव्यस्य तदुपदेशस्य चानेकसुखसन्तानपरम्पराधायकतां "काव्यालापांश्च वर्जयेदिति निषेधवाक्यस्य दुष्टकाव्यविषयताञ्च समनुपश्यन् रघुवंशाख्यं महाकाव्यं प्रणिनिनीषुः, विशिष्टशब्दार्थप्रतिपत्तिपूर्वकं प्रारिप्सितस्य निष्प्रत्यू-

---

रघूणां ( रघुकुलोद्भवानां भूपतीनां ) वंशः, तद्विषयकप्रबन्धः अस्ति अस्मिन् महाकाव्ये तद् रघुवंशं महाकाव्यम् । सूर्यकुलोत्पन्नभूपतिचरितकथनात्मकं महाकाव्यमित्यर्थः ।

अत्र कविना दिलीपादारभ्य अग्निवर्णपर्यन्ता ऊनत्रिंशद्भूपाला वर्णिताः । ते च यथा :—

| | | | |
|---|---|---|---|
| (१) दिलीपः | (१,२,३, सर्गेषु) | (६) कुशः | (१६ सर्गे) |
| (२) रघुः | (३,४,५, सर्गेषु) | (७) अतिथिः | (१७ सर्गे) |
| (३) अजः | (५,६,७,८, सर्गेषु) | (८) निषधः | (१८ सर्गे) |
| (४) दशरथः | (९,११,१२, सर्गेषु) | (९) नलः | (१८ सर्गे) |
| (५) रामः | (१०,११,१२,१३, १४,१५, सर्गेषु) | (१०) नभः | (१८ सर्गे) |
| | | (११) पुण्डरीक | (१८ सर्गे) |

हपरिसमाप्तिकामः, "शब्दजातमशेषन्तु धत्ते शर्वस्य वल्लभा । अर्थरूपं यदखिलं धत्ते मुग्धेन्दुशेखरः" इति वायवीयसंहितावचनबलेन शब्दार्थयोः गौरीगिरीशायतत्त्वदर्शनात् तदधिजिगमिषया तावेव प्रथममभिवादयते—

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥ १ ॥

विनायकं प्रणम्यादौ शुण्डामण्डनमण्डितम् ।
मुग्धानामपि बोधाय रचितेयं सुबोधिनी ॥ १ ॥

( अन्वयः ) " अहं कालिदासः " वागर्थप्रतिपत्तये वागर्थाविव सम्पृक्तौ जगतः पितरौ पार्वतीपरमेश्वरौ वन्दे ॥ १ ॥

( सुबोधिनी ) वागर्थाविव ( शब्दार्थाविव ) सम्पृक्तौ ( सदासम्बद्धौ, " नित्यमिलितौ इत्यर्थः ) जगतः ( संसारस्य ) पितरौ ( जननीजनकौ ) [1]पार्वतीपरमेश्वरौ ( उमामहेश्वरौ ) वागर्थप्रतिपत्तये ( शब्दार्थयोः सिद्धये, सम्यग्ज्ञानायेत्यर्थः ) वन्दे ( प्रणमामि ) ॥ १ ॥

| | | | |
|---|---|---|---|
| (१२) क्षेमधन्वा | (१८ सर्गे) | (२१) विश्वसहः | (१८ सर्गे) |
| (१३) देवानीकः | (१८ सर्गे) | (२२) हिरण्यनाभः | (१८ सर्गे) |
| (१४) अहीनगुः | (१८ सर्गे) | (२३) कौशल्यः | (१८ सर्गे) |
| (१५) पारियात्रः | (१८ सर्गे) | (२४) ब्रह्मिष्ठः | (१८ सर्गे) |
| (१६) शीलः | (१८ सर्गे) | (२५) पुत्रः | (१८ सर्गे) |
| (१७) उन्नाभः | (१८ सर्गे) | (२६) पौष्यः | (१८ सर्गे) |
| (१८) वज्रनाभः | (१८ सर्गे) | (२७) ध्रुवसन्धिः | (१८ सर्गे) |
| (१९) शङ्खणः | (१८ सर्गे) | (२८) सुदर्शनः | (१८ सर्गे) |
| (२०) व्युषिताश्वः | (१८ सर्गे) | (२९) अग्निवर्णः | (१९ सर्गे) |

( १ ) जनन्या अभ्यर्हितत्वात्तस्याः पूर्वनिपातः । उक्तञ्च :—

"पितृतोऽपि गुरुर्माता नास्ति मातृसमो गुरुः ।
पतिता गुरवस्त्याज्या माता नैव कदाचन ॥ १ ॥
गर्भधारणपोषाभ्यां माता ज्ञेया गरीयसी ।"

( समासः ) वागर्थाविव = वाक् च अर्थश्च वागर्थौ, वागर्थौ इव वागर्थाविव। पितरौ = माता च पिता च पितरौ ( एकशेष )। २पार्वतीपरमेश्वरौ = पर्वतस्यापत्यं स्त्री पार्वती, ईशितुं शीलमस्येतीश्वरः, परमश्चासावीश्वरश्च परमेश्वरः, पार्वती च परमेश्वरश्च पार्वतीपरमेश्वरौ ( द्वं० )। वागर्थप्रतिपत्तये = वाक् च अर्थश्च वागर्थौ ( विशिष्ट-शब्दार्थौ ) तयोः प्रतिपत्तिस्तस्यै ॥ १ ॥

( वाच्यपरिवर्तनम् ) ( मया ) वागर्थप्रतिपत्तये वागर्थाविव सम्पृक्तौ जगतः पितरौ पार्वतीपरमेश्वरौ वन्द्येते ॥ १ ॥

**विघन विनाशन हेतु प्रभु, विनय करूँ कर जोर।**
**भाषा भूषित वंश रघु, कीर्तिलहै चहुँ ओर ॥ १ ॥**

---

अपि च :—

"उपाध्यायान् दशाचार्य्य आचार्य्याणां शतं पिता।
सहस्रं तु पितॄन् माता गौरवेणातिरिच्यते ॥"

पार्वत्याश्च जगज्जननीत्वात श्रेष्ठत्वम्बोध्यम्। लोके च स्तनन्धयः शिशुरपि प्रथमं "मा-मा" इति मातृशब्दमेवोच्चारयति। अत्रच केचिदादौ मातृशब्द-प्रयोगेण कालिदासस्य शाक्तत्वमुपपादयन्ति तन्न सहृदय-संवेद्यम्।

( २ ) केचन श्लोकमिममन्यथा व्याचक्षते, तद्यथा :— पार्व्वतीं पिपर्तीति पार्वतीपरो (महादेवः) मा (लक्ष्मीः) तस्या ईश्वरः मेश्वरः ( विष्णुः ) पार्वतीपरश्च मेश्वरश्च पार्वतीपरमेश्वरौ ( हरिहरौ ) वन्दे।

अथवा—

पार्व्वतीं पाति रक्षति इति पार्वतीपः ( महादेवः ) रमा ( लक्ष्मीः ) तस्या ईश्वरः रमेश्वरः ( विष्णुः ) तौ वन्दे। सम्पृक्तौ ( सँलग्नौ )।

यदुक्तम् :—

" न विना शङ्करं विष्णुं विना केशवं शिवः।"

अन्ये च :—

वागेव अर्थः धनं येषान्ते वागर्थाः पण्डिताः, तत्सम्बुद्धौ हे वागर्थाः! ( पण्डिताः! ) पार्व्वतीपरमेश्वरौ वन्दे। कीदृशौ तावित्याहः—विवसम्पृक्तौ—विः

( भावार्थ ) पार्वती और परमेश्वर प्रसन्न होकर हमें काव्य निर्माण की शक्ति देवें इसलिये ग्रन्थकर्त्ता महाकवि कालिदास शब्द और अर्थ की सिद्धि के लिये शब्द और अर्थ की तरह परस्पर मिले हुए संसार के माता पिता अर्धनारीश्वर भगवान् चन्द्रशेखर को नमस्कार करते हैं ॥ १ ॥

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ २ ॥

( अन्वयः ) सूर्यप्रभवः वंशः क्व अल्पविषया ( मम ) मतिः क्व ( अहं ) मोहाद् उडुपेन दुस्तरं सागरं तितीर्षुः अस्मि ॥ २ ॥

( सुबोधिनी ) सूर्यप्रभवः ( सूर्यकारणः ) वंशः ( सूर्यवंशः ) क्व ( कुत्र ) अल्पविषया ( परिमितज्ञेयार्था, परिमितपदार्थग्रहणसमर्थेति-भावः ) "मम" मतिः (बुद्धिः) च, क्व† ( कुत्र, नाहं सूर्यवंशवर्णनसमर्थः, समग्रतया रघुवंशोत्पन्नानामिति वृत्तं बुद्धिविषयीकर्तुं न शक्नोमीत्यर्थः ) " परम्-अहं " मोहात् * ( अज्ञानात् ) उडुपेन ( प्लवेन ) " उडुपन्तु प्लवः कोलः " इत्यमरः, दुस्तरं ( तरितुमशक्यं ) सागरं ( समुद्रं ) तितीर्षुः ( तरितुमिच्छुः, ) अस्मि ( भवामि ) ॥ २ ॥

( पक्षी ) मयूर इत्यर्थः, तेन वाति गच्छतीति विवः कीर्तिकेयः तेन सम्पृक्तौ ( सहितौ ) उमामहेश्वरौ कार्तिकेयञ्च प्रणमामीत्यर्थः । यद्वा—विः पक्षो हंस इति यावत् तेन वातीति विवः ( ब्रह्मा ) तेन सम्पृक्तौ, उमामहेश्वरौ ब्रह्माणञ्च प्रणमामीत्याशयः । यथा वा :—विः ( पक्षी, गरुडः ) तेन वाति गच्छतीति विवः विष्णुः तत्सहितौ तौ वन्दे । इत्यादि बहुविधमपि व्याख्यानं सहृदयहृदयाहृद्यत्वात्साहित्यिका नाद्रियन्ते ।

†"द्वौ क शब्दौ प्रयुज्येते ह्यत्यन्तासम्भवे सदा" ।

*केचित्तु एतच्छ्लोकस्थं " मोहाद् " इतिपदमन्यथा व्याचक्षते, तद्यथा :—मा ( लक्ष्मीः, वाक्यसम्पदिति यावत् ) तस्या ऊहः ( चेष्टा ) तस्मात् मोहात् ( भगवतीप्रसादादित्यर्थः ) उडुं ( नक्षत्रं ) पाति ( रक्षति ) इति उडुपः ( चन्द्रः ) तेन । चन्द्रेणहि सांयात्रिकाः दिग्विभागं कृत्वा सागरं तरन्तीति प्रसिद्धिः ।

( समासः ) सूर्यप्रभवः=प्रभवति अस्मादिति प्रभवः ( कारणं ) सूर्यः प्रभवो यस्य सः । ब० । अल्पविषया=अल्पः विषयः ज्ञेयोऽर्थो यस्याः सा । तरितुमिच्छति तितीर्षति, तितीर्षतीति तितीर्षुः ॥ २ ॥

( वाच्यपरिवर्तनम् ) सूर्यप्रभवेण वंशेन क्व ( भूयते ) अल्पविषयया मम मत्या च क्व ( भूयते ) (मया) मोहाद् उडुपेन दुस्तरः सागरः तितीर्षुणा भूयते ॥ २ ॥

( भावार्थ ) कहां वह वंश जिसका पैदा करनेवाला भगवान् सूय है और कहां मेरी छोटीसी बुद्धि, इसे भली भांति जानते हुए भी इसमें प्रवृत्त होना मेरा केवल अज्ञान है ॥ २ ॥

मन्दः कवियशः प्रार्थी गमिष्याम्युपहास्यताम् ।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥ ३ ॥

( अन्वयः ) मन्दः ( तथापि ) कवियशः प्रार्थी ( अहं ) प्रांशुलभ्ये फले लोभाद् उद्बाहुः वामनः इव उपहास्यतां गमिष्यामि ॥ ६ ॥

(सुबोधिनी) मन्दः (मन्दबुद्धिः, मूढः) "तथापि" कवियशः-प्रार्थी ( महाकविकीर्तिं कामयमानः ) "अहं" प्रांशुलभ्ये ( उन्नतपुरुषप्राप्ये ) फले ( वृक्षफले ) लोभात् ( फलग्रहणाभिलाषात् ) उद्बाहुः ( ऊर्ध्वहस्तः ) वामनः ( खर्वपुरुषः ) इव, "खर्वो ह्रस्वश्च वामनः" इत्यमरः, उपहास्यतां (उपहासास्पदं) गमिष्यामि (प्राप्स्यामि) ॥ ३ ॥

( समासः ) कवियशःप्रार्थी=कवीनां यशः कवियशः, तत् प्रार्थयितुं शीलमस्य सः । प्रांशुलभ्ये=लब्धुं योग्यं लभ्यं, प्रांशुना लभ्यं प्रांशुलभ्यं तस्मिन् । उद्बाहुः=उत् ( उत्तोलितः ) बाहुर्येन सः ॥ ३ ॥

( वाच्यपरिवर्तनम् ) मन्देन कवियशःप्रार्थिना ( मया ) प्रांशुलभ्ये फले लोभात् उद्बाहुना वामनेन इव उपहास्यता गँस्यते ॥ ३ ॥

( भावार्थ ) स्वयं मन्द मति वाला मैं बड़े २ कवियों के यशको चाह रहा हूं इसलिये लांबे मनुष्यके हाथ लगने योग्य फलकी ओर, लोभ से ऊँची बांह किये हुए नाटे मनुष्य की तरह हंसी का पात्र हूंगा ॥ ३ ॥

अथवा कृतवाग्द्वारे वंशेऽस्मिन् पूर्वसूरिभिः ।
मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ।

( अन्वयः ) अथवा पूर्वसूरिभिः कृतवाग्द्वारे अस्मिन् वंशे वज्र-समुत्कीर्णे मणौ सूत्रस्य इव मे गतिः अस्ति ॥ ४ ॥

( सुबोधिनी ) अथवा (पक्षान्तरे) पूर्वसूरिभिः ( प्राचीनविद्वद्भिः, कविभिः वाल्मीक्यादिभिः ) कृतवाग्द्वारे ( रामायणादिरूपवाङ्मार्गे ) अस्मिन् ( सूर्यप्रभवे ) वंशे ( सूर्यवंशे ) वज्रसमुत्कीर्णे ( मणिवेधक-सूचीविशेषविद्धे ) मणौ ( रत्ने ) सूत्रस्य ( तन्तोः ) इव ( यथा ) मे ( मम ) गतिः ( सञ्चारः ) "अस्ति" ॥ ४ ॥

( समासः ) कृतवाग्द्वारे=कृतं ( रामायणादिप्रबन्धरूपं ) वाग् एव द्वारं यस्य स तस्मिन् । पूर्वसूरिभिः=पूर्वाः सूरयः पूर्वसूरयस्तैः । वज्रेण समुत्कीर्णः वज्रसमुत्कीर्णस्तस्मिन् ॥ ४ ॥

( वाच्यान्तरम् )..................मे गत्या भूयते ॥ ४ ॥

( सरलार्थ ) अथवा प्राचीन महाकवि वाल्मीकि आदि के किये हुए जो रामायणादि प्रबन्ध हैं उनही को इस सूर्यवंश का द्वार समझ कर उसकी सहायता से, सूई से बेधे हुए मणि में डोरे की तरह इस वंश में मेरी गति है ॥ ४ ॥

सोऽहमाजन्म शुद्धानामाफलोदयकर्म्मणाम् ।
आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् ॥ ५ ॥
यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम् ।
यथापराधदण्डानां यथाकालप्रबोधिनाम् ॥ ६ ॥
त्यागाय सम्भृतार्थानां सत्याय मितभाषिणाम् ।
यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ॥ ७ ॥
शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥ ८ ॥
रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन् ।
तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः ॥ ९ ॥

( अन्वयः ) सः अहं तनुवाग्विभवः अपि तद्गुणैः कर्णम् आगत्य चापलाय प्रचोदितः सन् आजन्मशुद्धानां आफलोदयकर्म्मणां आसमुद्रक्षितीशानां आनाकरथवर्त्मनां यथाविधिहुताग्नीनां यथाकामार्चितार्थिनां यथापराधदण्डानां यथाकालप्रबोधिनां त्यागाय सम्भृतार्थानां सत्याय मितभाषिणां यशसे विजिगीषूणां प्रजायै गृहमेधिनां शैशवे अभ्यस्तविद्यानां यौवने विषयैषिणां वार्द्धके मुनिवृत्तीनां अन्ते योगेन तनुस्त्यजां रघूणाम् अन्वयं वक्ष्ये ॥ ५-६ ॥

( सुबोधिनी ) सः अहं "कालिदासः" तनुवाग्विभवः अपि (स्वल्पवागैश्वर्योऽपि) सन्, तद्गुणैः (रघुगुणैः) कर्णम् (मम श्रोत्रं) आगत्य ( समेत्य ) चापलाय ( अविमृश्य करणरूपं चपलकर्म कर्तुं ) प्रचोदितः ( प्रेरितः सन् ) आजन्मशुद्धानां ( जन्मारभ्य पवित्रचरित्राणां, निषेकाद्यखिलसंस्कारसम्पन्नानामित्यर्थः ) आफलोदयकर्म्मणां ( फलसिद्धिपर्यन्तं कर्म कुर्वतां ) आसमुद्रक्षितीशानां ( समुद्रपर्यन्तं क्षितिशासकानां ) आनाकरथवर्त्मनां ( स्वर्गपर्यन्तं रथगतिमतां ) [१]यथाविधिहुताग्नीनां ( यथाशास्त्रं हवनादिना सन्तर्पिताऽनलानां ) यथापराधदण्डानां ( अपराधानुसारं दत्तदण्डानां ) [२]यथाकालप्रबोधिनां ( उचितसमये जागरूकाणां ) [३]त्यागाय ( दानाय ) सम्भृता-

---

( १ ) साग्निकैः किल कृतदारैः वैवाहिके अग्नौ सायं प्रातर्यथाविधि होमादि कर्म कर्त्तव्यम् । यथाच मनुराह :—

" वैवाहिकेऽग्नौ कुर्वीत गृह्यं कर्म यथाविधि ।
पञ्चयज्ञविधानञ्च पङ्क्तिञ्चान्वाहिकीं गृही ॥ ३ ॥ "

( २ ) उक्तञ्च मनुना :—

" उत्थाय पश्चिमे यामे कृतशौचः समाहितः ।
हुताग्निर्ब्राह्मणांश्चार्च्य प्रविशेत्स शुभां सभाम् ।"

( ३ ) उक्तञ्च :—

" अलब्धञ्चैव लिप्सेत लब्धं रक्षेदवेक्षया ।
रक्षितं वर्द्धयेच्चैव वृद्धं पात्रेषु निक्षिपेत् ॥ १ ॥

कामन्दकोऽपि :—

" कोषेणाश्रयणीयत्वमिति तस्यार्थसंग्रहः ।
अम्बुगर्भो हि जीमूतश्चातकैरभिनन्द्यते ॥ १ ॥ "

र्थानां ( अर्जितधनानां ) सत्याय ( यथार्थकथनाय ) मितभाषिणां अल्पभाषणशीलानां ) यशसे ( कीर्तये ) विजिगीषूणां विजेतुमिच्छूनां ) प्रजायै ( सन्तानाय ) गृहमेधिनां ( दारपरिग्रहाणां ) शैशवे ( बाल्यावस्थायां ) अभ्यस्तविद्यानां ( अधिगतचतुर्दशविद्यानां[1] ) यौवने ( तारुण्ये ) विषयैषिणां ( विषयाभिलाषिणामित्यर्थः ) वार्द्धके ( वृद्धावस्थायां ) [2]मुनिवृत्तीनां ( कृतमुनिसदृशाचरणानाम् ) अन्ते ( शरीरत्यागकाले ) योगेन ( परमात्मध्यानेन, चित्तवृत्तिनिरोधव्यापारेण वा ) तनुत्यजां ( देहत्यागिनां ) रघूणां ( रघुकुलोद्भवानां नृपाणां ) अन्वयं ( वंशं ) वक्ष्ये ( अभिधास्ये ) ॥ ५—९ ॥

( समासः ) आजन्मशुद्धानां = जन्म अभिव्याप्य इति आजन्म, आजन्मनः शुद्धा आजन्मशुद्धास्तेषां । आफलोदयकर्मणां = फलस्य उदय इति फलोदयः, फलोदयमभिव्याप्य आफलोदयं, आफलोदयं कर्म येषां ते तेषां । आसमुद्रक्षितीशानां = समुद्रम् अभिव्याप्य इति आसमुद्रम् आसमुद्रं क्षितेः ईशाः आसमुद्रक्षितीशास्तेषां । आनाकरथवर्त्मनां = नाकम् आरभ्य इति आनाकं, रथस्य वर्त्म रथवर्त्म, आनाकं, रथवर्त्म येषां ते तेषां । यथाविधिहुताग्नीनां = विधिमनतिक्रम्य इति यथाविधि, यथाविधि हुता अग्नयो यैस्ते तेषां। यथाकामार्चितार्थिनां = काममनतिक्रम्य इति यथाकामं, यथाकामं, अर्चिता अर्थिनः यैस्ते तेषां यथापराधदण्डानां = अपराधम् अनतिक्रम्य इति यथापराधं, यथापराधं दण्डो येषां ते तेषां । यथाकालप्रबोधिनां = कालमनतिक्रम्य यथाकालं, यथाकालं प्रबोधन्त इति यथाकालप्रबोधिनः तेषां । सम्भृतार्थानां—सम्भृतः

( १ ) चतुर्दश विद्याः, यथाह मनुः—

" अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः ।
धर्म्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश " ॥

( २ ) यथाह मनुः—

" गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः ।
अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत् ॥ १ ॥
सन्त्यज्य ग्राम्यमाहारं सर्वं चैव परिच्छदम् ।
पुत्रेषु भार्य्यां निक्षिप्य वनं गच्छेत्सहैव वा ॥ २ ॥"

अर्थो यैस्ते सम्भृतार्थास्तेषां । मितभाषिणां = मितं भाषन्त इति मितभाषिणः तेषां। विजेतुमिच्छवो विजिगीषवस्तेषाम् । गृहमेधिनां- गृहैः ( दारैः ) मेधन्ते संगच्छन्ते इति गृहमेधिनस्तेषां । अभ्यस्तविद्यानां = अभ्यस्ता विद्या यैस्तेऽभ्यस्तविद्यास्तेषां । विषयैषिणां विषज्यन्ते इन्द्रियाणि एषु इति विषयाः ( भोग्यपदार्थाः ) तान् इच्छन्ति इति विषयैषिणः, तेषाम् । वार्द्धके = वृद्धस्य भावो वार्द्धकं तस्मिन् । मुनिवृत्तीनां = मुनीनां वृत्तिरिव वृत्तिर्येषां ते तेषां । तनुत्यजां = तनुं त्यजन्ति इति तनुत्यजस्तेषां । तनुवाग्विभवः = तनुश्चासैा वाक् तनुर्वाक्, सैव विभवो यस्य असैा तनुवाग्विभवः । तद्गुणैः = तेस्य गुणाः तद्गुणास्तैः । अन्वयन्ति ( परस्परं सम्बन्धं गच्छन्ति ) अस्मिन् इत्यन्वयः तम् । रघोः अपत्यानि इति रघवस्तेषाम् । शिशोर्भावः शैशवं तस्मिन् । यूनां भावो यैावनं तस्मिन् ॥ ५—९ ॥

( वाच्यान्तरम् ) तेन मया तनुवाग्विभवेन ........... प्रचोदितेन सता...... रघूणाम् अन्वयः वक्ष्यते ॥ ९ ॥

( सरलार्थ ) वाणीका वैभव थोड़ा पाकर भी इस प्रकार रघुवंश में प्रविष्ट हुआ मैं उनके गुणों से प्रेरित होकर ही विविध गुणविभूषित राघव वंश का वर्णन करता हूँ ॥ ९ ॥

तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः ।
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा ॥ १० ॥

( अन्वयः ) सदसद्व्यक्तिहेतवः सन्तः श्रोतुम् अर्हन्ति । हि हेम्नः विशुद्धिः अपि वा श्यामिका अग्नौ संलक्ष्यते ॥ १० ॥

( सुबोधिनी ) सदसद्व्यक्तिहेतवः (गुणदोषप्रकाशयितारः) सन्तः ( महाजनाः ) तं ( रघुवंशाख्यप्रबन्धं ) श्रोतुं (आकर्णयितुं) अर्हन्ति ( प्रभवन्ति ) हि ( तथाहि ) हेम्नः ( सुवर्णस्य ) विशुद्धिः ( दोषराहित्यं ) श्यामिका अपि ( धात्वन्तरसंसर्गजन्यः दोषोऽपि ) वा, अग्नौ ( वन्हैा ) " एव " संलक्ष्यते ( प्रत्यक्षविषयीभवति ) ॥ १० ॥

( समासः ) सदसद्व्यक्तिहेतवः = सच्च असच्च सदसती तयोर्व्यक्तिः सदसद्व्यक्तिः, तस्याः हेतवः सदसद्व्यक्तिहेतवः ॥ १० ॥

( वाच्यान्तरम् ) सदसद्व्यक्तिहेतुभिः सद्भिः सः श्रोतुम् अर्ह्यते । हि ( जनाः ) हेम्नः विशुद्धिं श्यामिकां वा अग्नौ संलक्षयन्ति ॥ १० ॥

२

( सरलार्थ ) गुण, दोष और सत्यासत्य की परीक्षा करनेवाले सत्पुरुष ही उसके सुनने के योग्य हैं। सोने की शुद्धता और श्यामता अग्नि ही में परखी ( देखी ) जाती है ॥ १० ॥

वैवस्वतो मनुर्नाम माननीयो मनीषिणाम् ।
आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव ॥ ११ ॥

( अन्वयः ) मनीषिणां माननीयः वैवस्वतः नाम मनुः छन्दसां प्रणवः इव महीक्षिताम् आद्यः आसीत् ॥ ११ ॥

( सुबोधिनी ) मनीषिणां ( विदुषां ) माननीयः ( मानार्हः ) [1]वैवस्वतः नाम मनुः ( वैवस्वत इति नाम्ना प्रसिद्धः सूर्यप्रभवः कश्चिन्मनुः ) छन्दसां ( वेदानां ) "आदौ" [2]प्रणवः ( "ॐ" एतत्सदृशः ) इव (यथा) महीक्षितां ( राज्ञां ) "आदौ" आद्यः ( आदिभूतः, प्रथम इति वा ) आसीत् ( अभूत् ) ॥ ११ ॥

( समासः ) मनीषिणां = मनसः ईषिणः मनीषिणस्तेषाम् । ( अथवा ) मनीषा शास्त्रोत्था बुद्धिः, विद्यते येषां, तेषाम् । मानितुं योग्यो माननीयः । वैवस्वतः = विवस्वतः ( सूर्यस्य ) अपत्यं पुमान् वैवस्वतः । प्रकृष्टं यथा तथा नूयते स्तूयतेऽनेनेति प्रणवः । महीक्षितां = महीं क्षियन्ति (ईशते) इति महीक्षितस्तेषां । आदौ भवः आद्यः ॥११॥

( वाच्यान्तरम् ) मनीषिणां माननीयेन वैवस्वतेन नाम्ना मनुना छन्दसां प्रणवेन इव महीक्षिताम् आद्येन अभूयत ॥ ११ ॥

---

( १ ) वैवस्वतो मनुर्नाम :—

प्रथमं परमेश्वरात् ब्रह्मा जातः, तस्य पुत्रः मरीचिः, तस्य कश्यपः, तस्य सूर्यः, तस्य वैवस्वतो मनुः । सत्ययुगे मनुरेव भुवि प्रथमो राजा आसीत् । त्रेतायां तस्य पुत्रः इक्ष्वाकुः अयोध्यायां राजा आसीत् । चन्द्रपुत्रो बुधः वैवस्वतमनुकन्याम् इलाम् उपयेमे । इलायां पुरूरवाः जातः । सच चन्द्रवंशस्य प्रथमो राजेत्यादि पौराणिकमितिवृत्तमत्रानुसन्धेयम् ।

( २ ) ब्राह्मणः वेदाध्ययनारम्भे अध्ययनसमाप्तौ च "ॐ" कारं कुर्यात् । अन्यथा तस्याध्ययनं निष्फलं स्यात्, यथाह मनुः :—

"ब्राह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।
स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्य्यति ॥"

(भावार्थ) "ॐ" कार जैसे सभी ज्ञानियों से पूजा जाता है और हर एक वेद मन्त्रों के आदि में कहा जाता है, उसी प्रकार सूर्य पुत्र मनु भी सब ज्ञानी महात्माओं से पूजे जाते हैं और सभी राजाओं के प्रमुख समझे जाते हैं ॥ ११ ॥

तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः।
दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ॥ १२ ॥

(अन्वयः) शुद्धिमति तदन्वये शुद्धिमत्तरः दिलीपः इति राजेन्दुः क्षीरनिधौ इन्दुः इव प्रसूतः ॥ १२ ॥

(सुबोधिनी) शुद्धिमति (पवित्रे) तदन्वये (वैवस्तमनोर्वंशे) "अन्ववायोऽन्वयो वंशो गोत्रं चाभिजनं कुलम्" इति हलायुधः। शुद्धिमत्तरः (अतिपवित्रः) दिलीपः इति (दिलीप इति नाम्ना प्रसिद्धः) राजेन्दुः [१] (राजचन्द्रः, राजसु श्रेष्ठ इत्यर्थः) क्षीरनिधौ (क्षीरसागरे) इन्दुः इव (चन्द्र इव) प्रसूतः (जातः) ॥ १२ ॥

(समासः) शुद्धिमति = शुद्धिरस्यास्तीति शुद्धिमान् तस्मिन्। तदन्वये = तस्य अन्वयस्तदन्वयस्तस्मिन्। (१) शुद्धिमत्तरः = अतिशयेन शुद्धिमान् इति शुद्धिमत्तरः। राजेन्दुः = राजा इन्दुरिव इति राजेन्दुः। क्षीराणि निधीयन्तेऽस्मिन्निति क्षीरनिधिस्तस्मिन् ॥ १२ ॥
(वाच्यान्तरम्) शुद्धिमत्तरेण राजेन्दुना, इन्दुना इव प्रसूतम् ॥१२॥

(भावार्थ) क्षीर सागर में चन्द्रमा की तरह उसके पवित्र वंश में दिलीप नाम राजेन्द्र उत्पन्न हुआ ॥ १२ ॥

व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महाभुजः।
आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः ॥ १३ ॥
सर्वातिरिक्तसारेण सर्वतेजोभिभाविना।
स्थितः सर्वोन्नतेनोर्वीं क्रान्त्वा मेरुरिवात्मना ॥ १४ ॥

(१) "सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः" इत्यादिशब्देन इन्दोरपि श्रेष्ठार्थवाचकत्वम्, अत एव "राजेन्दुः" अस्य राजश्रेष्ठ इति व्याख्या समीचीनम्।

१ शुद्धिरस्यास्तीति शुद्धिमान् -

आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः ।
आगमैः सदृशारम्भ आरम्भसदृशोदयः ॥ १५ ॥
भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम् ।
अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः ॥ १६ ॥

( अन्वयः ) सः ( दिलीपः ) व्यूढोरस्कः वृषस्कन्धः शालप्रांशुः महाभुजः ( अतएव ) आत्मकर्मक्षमं देहम् आश्रितः क्षात्रः धर्म इव स्थितः, सर्वातिरिक्तसारेण सर्वतेजोभिभाविना सर्वोन्नतेन आत्मना मेरुः इव, ऊर्वी क्रान्त्वा स्थितः, " तथा " आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः आगमैः सदृशारम्भः आरम्भसदृशोदयः, सः यादोरत्नैः अर्णवः इव भीमकान्तैः नृपगुणैः उपजीविनाम् अधृष्यः अभिगम्यः च बभूव ॥ १३-१४-१५-१६ ॥

( सुबोधिनी ) व्यूढोरस्कः ( विशालवक्षाः ) वृषस्कन्धः ( उच्चग्रीवः )[१] शालप्रांशुः ( " शाल" वृक्ष इव अत्युन्नतः ) महाभुजः ( महाबाहुः ) आत्मकर्मक्षमं ( स्वव्यापारानुकूलं ) देहं ( शरीरं ) आश्रितः ( प्राप्तः ) क्षात्रः ( क्षत्रसम्बन्धी ) धर्मः इव ( मूर्तिमान् वीरधर्म इव ) स्थितः, सर्वातिरिक्तसारेण ( सर्वातिशायिना बलेन ) सर्वतेजोभिभाविना ( सकलतेजोभिभवकारिणा ) सर्वोन्नतेन ( अधिकोन्नत्येन ) आत्मना ( स्वेन )[२] मेरुः ( सुमेरुः ) इव ( यथा ) उर्वी ( पृथ्वीं ) क्रान्त्वा ( आक्रम्य ) स्थितः, " तथा " आकारसदृशप्रज्ञः ( आकृतितुल्यबुद्धिः ) प्रज्ञया ( धिया ) सदृशागमः ( अनुरूपशास्त्रः, तस्य यादृशी महती प्रज्ञा आसीत् तथैव अधिगतशास्त्रः बभूव ) आगमैः ( शास्त्रैः ) सदृशारम्भः ( समुचितोद्योगः ) आरम्भसदृशोदयः ( प्रारब्धकर्मानुकूलसिद्धिः ) सः ( दिलीपः ) यादोरत्नैः ( जल-

( १ ) शालप्रांशुः = शालवृक्ष इव महोन्नतकायः, अथ वा—

"यः पद्मलोचनच्छत्रध्वजवज्राङ्किताङ्घ्रिकः ।
चतुर्हस्तः स्वहस्तेन शालप्रांशुः स उच्यते ॥"

( २ ) मिनोति क्षिपति ज्योतींषि उच्चत्वादिति मेरुः ( मि + रु ) सुवर्णमयो मेरुः, अत्युज्ज्वलत्वाद् अत्युच्चत्वाच्च सूर्यादितेज आच्छादयतीत्यर्थः ।

जन्तुभी रत्नैश्च ) अर्णवः ( समुद्रः ) इव, [1]भीमकान्तैः ( भयङ्करैरतिमनोहरैश्च ) नृपगुणैः ( राजगुणैः, तेजःप्रतापादिभिः ) उपजीविनां ( आश्रितानां ) अधृष्यः ( अनभिभवनीयः ) अभिगम्यः ( आश्रयणीयश्च ) बभूव ( अभूत् ) ॥ १३-१४-१५-१६ ॥

( समासः ) व्यूढोरस्कः = व्यूढम् उरो यस्य सः । वृषस्कन्धः = वृषस्य स्कन्ध इव स्कन्धो यस्य सः । शालप्रांशुः = शाल इव प्रांशुः शालप्रांशुः । महाभुजः = महान्तौ भुजौ यस्य सः । आत्मकर्मक्षमम् = आत्मनः कर्म आत्मकर्म तस्य क्षमः तम् । क्षात्रः—क्षत्रस्य अयं क्षात्रः सर्वातिरिक्तसारेण = सर्वेभ्यः अतिरिक्तिः सारो यस्य स तेन । सर्वान् तेजसा अभिभवितुं शीलमस्य स सर्वतेजोभिभावी तेन । सर्वोन्नतेन = सर्वेभ्य उन्नतः सर्वोन्नतस्तेन । आकारसदृशप्रज्ञः = आकारेण सदृशी प्रज्ञा यस्य सः । सदृशागमः = सदृशः आगमो यस्य सः । सदृशारम्भः = सदृशः आरम्भो यस्य सः । आरम्भसदृशोदयः = आरम्भेण-सदृश उदयो यस्य सः । भीमकान्तैः = भीमाश्च कान्ताश्च भीमकान्तास्तैः । नृपगुणैः—नॄन् पान्तीति नृपास्तेषां गुणास्तैः । उपजीविनां = उपजीवन्ति ते उपजीविनस्तेषां । यादोरत्नैः = यादांसि च तानि रत्नानि तैः । धर्षितुं योग्यो धृष्यः न धृष्योऽधृष्यः । अभिगन्तुं योग्योऽभिगम्यः ॥ १३-१४-१५-१६ ॥

( वाच्यपरिवर्तनम् ) व्यूढोरस्केन वृषस्कन्धेन शालप्रांशुना महाभुजेन आत्मकर्मक्षमं देहम् आश्रितेन तेन क्षात्रेण धर्मेण इव स्थितम् । सर्वातिरिक्तसारेण सर्वतेजोभिभाविना सर्वोन्नतेन आत्मना उर्वीं क्रान्त्वा मेरुणा इव तेन स्थितम् । आकारसदृशप्रज्ञेन ........ सदृशागमेन ........ सदृशारम्भेण आरम्भसदृशोदयेन तेन अभूयत । यादोरत्नैः अर्णवेन इव भीमकान्तैः नृपगुणैः उपजीविनाम् अधृष्येण अभिगम्येन च बभूवे ॥ १३-१४-१५-१६ ॥

( भावार्थ ) राजा दिलीप, चौड़ी छाती, बैल का सा सुन्दर और सुदृढ़ कन्धा, ऊँचा कद, बड़ी भुजा आदि होने से मूर्तिमान्

( १ ) भीमकान्तान् नृपगुणान् यथाह कामन्दकः—
" तेजो बलं सत्त्ववत्ता प्रभावः प्राप्तकालता ।
अधृष्यस्य गुणानेतान् नृपस्य मुनयो विदुः ॥ १ ॥"

साक्षात् क्षात्र-धर्म की तरह मालूम होता था। उसकी बुद्धि उसके आकार जैसी थी। शास्त्र बुद्धि के अनुसार था। जैसे मगर आदि के भय से लोग समुद्र से दूर भागते हैं और उससे रत्न मिलने के कारण उसके निकट भी जाते हैं उसी तरह दिलीप का भी स्वभाव कड़ा और कोमल था ॥ १३-१४-१५-१६ ॥

रेखामात्रमपि क्षुण्णादामनोर्वर्त्मनः परम् ।
न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः ॥

( अन्वयः ) नियन्तुः तस्य नेमिवृत्तयः प्रजाः आ मनोः क्षुण्णात् वर्त्मनः परं रेखामात्रम् अपि न व्यतीयुः ॥ १७ ॥

( सुबोधिनी ) नियन्तुः ( नियामकस्य , शिक्षकस्य, सारथेश्च ) तस्य ( दिलीपस्य ) नेमिवृत्तयः ( चक्रधाराव्यापाराः ) "चक्रधारा प्रधिर्नेमिः" इति यादवः, प्रजाः ( जनाः ) आमनोः ( मनुमारभ्य ) क्षुण्णात् ( परम्परया अभ्यस्तात् ) पक्षान्तरे "प्रहतात्" वर्त्मनः ( आचारमार्गात् अध्वनश्च ) परं ( अधिकं ) रेखामात्रं ( रेखाप्रमाणं, मनाङ्मात्रं ) अपि ( ईषदपीत्यर्थः ) न व्यतीयुः न अतिचक्रमुः )॥१७॥

( समासः ) नेमिवृत्तयः = नेमीनां (चक्रधाराणां) वृत्तिरिव वृत्तिः ( व्यापारो ) यासां ताः नेमिवृत्तयः । प्रजाः = प्रकर्षेण जायन्ते इति प्रजाः रेखामात्रं = रेखा प्रमाणमस्य इति रेखामात्रम् ॥ १७ ॥

( वाच्यपरिवर्तनम् ) नियन्तुः तस्य नेमिवृत्तिभिः प्रजाभिः आ-मानोः वर्त्मनः परं रेखामात्रमपि न व्यतीये ॥ १७ ॥

( भावार्थ ) रथ के पहिये की तरह चलने वाली उस शिक्षक ( अथवा रथ हांकने वाले ) की प्रजा मनुके कहे हुए मार्ग से लकीर बराबर भी बाहर ( विरुद्ध ) न चली ॥ १७ )

प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत् ।
सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ॥ १८ ॥

( अन्वयः ) सः प्रजानां भूत्यर्थं एव ताभ्यः बलिं अग्रहीत् हि रविः सहस्रगुणं उत्स्रष्टुं रसम् आदत्ते ॥ १८ ॥

( सुबोधिनी ) सः ( दिलीपः ) प्रजानां ( जनानां ) भूत्यर्थम् एव ( कल्याणायैव, वृद्ध्यर्थम् ) ताभ्यः ( प्रजाभ्यः बलिं ( षष्ठांशरूपं करं ) "भागधेयः करो बलिः" इत्यमरः, [1]अग्रहीत् ( गृहीतवान् ) हि ( यतः ) रविः ( सूर्यः ) सहस्रगुणं ( सहस्रगुणाधिकं ) उत्स्रष्टुं ( दातुं ) रसं ( जलं ) आदत्ते ( गृह्णाति ) ॥ १८ ॥

( समासः ) सहस्रगुणं = सहस्रं गुणा यस्मिन् कर्म्मणि तत् यथा तथा सहस्रगुणम् ॥ १८ )

( वाच्यपरिवर्तनम् ) तेन प्रजानाम् एव भूत्यर्थं ताभ्यः बलिः अग्राहि । रविणा सहस्रगुणम् उत्स्रष्टुं रस आदीयते ॥ १८ ॥

( भावार्थ ) जैसे सूर्य अपनी किरणों से पृथ्वी के रस को खींच कर उससे हजार गुना अधिक जल बरसा कर पृथ्वी की धान्य सम्पत्ति बढ़ाता है उसी प्रकार दिलीप भी प्रजाओं से कर लेकर उससे हजार गुना अधिक उनको सुख देता था ॥ १८ ॥

सेना परिच्छदस्तस्य द्वयमेवार्थसाधनम् ।
शास्त्रेष्वकुण्ठिता बुद्धिर्मौर्वी धनुषि चातता ॥ १९ ॥

( अन्वयः ) सेना, तस्य परिच्छदः ( आसीत् ) शास्त्रेषु अकुण्ठिता बुद्धिः धनुषि आतता मौर्वी " एतत् " द्वयम् एव अर्थसाधनं बभूव ॥ १९ ॥

( सुबोधिनी ) सेना ( †चतुरङ्गबलं ) तस्य ( राज्ञः दिलीपस्य ) परिच्छदः ( उपकरणं ) बभूव । शास्त्रेषु ( विद्यासु ) अकुण्ठिता

( १ ) स राजा दिलीपः प्रजाभ्यः करं गृह्णातिस्म, तेन यज्ञादिकं ततान, ततस्तुष्टैरिन्द्रादिभिर्वृष्टिः, तया अन्नम्, तेन प्रजा-पालनमिति परम्परया बलेः भूत्यर्थता । तथाच :—

" अग्नौ प्रास्ता हुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥" इति

† तच्च यथा :—

" हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम् ।"

( अप्रतिहता ) बुद्धिः ( धीः ) धनुषि ( चापे ) आतता ( विस्तृता ) मौर्वी ( प्रत्यञ्चा ) " एतत् " द्वयम्, एव, अर्थसाधनं ( प्रयोजन-साधनं ) बभूव ॥ १९ ॥

( समासः ) परिच्छदः = परिच्छाद्यते अनेन इति परिच्छदः । अर्थसाधनं = अर्थस्य साधनमित्यर्थसाधनम् ॥ १९ ॥

( वाच्यपरिवर्तनम् ) तस्य सेनया परिच्छदेन ( अभूयत ) शास्त्रेषु अकुण्ठितया बुद्ध्या धनुषि आततया मौर्व्या " एतत् " द्वयेन एव अर्थसाधनेन ( अभूयत ) ॥ १९ ॥

( भावार्थ ) सेना रूप सामग्री वाले उस राजा दिलीप के अर्थ-साधन के दो ही उपाय थे । शास्त्रों में प्रवेश करने वाली तीक्ष्ण बुद्धि और धनुष पर चढ़ी हुई प्रत्यञ्चा ॥ १९ ॥

तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च ।
फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव ॥ २० ॥

( अन्वयः ) संवृतमन्त्रस्य गूढाकारेङ्गितस्य तस्य च प्रारम्भाः प्राक्तनाः संस्कारा इव फलानुमेयाः ॥ २० ॥

( सुबोधिनी ) संवृतमन्त्रस्य ( गुप्तविचारस्य ) गूढाकारेङ्गितस्य ( गुप्ताकारचेष्टितस्य ) तस्य (दिलीपस्य) प्रारम्भाः (सामाद्युपायाः) प्राक्तनाः संस्काराः ( प्रागूजन्मकृतकर्मवासनाः ) इव, फलानुमेयाः ( कार्यानुमेया आसन् ) ॥ २० ॥

( समासः ) संवृतमन्त्रस्य = [1]संवृतः ( यथा अन्ये न विदुः तथा सम्यक् सुरक्षितः ) मन्त्रः येन स तस्य । गूढाकारेङ्गितस्य = आकारश्च इङ्गितश्च आकारेङ्गिते गूढे आकारेङ्गिते यस्य स तस्य । प्रारम्भाः = प्रारभ्यन्त इति प्रारम्भाः । प्राक्तनाः = प्राग् भवाः प्राक्तनाः । फलानु-

---

१. मन्त्रभेदो यथाः—

" षट्कर्णो भिद्यते मन्त्रस्तथा प्राप्तश्च वार्तया ।
इत्यात्मना द्वितीयेन मन्त्रः कार्यो महीभृता ॥ १ ॥
मन्त्रभेदे हि ये दोषा भवन्ति पृथिवीपतेः ॥
न शक्यास्ते समाधातुमिति नीतिविदां मतम् ॥ २ ॥

मेयाः = अनुमातुं योग्याः अनुमेयाः फलैः अनुमेयाः फलानुमेयाः । संस्काराः = संस्क्रियन्त इति संस्काराः ॥ २० ॥

( वाच्यपरिवर्तनम् ) संवृतमन्त्रस्य गूढाकारेङ्गितस्य तस्य प्रारम्भैः प्राक्तनैः संस्कारैः इव फलानुमेयैः बभूवे ॥ २० ॥

( भावार्थ ) जैसे पूर्व जन्म के किए हुए कर्म इस जन्म के फलदर्शन से जाने जाते हैं उसी तरह अपने विचार, आकार और चेष्टा को गुप्त रखने वाले राजा दिलीप के कर्म, कार्य के परिणाम में फल से ही जाने जाते थे ॥ २० ॥

जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थमसक्तः सुखमन्वभूत् ॥ २१ ॥

( अन्वयः ) अत्रस्तः "सन्" आत्मानं जुगोप । अनातुरः "सन्" धर्मं भेजे । अगृध्नुः " सन् " अर्थम् आददे, असक्तः " सन् " सुखम् अन्वभूत् ॥ २१ ॥

( सुबोधिनी ) अत्रस्तः ( भयरहितः ) " सन् " आत्मानं ( शरीरं ) जुगोप ( ररक्ष ) अनातुरः ( अरुग्णः ) " एव " धर्मं ( सुकृतं ) भेजे ( सिषेवे, अर्जितवान् ) अगृध्नुः ( लोभरहितः, निरभिलाषुकः, निःस्पृह इत्यर्थः ) " एव " अर्थं ( धनं ) आददे ( जगृहे ) असक्तः ( आसक्तिरहितः ) " एव " सुखं ( शर्म ) " शर्म शातसुखानि च " इत्यमरः, अन्वभूत् ( अनुभवतिस्म ) ॥ २१ ॥

---

अस्यैव रक्षणे गुणानाह यथा मनुः—

" गिरिपृष्ठं समारुह्य प्रासादं वा रहोगतः ।
अरण्ये निःशलाके वा मन्त्रयेदविभावितः ॥
यस्य मन्त्रं न जानन्ति समागम्य पृथक् जनाः ।
स कृत्स्नां पृथिवीं भुङ्क्ते कोषहीनोऽपि पार्थिवः ॥" इति ।

अत्रैव याज्ञवल्क्यः—

" मन्त्र मूलं यतो राज्यमतो मन्त्रं सुरक्षितम् ।
कुर्याद् यथा तन्नविदुः कर्म्मणामाफलोदयात् ॥"

( समासः ) अत्रस्तः = न त्रस्त अत्रस्तः । अनातुरः = न आतुरः अनातुरः । अगृध्नुः = गृध्यतीति गृध्नुः न गृध्नुः अगृध्नुः । असक्तः = न सक्तः असक्तः ॥ २१ ॥

( वाच्यपरिवर्तनम् ) तेन अत्रस्तेन सता आत्मा जुगुपे । अनातुरेण धर्मः भेजे । अगृध्नुना एव अर्थः आददे । असक्तेन एव सुखम् अन्वभावि ॥ २१ ॥

( भावार्थ ) राजा दिलीप निर्भय हो अपने शरीर की रक्षा करता था । बिना रोगी हुए ही धर्म करता था, लोभ रहित होकर धन पैदा करता था । आसक्ति रहित होकर सुख भोगता था ॥ २१ ॥

ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः ।
गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव ॥ २२ ॥

( अन्वयः ) ज्ञाने मौनं, शक्तौ क्षमा, त्यागे श्लाघाविपर्ययः "अत एव" तस्य गुणाः, गुणानुबन्धित्वात् सप्रसवाः इव ( आसन् ) ॥२२॥

( सुबोधिनी ) ज्ञाने ( परवृत्तान्तज्ञाने ) "सत्यपि" मौनं ( वाङ्नियमनं ) शक्तौ (प्रतीकारसामर्थ्येऽपि) क्षमा ( अपकारसहनं, अपकर्तुरुपेक्षेत्यर्थः ) त्यागे ( दाने, वितरणे ) "सत्यपि" श्लाघाविपर्ययः ( आत्मप्रशंसाभावः ) "इत्थं" तस्य ( दिलीपस्य ) गुणाः ( ज्ञानादयः ) गुणानुबन्धित्वात् ( विरुद्धमौनादिगुणसहचारित्वात् ) सप्रसवाः ( सोदराः ) इव, आसन् ॥ २२ ॥

( समासः ) श्लाघाविपर्ययः = श्लाघायाः विपर्ययः श्लाघाविपर्ययः । गुणानुबन्धित्वात् = गुणान् मौन-क्षमा-श्लाघाविपर्ययादीन् अनुबन्धितुं अविरोधेन गन्तुं शीलं येषां ते गुणानुबन्धिनः तेषां भावः गुणानुबन्धित्वं तस्मात् । सप्रसवाः = समानः ( एकमातृगर्भरूपः ) प्रसवो जन्मस्थानं येषां ते सप्रसवाः ॥ २२ ॥

( वाच्यपरिवर्तनम् ) तस्य ज्ञाने सति मौनेन, शक्तौ ( सत्यां ) क्षमया, त्यागे ( सति ) श्लाघाविपर्ययेण ( अभूयत ) "अत एव" गुणैः सप्रसवैः इव अभूयत ॥ २२ ॥

( भावार्थ ) पराई बातों को जानते हुए भी उस विषय में मौन रहना, शक्ति रहने पर भी अपकारी पर दया करना, दान में अपनी बड़ाई न करना इत्यादि उसके ज्ञानादि गुण, विरुद्धमौनादि गुण के साथ रहने से सहोदर के जैसे मालूम होते थे ॥ २२ ॥

अनाकृष्टस्य विषयैर्विद्यानां पारदृश्वनः ।
तस्य धर्मरतेरासीद्वृद्धत्वं जरसा विना ॥ २३ ॥

( अन्वयः ) विषयैः अनाकृष्टस्य विद्यानां पारदृश्वनः धर्मरतेः तस्य जरसा विना वृद्धत्वम् आसीत् ॥ २३ ॥

( सुबोधिनी ) विषयैः (शब्दरसगन्धादिभिः) अनाकृष्टस्य ( अ-वशीकृतस्य ) विद्यानां (आन्वीक्षिकी-त्रयी-वार्ता-दण्डनीतिरूपाणाम्) पारदृश्वनः ( अन्तं दृष्टवतः ) धर्मरतेः ( धर्मानुरागिणः ) तस्य ( दि-लीपस्य ) जरसा ( वृद्धावस्थया ) विना, " वार्द्धक्यमन्तरैवेत्यर्थः " वृद्धत्वं ( वार्द्धकं ) आसीत् । विषयैः अवशीकृतचित्तस्य तस्य राज्ञो वैराग्यादिगुणसम्पदा ज्ञानतश्च वृद्धत्वमासीदितिभावः ॥ २३ ॥

( समासः ) अनाकृष्टस्य = आकृष्टः ( अपहृतचित्तः ) न भवतीति अनाकृष्टः तस्य । पारदृश्वनः = पारं दृष्टवान् इति पारदृश्वा तस्य । धर्मरतेः = धर्मे रतिर्यस्य स धर्मरतिस्तस्य । वृद्धत्वं = वृद्धस्य भावो वृद्धत्वम् ॥ २३ ॥

( वाच्यपरिवर्तनम् ) विषयैः अनाकृष्टस्य विद्यानां पारदृश्वनः धर्मरतेः तस्य जरसा विना वृद्धत्वेन अभूयत ॥ २३ ॥

( भावार्थ ) पूर्णविद्या प्राप्त किये, विषयों के अधीन न हुए धर्मानुरागी राजा दिलीप वृद्धावस्था के विना ही वृद्ध हुए अर्थात् ( वृद्धोंकासा आचार-विचार-विद्या ज्ञान आदि होने से वृद्ध समझे जाते थे ) ॥ २३ ॥

प्रजानां विनयाधानाद्रक्षणाद्भरणादपि ।
स पिता पितरस्तासां केवलं जन्महेतवः ॥ २४ ॥

( अन्वयः ) सः विनयाधानात् रक्षणात् भरणात् अपि प्रजानां पिता ( आसीत् ) तासां पितरः केवलं जन्महेतवः ( अभूवन् ) ॥२४॥

-१- रूपं शब्दो गन्धरस स्पर्शाश्च विषया अमी ॥ इत्यमरः
इते पञ्च विषयाः बोद्धव्याः ।

( सुबोधिनी ) सः ( दिलीपः ) विनयाधानात् ( शिक्षादानात् ) रक्षणात् ( चौरसाहसिकादिभ्यस्त्राणात् ) भरणात् ( अन्नादिना पोषणात् ) अपि, प्रजानां ( प्रकृतीनां, जनानामित्यर्थः ( पिता, आसीत्, तासां ( प्रजानां ) पितरस्तु, केवलं जन्महेतवः ( जन्मदातारः, उत्पादकाः ) एव अभूवन् ॥ २४ ॥

( समासः ) विनयाधानात्=विनयस्य आधानं विनयाधानं तस्मात् । जन्महेतवः=जन्मनः हेतवो जन्महेतवः ॥ २४ ॥

( वाच्यपरिवर्तनम् ) तेन प्रजानां विनयाधानात् रक्षणात् भरणात् अपि पित्रा अभूयत । तासां पितृभिः केवलं जन्महेतुभिः अभूयत ॥ २४ ॥

( भावार्थ ) नीति-शिक्षा, आपदाओं से रक्षा, अन्न वस्त्रआदिका पूरा २ प्रबन्ध करने से राजा दिलीप ही प्रजाओं का पिता समझा जाता था । उसके पिता तो केवल जन्म देने ही में कारण थे ॥ २४ ॥

स्थित्यै दण्डयतो दण्ड्यान् परिणेतुः प्रसूतये ।
अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः ॥ २५ ॥

( अन्वयः ) दण्ड्यान् स्थित्यै दण्डयतः, प्रसूतये परिणेतुः, मनीषिणः तस्य अर्थकामौ अपि धर्मः एव आस्ताम् ॥ ॥ २५ ॥

( सुबोधिनी ) दण्ड्यान् ( अपराधिनः ) स्थित्यै ( लोकप्रतिष्ठायै ) [1]दण्डयतः ( शिक्षयतः ) [2]प्रसूतये ( सन्तानाय एव ) परिणेतुः ( दारान् परिगृह्णतः ) मनीषिणः ( विदुषः ) तस्य ( दिलीपस्य ) अर्थकामौ ( अर्थकामाभिधौ पुरुषार्थौ ) अपि, धर्मः ( सुकृतं ) एव आस्ताम् ( अभूताम् ) ॥ २५ ॥

---

१ "अदण्ड्यान्दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशोमहदाप्नोति नरकञ्चाधिगच्छति" इति स्मरणात् ।

( २ ) " पुत्रार्थं क्रियते भार्या पुत्रः पिण्डप्रयोजनः "
अत्रैव चाणक्यः—

" पुत्रप्रयोजना दाराः पुत्रः पिण्डप्रयोजनः ।
हितप्रयोजनं मित्रं धनं सर्वप्रयोजनम् ॥ "

-१- परिणेतृ शब्दः । अर्थ, ... , शरीर दण्ड है ।

( समासः ) दण्डयान्=दण्डम् अर्हन्तीति दण्डयास्तान् । अर्थकामौ=अर्थश्च कामश्च अर्थकामौ ॥ २५ ॥

( वाच्यपरिवर्तम् ) स्थित्यै दण्डयान दण्डयतः, प्रसूतये परिणेतुः मनीषिणः तस्य अर्थकामाभ्यां अपि धर्मेण एव अभूयत ॥ २५ ॥

( भावार्थ ) अपराधानुरूप दण्ड प्रयोग के विना लोकमर्यादा पालन रूप धर्म की रक्षा न होगी यह समझ कर अपराधियों को दण्ड देने वाले और पुत्रोत्पत्ति के विना पितृ ऋण से मुक्त न होऊँगा यह समझ कर विवाह करने वाले राजा दिलीप का अर्थ और काम भी धर्मही समझा जाता था ॥ २५ ॥

दुदोह गां स यज्ञाय सस्याय मघवा दिवम् ।
सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥ २६ ॥

( अन्वय ) सः यज्ञाय गां दुदोह, मघवा सस्याय दिवं (दुदोह) "एवं" उभौ सम्पद्विनिमयेन भुवनद्वयं दधतुः ॥ २६ ॥

( सुबोधिनी ) सः ( राजा दिलीपः ) यज्ञाय ( यज्ञं कर्तुं ) गां ( भुवं ) दुदोह ( दुग्धवान्, अर्थाकर्षणेन रिक्तीचकारेत्यर्थः ) मघवा ( इन्द्रः ) सस्याय ( धान्योत्पादनाय ) दिवं ( स्वर्गं ) दुदोह, वृष्टिमुत्पादयामासेत्यर्थः ) "एवं" उभौ ( इन्द्रदिलीपौ ) सम्पद्विनिमयेन ( अन्योन्यं सम्पदः आदानप्रदानाभ्यां ) भुवनद्वयं ( मर्त्यलोकं स्वर्लोकञ्च ) दधतुः ( पुपुषतुः ) दिलीपः यज्ञैरिन्द्रलोकं, इन्द्रश्च वृष्ट्या भूलोकं परिपालयामासेतिभावः ॥ २६ ॥

( समासः ) सम्पद्विनिमयेन=सम्पदो विनिमयः सम्पद्विनिमयः तेन । भुवनद्वयं=भुवनयोः द्वयं भुवनद्वयम् ॥ २६ ॥

( वाच्यपरिवर्तनम् ) तेन यज्ञाय गौः दुदुहे । मघोना सस्याय द्यौः ( दुदुहे ) उभाभ्यां सम्पद्विनिमयेन भुवनद्वयं दधे ॥ २६ ॥

( भावार्थ ) दिलीप ने यज्ञ करने के लिये पृथ्वी को दुहा और इन्द्र ने धान्य के लिये आकाश को दुहा इस प्रकार दिलीप और इन्द्र परस्पर अपनी २ सम्पत्ति के हेर फेर से ( अर्थात् दिलीप यज्ञ करता और इन्द्र जल बरसाता ) दोनों, दोनों-लोक ( स्वर्ग और मृत्यु ) का पालन करते हुए ॥ २६ ॥

न किलानुययुस्तस्य राजानो रक्षितुयशः।
व्यावृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता ॥ २७ ॥

( अन्वयः ) राजानः रक्षितुः तस्य यशः न अनुययुः, किल यत् तस्करता परस्वेभ्यः व्यावृत्ता " सती " श्रुतौ स्थिता ॥ २७ ॥

( सुबोधिनी ) राजानः ( अन्ये भूपतयः ) रक्षितुः ( भयेभ्यस्त्रातुः ) तस्य ( दिलीपस्य ) यशः ( कीर्तिं ) न अनुययुः किल ( नानुचक्रुः किल ) यत् ( यस्मात् कारणात् ) तस्करता ( चौर्यं ) परस्वेभ्यः ( परधनेभ्यः ) व्यावृत्ता ( पृथग्भूता ) "सती" [1]श्रुतौ ( वाचकशब्दे चौर्य इत्यर्थप्रतिपादके तस्कर इति शब्दे एव ) स्थिता ॥ २७ ॥

(समासः) तस्करता = तस्करस्य भावः तस्करता। परस्वेभ्यः = परेषां स्वानि परस्वानि तेभ्यः। रक्षतीति रक्षिता तस्य ॥ २७ ॥

( वाच्यपरिवर्तनम् ) अन्यैः राजभिः रक्षितुः तस्य यशः न अनुयये किल यत् तस्करतया परस्वेभ्यः व्यावृत्तया श्रुतौ स्थितम् ॥२७॥

( भावार्थ ) और और राजे मर्यादापालक दिलीप के यश को चुरा नहीं सके क्योंकि उसके प्रभाव से राज्य में चोर ही न थे। इसलिये उसके राज्यमें " चोरी " यह शब्द अपने विषयभूत धनादि द्रव्य से पृथक् होकर आकाशकुसुम की तरह केवल नाम शेष रहा ॥ २७ ॥

द्वेष्योऽपि संमतः शिष्टस्तस्यार्तस्य यथौषधम्।
त्याज्यो दुष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता ॥ २८ ॥

( अन्वयः ) शिष्टः द्वेष्यः अपि, आर्तस्य औषधं यथा, तस्य सम्मतः ( आसीत् ) दुष्टः प्रियः अपि उरगक्षता अङ्गुली इव, ( तस्य ) त्याज्यः ( अभूत् ) ॥ २८ ॥

( सुबोधिनी ) शिष्टः ( कुलीनो जनः ) द्वेष्यः ( शत्रुः ) अपि, आर्तस्य ( रोगिणः ) औषधं, यथा ( इव ) तस्य ( राज्ञो दिलीपस्य ) सम्मतः ( इष्टः, प्रियः ) आसीत्। दुष्टः ( दुर्जनः ) प्रियः ( प्रेमास्पदी-

---

( १ ) श्रूयते इति श्रुतिः ध्वनिः ध्वनौ रवमात्रे स्थिता तस्करता केवलं श्रूयत एव नहि परस्वार्थं प्रवर्तत इत्यर्थः।

भूतः, सुहृदपि ) उरगक्षता ( सर्पदष्टा ) अङ्गुलीव ( करशाखेव ) तस्य, त्याज्यः ( हेयः ) अभूत् ( आसीत् ) "छिन्द्याद्बाहुरपि दुष्टमात्मनः" इतिन्यायात् ॥ २८ ॥

( समासः ) उरसा गच्छतीत्युरगः, तेन क्षता उरगक्षता। द्वेष्टुं योग्यो द्वेष्यः। त्यक्तुं योग्यस्त्याज्यः ॥ २८ ॥

( वाच्यपरिवर्तनम् ) शिष्टेन द्वेष्येन अपि औषधेन यथा सम्मतेन अभूयत। दुष्टेन प्रियेण अपि उरगक्षतया अङ्गुल्या इव त्याज्येन अभूयत ॥ २८ ॥

( भावार्थ ) जिस प्रकार कडुआ औषध भी रोगी को प्यारा होता है उस प्रकार सज्जन विद्वान्, बैरी भी उसको प्यारा था और दुष्ट, प्यारा भी सांप की काटी अङ्गली की तरह त्याज्य था ॥ २८ ॥

तं वेधा विदधे नूनं महाभूतसमाधिना।
तथाहि सर्वे तस्यासन् परार्थैकफला गुणाः ॥ २९ ॥

( सुबोधिनी ) वेधाः ( विधाता ) तं ( दिलीपं ) महाभूतसमाधिना ( पृथिव्यप्तेजोवाय्वाकाशानां कारणसामग्र्या ) विदधे ( ससर्ज ) नूनं ( ध्रुवं ) तथाहि, तस्य ( दिलीपस्य ) सर्वे गुणाः ( दयादानदाक्षिण्यादिनिखिलगुणाः ) "रूपरसादिमहाभूतगुणवदेव" परार्थैकफलाः ( परप्रयोजनकाः ) आसन् ( अभूवन् ) ॥ २९ ॥

( समासः ) महाभूतसमाधिना = समाधीयते अनेन इति समाधिः, महाभूतानां समाधिः महाभूतसमाधिः तेन। परार्थैकफलाः = परस्य अर्थं परार्थः, परार्थः ( परप्रयोजनमेव ) एकं ( मुख्यं ) फलं येषां ते परार्थैकफलाः। विदधाति इति वेधाः ॥ २९ ॥

( वाच्यान्तरम् ) वेधसा महाभूतसमाधिना सः विदधे नूनं तथाहि तस्य सर्वैः गुणैः परार्थैकफलैः अभूयत ॥ २९ ॥

( भावार्थ ) ब्रह्मा ने जिस सामग्री से पंचमहाभूत ( पृथ्वी-जल ) अग्नि वायु-आकाश ) को बनाया उसी सामग्री से मानो दिलीप को भी बनाया अतएव पंचमहाभूत के गुणों की तरह इसके भी सारे गुण पराये प्रयोजन वाले ही थे ॥ २९ ॥

स वेलावप्रवलयां परीखीकृतसागराम् ।
अनन्यशासनामुर्वीं शशासैकपुरीमिव ॥ ३० ॥

( अन्वयः ) सः वेलावप्रवलयां परिखीकृतसागराम् अनन्यशासनाम् उर्वीम् एकपुरीम् इव शशास ॥ ३० ॥

( सुबोधिनी ) सः ( दिलीपः ) वेलावप्रवलयां ( समुद्रकूलप्राकारवेष्टनां ) परिखीकृतसागरां ( दुर्गवेष्टनीकृतसमुद्रां ) अनन्यशासनां ( दिलीपेतरशासनरहितां ) उर्वीं ( पृथ्वीं ) एकपुरीमिव ( एकनगरमिव ) शशास ( अनुशासितवान् ) आसमुद्रं विनायासेन अप्रतिहतं नियमयामासेत्यर्थः ) ॥ ३० ॥

( वाच्यपरिवर्तनम् ) तेन वेलावप्रवलया परिखीकृतसागरा अनन्यशासना उर्वी एकपुरी इव शशासे ॥ ३० ॥

( समासः ) वेलावप्रवलयां = वप्राण्येव वलयाः वप्रवलयाः, वेला एव वप्रवलया यस्यास्तां वेलावप्रवलयां । परीखीकृतसागरां = परितः खातं परिखा, न परिखा, अपरिखा, अपरिखाः परिखाः सम्पद्यमानाः कृता इति परिखीकृताः, परिखीकृताः सागरा यस्यास्ताम् । अनन्यशासनां = न अन्यं शासनं यस्याः सा तां । एकपुरीं = एका चासौ पुरी एकपुरी तां ॥ ३० ॥

( भावार्थ ) वह आसमुद्रान्त ( समुद्रपर्यन्त ) पृथ्वी का साधारण एक नगरी की तरह शासन करता था ॥ ३० ॥

तस्य दाक्षिण्यरूढेन नाम्ना मगधवंशजा ।
पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा ॥ ३१ ॥

( अन्वयः ) तस्य मगधवंशजा दाक्षिण्यरुढेन नाम्ना, अध्वरस्य दक्षिणा पत्नी इव, सुदक्षिणा इति आसीत् ॥ ३१ ॥

( सुबोधिनी ) तस्य ( दिलीपस्य ) मगधवंशजा ( मगधवंशोद्भवा ) दाक्षिण्यरूढेन ( परच्छन्दानुवर्तनप्रसिद्धेन ) " दक्षिणः सरलोदारपरच्छन्दानुवर्तिषु " इति शाश्वतः । नाम्ना ( अभिधेयेन ) अध्वरस्य ( यागस्य ) दक्षिणा ( दक्षिणाख्या ) पत्नीव, सुदक्षिणा इति ( सुदक्षिणेति नाम्ना प्रसिद्धा पत्नी आसीत् ) तथा च श्रुतिः— " यज्ञो गन्धर्वस्तस्य दक्षिणाप्सरसः ॥ ३१ ॥

( समासः ) मगधवंशजा = मगधस्य वंशः मगधवंशः तस्मिन् जाता मगधवंशजा । दाक्षिण्यरूढेन = दक्षिणस्य भावः, दाक्षिण्यं तेन रूढं तेन ॥ ३१ ॥

( वाच्यपरिवर्तनम् ) मगधवंशजया नाम्ना ( उपलक्षितया ) पत्न्या ) दक्षिणया इव अभूयत ॥ ३१ ॥

( भावार्थ ) यज्ञ की पत्नी दक्षिणा की तरह, अधिक चतुर होने के कारण सु-दक्षिणा ऐसा नाम पाई हुई मगधवंश की कन्या उसकी धर्मपत्नी थी ॥ ३१ ॥

कलत्रवन्तमात्मानमवरोधे महत्यपि ।
तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः ॥ ३२ ॥

( अन्वयः ) वसुधाधिपः अवरोधे महति अपि मनस्विन्या तया लक्ष्म्या च आत्मानं कलत्रवन्तं मेने ॥ ३२ ॥

( सुबोधिनी ) वसुधाधिपः ( भूमिपः राजा दिलीपः ) अवरोधे ( अन्तःपुरवर्गे ) महति ( पुष्कले ) सत्यपि ( वर्तमानेऽपि ) मनस्विन्या ( प्रशस्तचित्तया, पतिचित्तानुवर्तिन्या ) तया ( सुदक्षिणया ) लक्ष्म्या ( राज्यश्रिया च ) आत्मानं ( स्वं ) कलत्रवन्तं ( पत्नीवन्तं ) मेने ( मन्यते स्म ) ॥ ३२ ॥

( समासः ) वसुधाधिपः = वसुधाया अधिप इति वसुधाधिपः। मनस्विन्या = प्रशस्तं मनो यस्याः सा मनस्विनी तया । कलत्रवन्तं = कलत्रं विद्यते यस्याऽसौ कलत्रवान् तम् ॥ ३२ ॥

( वाच्यपरिवर्तनम् ) वसुधाधिपेन आत्मा कलत्रवान् मेने ॥३२॥

( भावार्थ ) उसके रनवास में यद्यपि बहुत सी रानियां थीं तौ भी वह अपने को सुदक्षिणा एवं लक्ष्मी से ही स्त्रीवाला समझता था ॥ ३२ ॥

तस्यामात्मानुरूपायामात्मजन्मसमुत्सुकः ।
विलम्बितफलैः कालं स निनाय मनोरथैः ॥ ३३ ॥

( अन्वयः ) सः आत्मानुरूपायां तस्यां आत्मजन्मसमुत्सुकः " सन् " विलम्बितफलैः मनोरथैः कालं निनाय ॥ ३३ ॥

( सुबोधिनी ) सः ( राजा दिलीपः ) आत्मानुरूपायां ( आत्मसमायां ) तस्यां ( सुदक्षिणायां ) आत्मजन्मसमुत्सुकः ( पुत्राभिलाषुकः ) "सन्" विलम्बितफलैः ( कालप्रतीक्षापेक्षैः ) मनोरथैः ( अभिलाषैः, कदा मे पुत्रो भविष्यतीत्यात्मकैः ) कालं ( समयं ) निनाय ( यापयामास ) ॥ ३३ ॥

( समासः ) आत्मानुरूपायां = आत्मनः अनुरूपा आत्मानुरूपा तस्यां । आत्मजन्मसमुत्सुकः = आत्मनः "सकाशात्" जन्म यस्यासौ आत्मजन्मा, तस्मिन् समुत्सुक इत्यात्मजन्मसमुत्सुकः । विलम्बितफलैः = विलम्बितं फलं ( पुत्रप्राप्तिरूपं ) येषां ते विलम्बितफलाः, तैः ॥ ३३ ॥

( वाच्यपरिवर्तनम् ) तेन आत्मजन्मसमुत्सुकेन सता कालः निन्ये ॥ ३३ ॥

( भावार्थ ) दिलीप ने मनभावती अपनी रानी में अपने सदृश पुत्र उत्पन्न हो इस अभिलाषा से कुछ समय बिताया ॥ ३३ ॥

सन्तानार्थाय विधये स्वभुजादवतारिता ।
तेन धूर्जगतो गुर्वी सचिवेषु निचिक्षिपे ॥ ३४ ॥

( अन्वयः ) तेन सन्तानार्थाय विधये स्वभुजाद् अवतारिता जगतः गुर्वी धूः सचिवेषु निचिक्षिपे ॥ ३४ ॥

( सुबोधिनी ) तेन ( राज्ञा ) सन्तानार्थाय ( पुत्रप्रयोजनाय ) विधये ( अनुष्ठानाय ) स्वभुजात् ( निजबाहोः ) अवतारिता ( उत्तारिता ) जगतः ( संसारस्य ) गुर्वी ( महती ) धूः ( कार्यभारः ) सचिवेषु ( अमात्यवर्गेषु ) निचिक्षिपे ( निहिता ) ॥ ३४ ॥

( समासः ) सन्तानार्थाय = सन्तानः अर्थः ( प्रयोजनं ) यस्य असौ सन्तानार्थः, तस्मै । स्वभुजात् = स्वस्य भुजः स्वभुजः तस्मात् ॥ ३४ ॥

( वाच्यपरिवर्तनम् ) सः सन्तानार्थाय विधये स्वभुजाद् अवतारितां जगतः गुर्वीं धुरं सचिवेषु निचिक्षेप ॥ ३४ ॥

( भावार्थ ) सन्तान प्राप्ति के लिये अनुष्ठान करने के हेतु राजा दिलीप ने राज्य पालन का भार मन्त्रियों को सौंपा ॥ ३४ ॥

अथाभ्यर्च्य विधातारं प्रयतौ पुत्रकाम्यया ।
तौ दम्पती वशिष्ठस्य गुरोर्जग्मतुराश्रमम् ॥ ३५ ॥

( अन्वयः ) अथ प्रयतौ तौ दम्पती पुत्रकाम्यया विधातारम् अभ्यर्च्य गुरोः वसिष्ठस्य आश्रमं जग्मतुः ॥ ३५ ॥

( सुबोधिनी ) अथ ( मन्त्रिषु धुरः स्थापनानन्तरं ) प्रयतौ ( पवित्रौ ) तौ, दम्पती ( सुदक्षिणादिलीपौ ) पुत्रकाम्यया ( पुत्रेच्छया ) विधातारं ( ब्रह्माणं ) अभ्यर्च्य ( सम्पूज्य ) गुरोः वसिष्ठस्य ( वसिष्ठनामधेयस्य महर्षेः कुलगुरोः ) आश्रमं ( पर्णकुटीं ) जग्मतुः ( प्रतस्थतुः ) ॥ ३५ ॥

( समासः ) पुत्रकाम्यया = आत्मनः पुत्रेच्छा पुत्रकाम्या तया ॥ ३५ ॥

( वाच्यपरिवर्तनम् ) अथ प्रयताभ्यां ताभ्यां दम्पतीभ्यां पुत्रकाम्यया विधातारम् अभ्यर्च्य गुरोः वसिष्ठस्य आश्रमः जग्मे ॥ ३५ ॥

( भावार्थ ) उसके बाद दूसरे दिन नित्य कर्म करने के उपरान्त पवित्र हो विधाता का पूजन कर पुत्र की कामना से वे दोनों ( रानी और राजा ) गुरु वसिष्ठ के आश्रम की ओर चले ॥ ३५ ॥

स्निग्धगम्भीरनिर्घोषमेकं स्यन्दनमास्थितौ ।
प्रावृषेण्यं पयोवाहं विद्युदैरावताविव ॥ ३६ ॥

( अन्वयः ) स्निग्धगम्भीरनिर्घोषम् एकम् स्यन्दनम् आस्थितौ ( अत एव ) प्रावृषेण्यं ( एकं ) पयोवाहं ( आस्थितौ ) विद्युदैरावतौ इव ( स्थितौ ) ॥ ३६ ॥

( सुबोधिनी ) स्निग्धगम्भीरनिर्घोषं ( मधुरगम्भीररवं ) एकं स्यन्दनं ( रथं ) आस्थितौ ( आरूढौ, तौ ) प्रावृषेण्यं ( वर्षाकालिकं ) ( एकं ) पयोवाहं ( मेघं ) ( आरूढौ ) विद्युदैरावतौ (तडिदैरावतौ) इव ) स्थितौ ॥ ३६ ॥

( समासः ) स्निग्धगम्भीरनिर्घोषं = स्निग्धः गम्भीरः स्निग्धगम्भीरः, स्निग्धगम्भीरः निर्घोषो यस्य स तं । प्रावृषेण्यं = प्रावृषि भवः प्रावृषेण्यः तम् । विद्युदैरावतौ = इरावान् = समुद्रः, इरावति भवः ऐरावतः, विद्युच्च ऐरावतश्च विद्युदैरावतौ ॥ ३६ ॥

( वाच्यपरिवर्तनम् ) स्निग्धगम्भीरनिर्घोषम् एकम् स्यन्दनम् आस्थिताभ्यां ताभ्यां प्रावृषेण्यं पयोवाहं विद्युदैरावताभ्यां इव जग्मे॥३६॥

( भावार्थ ) वर्षा के बादल पर बिजली और ऐरावत की तरह मनोहर और गम्भीर शब्द वाले रथ पर वे दोनों चले ॥ ३६ ॥

माभूदाश्रमपीडेति परिमेयपुरःसरौ ।
अनुभावविशेषात्तु सेनापरिवृताविव ॥ ३७ ॥

( अन्वयः ) "पुनः किम्भूतौ" आश्रमपीड़ा माभूद् इति परिमेय-पुरःसरौ ( स्थितौ ) अनुभावविशेषात् तु सेनापरिवृतौ इव (अभूताम्)॥ ३७ ॥

( सुबोधिनी ) "पुनः तौ दम्पती" आश्रमपीड़ा ( वशिष्ठाश्रम-बाधा ) माभूत् ( मास्तु ) इति ( हेतोः ) परिमेयपुरःसरौ परिमितानुचरौ ) स्थितौ, अनुभावविशेषात् ( अनुभावातिशयात् ) तु, सेनापरिवृतौ ( सैन्ययुतौ ) इव, परिदृश्यमानौ ( जग्मतुः ) ॥ ३६ ॥

( समासः ) आश्रमपीड़ा = आश्रमस्य पीड़ा आश्रमपीड़ा। पुरः सरन्ति इति पुरःसराः, परिमातुं शक्याः परिमेयाः, परिमेयाः पुरः-सराः ययोस्तौ । अनुभावविशेषात् = अनुभावस्य विशेषः तस्मात् । सेनापरिवृतौ = सेनया परिवृतौ सेनापरिवृतौ ॥ ३७ ॥

( वाच्यपरिवर्तनम् ) आश्रमपीड़या मा भावि इति परिमेयपुरः-सराभ्यां तु ( किन्तु ) अनुभावविशेषात् सेनापरिवृताभ्याम् इव द्वाभ्यां ( स्थिताभ्यां जग्मे ) ॥ ३७ ॥

( भावार्थ ) विशेष सैन्य साथ रहने से गुरु महाराज के आश्रम को बाधा पहुँचेगी इस आशङ्का से इने गिने सिपाहियों को लेकर चले परन्तु अलौकिक तेजस्विता के कारण सेना से घिरे हुए की तरह जाने जाते थे ॥ ३७ ॥

सेव्यमानौ सुखस्पर्शैः शालनिर्यासगन्धिभिः ।
पुष्परेणूत्किरैर्वातैराधूतवनराजिभिः ॥ ३८ ॥

( अन्वयः ) सुखस्पर्शैः शालनिर्यासगन्धिभिः पुष्परेणूत्किरैः आधूतवनराजिभिः वातैः सेव्यमानौ ॥ ३८ ॥

(सुबोधिनी) "पुनः कथंभूतौ" सुखस्पर्शैः (प्रियस्पर्शैः) शालनिर्यासगन्धिभि; (सर्जतरुनिस्यन्दवद्भिः। पुष्परेणूत्किरैः (कुसुमरेणुवर्षुकैः) आधूतवनराजिभिः (ईषत्कम्पितवनपंक्तिभिः) वातैः (पवनैः) सेव्यमानौ (परिचर्य्यमाणौ) ॥ ३८ ॥

(समासः) सुखस्पर्शैः...सुखः स्पर्शो येषान्ते तैः। शालनिर्यासगन्धिभिः=शालेभ्यः निर्यासाः गन्धा विद्यन्ते येषान्ते तैः। पुष्परेणूत्किरैः=उत्किरन्तीत्युत्किराः, पुष्पाणां रेणवः पुष्परेणवः, तेषामुत्किरास्तैः। आधूतवनराजिभिः=आधूताः वनराजयो यैस्ते तैः ॥ ३८ ॥

(वाच्यपरिवर्तनम्) शालनिर्यासगन्धिनः पुष्परेणूत्किरान् आधूतवनराजीन् सुखस्पर्शान् वातान् सेवमानाभ्यां ताभ्यां जग्मे ॥ ३८ ॥

(भावार्थ) स्पर्श सुख देने वाली नाना प्रकार के पुष्पों के परागों वाली वायु, मार्ग में इन दोनों की सेवा करती हुई ॥ ३८ ॥

मनोभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः।
षड्जसंवादिनीः केका द्विधा भिन्ना शिखण्डिभिः ॥ ३९ ॥

(अन्वयः) रथनेमिस्वनोन्मुखैः शिखण्डिभिः द्विधा भिन्ना षड्जसंवादिनीः मनोभिरामाः केकाः शृण्वन्तौ ॥ ३६ ॥

(सुबोधिनी) रथनेमिस्वनोन्मुखैः (स्यन्दनचक्रध्वनिमाकर्ण्य सम्मुखमागतैः, मेघध्वनिशङ्कया उन्नमितमुखैरित्यर्थः) शिखण्डिभिः (मयूरैः) द्विधा भिन्ना (शुद्धविकृतभेदेन द्विप्रकाराः) षड्जसंवादिनीः (रागप्रतिपादकषड्जस्वरानुकारिणीः) मनोभिरामाः (हृदयाह्लादिनीः) केकाः (मयूरवाणीः) शृण्वन्तौ (आकर्णयन्तौ) ॥ ३६ ॥

(समासः) रथनेमिस्वनोन्मुखैः=रथस्य नेमी रथनेमी, तयोः स्वनः रथनेमिस्वनः, उत् मुखं येषान्ते उन्मुखाः, रथनेमिस्वनेन उन्मुखाः रथनेमिस्वनोन्मुखास्तैः। शिखण्डः (प्रशस्तं पुच्छं) अस्ति एषान्ते शिखण्डिनः तैः। षड्जसंवादिनीः=षड्भ्यः स्थानेभ्यः जातः [1]षड्जः, षड्जेन संवादिन्यः षड्जसंवादिन्यस्ताः षड्जसंवादिनीः।

(१) नासाकण्ठमुरस्तालुजिह्वादन्तांश्च संस्पृशन्।

मनोभिरामाः—अभिरमते मनो यासु ता अभिरामाः, मनसः अभिरामा मनोभिरामास्ताः । केकाः = के ( मुर्ध्नि ) कायन्ति ( ध्वनन्ति ) इति केकाः ॥ ३९ ॥

( वाच्यपरिवर्तनम् )......शृण्वद्भ्यां ताभ्यां जग्मे ॥ ३९ ॥

( भावार्थ ) रथ के पहियों से उत्पन्न शब्दों को मेघ-ध्वनि समझ कर ऊपर मुख उठाये हुए मोरों की दो प्रकार की मनोहरवाणी सुनते हुए चले ॥ ३९ ॥

परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु ।
मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु ॥ ४० ॥

( अन्वयः ) "पुनः कथम्भूतौ" अदूरोज्झितवर्त्मसु स्यन्दनाबद्धदृष्टिषु मृगद्वन्द्वेषु परस्पराक्षिसादृश्यं पश्यन्तौ ॥ ४० ॥

( सुबोधिनी ) "पुनः कथम्भूतौ" अदूरोज्झितवर्त्मसु ( पार्श्वत एव दत्तमार्गेषु ) स्यन्दनाबद्धदृष्टिषु ( रथदत्तदृष्टिषु ) मृगद्वन्द्वेषु ( हरिणमिथुनेषु ) परस्पराक्षिसादृश्यं ( अन्योन्यं नेत्रसमानतां ) पश्यन्तौ ( अवलोकयन्तौ ) ॥ ४० ॥

( समासः ) अदूरोज्झितवर्त्मसु = न दूरं अदूरम्, अदूरं यथा तथा उज्झितं वर्त्म यैस्ते तेषु । स्यन्दनाबद्धदृष्टिषु = स्यन्दने आबद्धे दृष्टी ययोस्ते स्यन्दनाबद्धदृष्टयस्तेषु । मृगद्वन्द्वेषु = मृग्यश्च मृगाश्च मृगाः, तेषां द्वन्द्वः तेषु । परस्पराक्षिसादृश्यं = सदृशस्य भावः सादृश्यम् अक्ष्णां सादृश्यम् अक्षिसादृश्यं, परस्परम् अक्षिसादृश्यं परस्पराक्षिसादृश्यम् ।

---

षड्भ्यः सञ्जायते यस्मात्तस्मात्षड्ज इतिस्मृतः । इति सङ्गीतसमयसारः ॥ अयञ्च तन्त्रीकण्ठात्प्रादुर्भूतः स्वरविशेषः तथाच :—

निषादर्षभगान्धारषड्जमध्यमधैवताः ।
पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥

स्वराणाम् असाधारणान् उच्चारयितृभेदान् यथाह नारद :—

"षड्जं रौति मयूरो हि गावो नर्दन्ति चर्षभम् ।
अजा विरौति गान्धारं क्रौञ्चो नदति मध्यमम् ॥
पुष्पसाधारणे काले कोकिलो रौति पञ्चमम् ।
अश्वश्च धैवतं रौति निषादं रौति कुञ्जरः ॥

( वाच्यपरिवर्तनम् ) पश्यद्भ्यां ताभ्यां दम्पतीभ्यां जग्मे ॥४०॥

( भावार्थ ) रथकी ओर एकटक देखते हुए और रथके समीपही खड़े हुए हरिण और हरिणियों मे वे दोनों एक दूसरे के नेत्र की समानता देखते हुए ॥ ४० ॥

श्रेणीबन्धाद्वितन्वद्भिरस्तम्भां तोरणस्रजम् ।
सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिताननौ ॥ ४१ ॥

( अन्वयः ) श्रेणीबन्धात् अस्तम्भां तोरणस्रजं वितन्वद्भिः कलनिर्ह्रादैः सारसैः क्वचिद् उन्नमिताननौ ॥ ४१ ॥

( सुबोधिनी ) श्रेणीबन्धात् ( पङ्क्तिबन्धनात् ) अस्तम्भां ( आधारभूतस्तम्भरहितां ) तोरणस्रजं ( बहिर्द्वारमालां ) " तोरणोऽस्त्री बहिर्द्वारम् " इत्यमरः, वितन्वद्भिः ( कुर्वद्भिः ) कलनिर्ह्रादैः ( अस्पष्टमधुरनिःस्वनैः ) सारसैः ( सारसपक्षिभिः ) क्वचिद्, उन्नमिताननौ ( ऊर्ध्वाननौ ) ॥ ४१ ॥

( समासः ) श्रेणीबन्धात् = श्रेण्या बन्धः श्रेणीबन्धस्तस्मात् । अस्तम्भां = न विद्यते स्तम्भः ( आधारः ) यस्याः सा तां । तोरणस्रजं = तोरणस्य ( बहिर्द्वारस्य ) स्रक् तोरणस्रक् तां । कलनिर्ह्रादैः = कलः ( मधुरास्फुटः ) निर्ह्रादो येषान्ते तैः । उन्नमिते आनने ययोस्तौ ॥ ४१ ॥

( वाच्यपरिवर्तनम् ) उन्नमिताननाभ्यां ताभ्यां जग्मे ॥ ४१ ॥

( भावार्थ ) पांति बान्ध कर चलने से बिना खम्भे के बन्धनवार की तरह बने हुए, मनोहर शब्द करने वाले सारसों करके कभी २ ऊपर की ओर मुख उठवाए हुवे वे दोनो चले ॥ ४१ ॥

पवनस्यानुकूलत्वात्प्रार्थनासिद्धिशंसिनः ।
रजोभिस्तुरगोत्कीर्णैरस्पृष्टालकवेष्टनौ ॥ ४२ ॥

( अन्वयः ) प्रार्थनासिद्धिशंसिनः ( कार्यसिद्धिसूचकस्य ) पवनस्य ( वायोः ) अनुकूलत्वात् ( गन्तव्यदिगभिमुखत्वात् ) तुरगोत्कीर्णैः ( अश्वखुरोत्क्षिप्तैः ) रजोभिः ( धूलिभिः ) अस्पृष्टालकवेष्टनौ ( असँल्लग्नचूर्णकुन्तलोष्णीषौ ॥ ४२ ॥

( समासः ) प्रार्थनासिद्धिशंसिनः = प्रार्थनायाः सिद्धिं शंसत इति प्रार्थनासिद्धिशंसी तस्य। [1]अनुकूलत्वात् = अनुकूलस्य भावः अनुकूलत्वं तस्मात्। तुरगोत्कीर्णैः = तुरगेभ्यः उत्कीर्णानि तुरगोत्कीर्णानि तैः। अस्पृष्टालकवेष्टनौ = अस्पृष्टाः "देव्याः" अलकाः, वेष्टनश्च ( राज्ञः उष्णीषश्च ) ययोस्तौ ॥ ४२ ॥

( भावार्थ ) मनोरथ की सिद्धि को सूचित करने वाली वायु की गति अनुकूल होने के कारण घोड़ों के खुरों से उठी हुई धूल से राजा दिलीप का सिरपेच और रानी सुदक्षिणा का अलक छुआ नहीं गया ॥ ४२ ॥

सरसीष्वरविन्दानां वीचिविक्षोभशीतलम्।
आमोदमुपजिघ्रन्तौ स्वनिःश्वासानुकारिणम् ॥ ४३ ॥

( अन्वयः ) सरसीषु वीचिविक्षोभशीतलं स्वनिश्वासानुकारिणं अरविन्दानाम् आमोदम् उपजिघ्रन्तौ ॥ ४३ ॥

( सुबोधिनी ) सरसीषु ( कासारेषु ) वीचिविक्षोभशीतलं ( तरङ्गक्षोभशीतलं ) स्वनिःश्वासानुकारिणं ( स्वनिःश्वासानुकरणशीलं ) अरविन्दानां ( कमलानां ) आमोदं ( सुगन्धि ) उपजिघ्रन्तौ (घ्राणेन गृह्णन्तौ तौ जग्मतुः ॥ ४३ ॥

(समासः) वीचिविक्षोभशीतलं = वीचीनां विक्षोभः वीचिविक्षोभः तेन शीतलस्तं। स्वनिःश्वासानुकारिणं = स्वस्य निःश्वासः स्वनिःश्वासस्तम् अनुकर्तुं शीलं यस्य सः स्वनिःश्वासानुकारी तम् ॥ ४३ ॥

( वाच्यपरिवर्तनम् ) उपजिघ्रद्भ्यां (ताभ्यां जग्मे) ॥४३॥

( भावार्थ ) अपने मुखवायु की सुगन्धि की बराबरी करने वाले सरोवरों के तरङ्गों के झकोरों से शीतल ऐसी कमल की सुगन्धि को सूँघते हुए ॥ २४ ॥

ग्रामेष्वात्मविसृष्टेषु यूपचिन्हेषु यज्वनाम्।
अमोघाः प्रतिगृह्णन्तावर्घ्यानुपदमाशिषः ॥ ४४ ॥

[1] शकुनशास्त्रेऽभिमुखपवनस्य कार्यसिद्धिकरत्वमभिहितम्।

( अन्वयः ) आत्मविसृष्टेषु यूपचिन्हेषु ग्रामेषु यज्वनाम् अमोघाः आशिषः अर्घ्यानुपदं प्रतिगृह्णन्तौ ॥ ४४ ॥

( सुबोधिनी ) आत्मविसृष्टेषु ( स्वदत्तेषु ) यूपचिन्हेषु ( दारुलक्षणेषु ) ग्रामेषु ( अभिजनेषु ) अमोघाः ( अव्यर्थाः ) यज्वनां ( विधिवदिष्टवतां ) आशिषः ( आशीर्वादान् ) अर्घ्यानुपदं ( अर्घ्यस्य अव्यवहितोत्तरं ( प्रतिगृह्णन्तौ ) ॥ ४४ ॥

( समासः ) आत्मविसृष्टेषु = आत्मना विसृष्टाः आत्मविसृष्टास्तेषु । यूपचिन्हेषु = यूपा एव चिन्हानि येषां तेषु । [1]अर्घ्यानुपदं = अर्घ्यस्य अनुपदम् अर्घ्यानुपदम् ॥ ४४ ॥

( वाच्यपरिवर्तनम् )································प्रतिगृह्णद्भयां ( ताभ्यां जग्मे ) ॥ ४४ ॥

( सरलार्थ ) यज्ञ के खम्भों से चिन्हित, दान किये हुए अपने ग्रामोंमें अर्घ्य के अनन्तर ब्राह्मणोंके सफल आशिर्वाद लेते हुये ॥४४॥

हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान् ।
नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम् ॥ ४५ ॥

( अन्वयः ) हैयङ्गवीनम् आदाय उपस्थितान् घोषवृद्धान् वन्यानां मार्गशाखिनां नामधेयानि पृच्छन्तौ ॥ ४५ ॥

( सुबोधिनी ) हैयङ्गवीनं ( पूर्वदिनभवं गोघृतं ) आदाय ( राज्ञे निवेदियितुं करे गृहीत्वा ) उपस्थितान् ( आगतान् ) घोषवृद्धान् ( गोपालकवृद्धान् ) वन्यानां ( वनोद्भवानां ) मार्गशाखिनां ( पथद्रुमाणां ) नामधेयानि ( नामानि ) पृच्छन्तौ ॥ ४५ ॥

( समासः ) दुह्यत इति दोहः ( क्षीरं ) ह्योगोदोहस्य विकारः हैयङ्गवीनम् । " तत्तु हैयङ्गवीनं यत् ह्योगोदोहोद्भवं घृतम् " । घोषवृद्धान् = घोषेषु वृद्धा घोषवृद्धास्तान् । वन्यानां = वने भवा वन्यास्तेषां । मार्गशाखिनां = शाखाः सन्त्येषाम् इति शाखिनः, मार्गे शाखिनः मार्गशाखिनस्तेषां ॥ ४५ ॥

---

१ देवद्विजनृपादीनां पूजार्थमुपकरणजातम् । तद्यथा :—
" आपः क्षीरं कुशाग्राणि दधिसर्पिश्च तन्दुलाः ।
यवः सिद्धार्थकश्चैव ह्यष्टाङ्गार्घ्यः प्रकीर्तितः ॥ "

५

( वाच्यपरिवर्तनम् ) पृच्छद्भयां ( ताभ्यां जग्मे ) ॥ ४५ ॥

( सरलार्थ ) गाय का ताजा घी लेकर नजर करने वाले बूढ़े गोपालों से जंगली वृक्षों के नाम आदि पूछते हुए ॥ ४५ ॥

काप्यभिख्या तयोरासीद्व्रजतोः शुद्धवेशयोः ।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ॥ ४६ ॥

( अन्वयः ) व्रजतोः शुद्धवेषयोः तयोः; हिमनिर्मुक्तयोः चित्राचन्द्रमसोः इव योगे सति का अपि अभिख्या आसीत् ॥ ४६ ॥

( सुबोधिनी ) व्रजतोः ( गच्छतोः ) शुद्धवेशयोः ( उज्ज्वलवेषयोः ) तयोः (सुदक्षिणादिलीपयोः) हिमनिर्मुक्तयोः (हिमत्यक्तयोः) चित्राचन्द्रमसोः ( चित्रानक्षत्रेशयोः ) इव, योगे सति ( संयोगे सति ) का अपि ( अनिर्वचनीया ) अभिख्या ( शोभा ) आसीत् ( अभूत् ) ॥ ४५ ॥

( समासः ) शुद्धवेशयोः = शुद्धः वेशः ययोस्तौ तयोः । हिमनिर्मुक्तयोः = हिमेन निर्मुक्तौ हिमनिर्मुक्तौ तयोः । चित्राचन्द्रमसोः = चित्रा च चन्द्रमाश्च चित्राचन्द्रमसौ तयोः ॥ ४६ ॥

( वाच्यपरिवर्तनम् ) कया अपि अभिख्यया ( अभूयत ) ॥ ४६ ॥

( सरलार्थ ) चैत्र में चित्रा नक्षत्र पर आये हुए चन्द्रमा की शोभा की तरह शुद्धवेश वाले उन दोनों की भी एक अलौकिक शोभा मालूम पड़ती थी । यहां चित्रा नक्षत्र पर आए से यह मतलब है कि हिमऋतू के बाद चैत्र में चन्द्रमा ठीक चित्रानक्षत्र के नीचे आजाता है और सुन्दर सुडौल बड़ी मोती की तरह चित्रा नक्षत्र उसके सिरपर आता है उस समय उन निर्म्मल चन्द्रकी अलौकिक शोभा प्रतीत होती है ॥ ४६ ॥

तत्तद्भूमिपतिः पत्न्यै दर्शयन्प्रियदर्शनः ।
अपि लङ्घितमध्वानं बुबुधे न बुधोपमः ॥ ४७ ॥

( अन्वयः ) प्रियदर्शनः बुधोपमः भूमिपतिः ( दिलीपः ) तत् तत् पत्न्यै दर्शयन् लङ्घितम् अपि अध्वानं न बुबुधे ॥ ४७ ॥

( सुबोधिनी ) प्रियदर्शनः ( मधुरदर्शनः, दर्शनीय इत्यर्थः ) बुधोपमः ( पण्डितसदृशः ) भूमिपतिः ( महीपः दिलीपः ) तत् तत् ( अद्भुतं वस्तु ) पत्न्यै ( सुदक्षिणायै ) दर्शयन् ( प्रदर्शयन् ) लङ्घितं ( अतिवाहितम् अपि ) अध्वानं ( मार्गं ) न बुबुधे ( न ज्ञातवान् ) ॥ ४७ ॥

( समासः ) प्रियदर्शनः = प्रियं दर्शनं यस्य असौ प्रियदर्शनः । बुधोपमः = बुधः उपमा ( उपमानं ) यस्य इति बुधोपमः । भूमिपतिः = भूम्याः पतिः भूमिपतिः ॥ ४७ ॥

( वाच्यपरिवर्तनम् ) प्रिदर्शनेन बुधोपमेन भूमिपतिना तत् तद् वस्तु पत्न्यै दर्शयता लङ्घितः अपि अध्वा न बुबुधे ॥ ४७ ॥

( सरलार्थ ) विद्वान राजा दिलीप, रानी सुदक्षिणा को मनोहर जङ्गली दृश्य दिखाता हुआ पीछे पीछे छोड़े हुए मार्ग को भी न जान सका ॥ ४७ ॥

स दुष्प्रापयशाः प्रापदाश्रमं श्रान्तवाहनः ।
सायं संयमिनस्तस्य महर्षेर्महिषीसखः ॥ ४८ ॥

( अन्वयः ) दुष्प्रापयशाः, श्रान्तवाहनः, महिषीसखः, सः, सायं, संयमिनः, तस्य, महर्षेः, आश्रमं, प्रापत् ॥ ४८ ॥

( सुबोधिनी ) दुष्प्रापयशाः ( अन्यदुर्लभयशाः ) श्रान्तवाहनः ( अध्वगमनात्क्लान्तयुग्यः ) महिषीसखः ( देवीसखः, सुदक्षिणासहित इत्यर्थः ) सः ( दिलीपः ) सायं ( सायङ्काले ) संयमिनः ( इन्द्रिय-

---

( १ ) अथवा—बुधः ( सौम्यः ) सोमस्य चन्द्रस्य पुत्रो बुधनामा ग्रहः, स उपमा यस्य सः । चन्द्रपुत्र-बुधः किल तेजसा द्वादशादित्यसन्निभः, सव शास्त्रार्थकुशलत्वात "बुधः" इति, बृहस्पतिपत्न्यास्ताराया गर्भे सोमेन उत्पादितत्वाच "सौम्यः" इति कथ्यते । यथा—

"ततः संवत्सरस्यान्ते द्वादशादित्यसन्निभः ।
दिव्यपीताम्बरधरः पीताभरणभूषितः ॥
सर्वास्त्रशास्त्रविद्विद्वान् हस्तिशास्त्रप्रवर्तकः ।
राज्ञः सोमस्य पुत्रत्वात्सौम्यो राजसुतः स्मृतः ॥"

इति मत्स्यपुराणम् ।

निग्रहसमर्थस्य ) तस्य महर्षेः ( वसिष्ठस्य ) आश्रमं ( पर्णकुटीं ) प्रापत् ( प्राप ) ॥ ४८ ॥

( समासः ) दुष्प्रापयशाः = दुष्प्रापं यशो यस्य सः । श्रान्तवाहनः = श्रान्तं वाहनं यस्य सः । महिषीसखः = महिष्याः सखा इति महीषीसखः । महर्षेः = महांश्चासौ ऋषिश्च महर्षिः तस्य । संयमः ( प्रशस्तः इन्द्रियजयादिनियमः ) अस्ति अस्य इति संयमी, तस्य ॥ ४८ ॥

( वाच्यपरिवर्तनम् ) दुष्प्रापयशसा श्रान्तवाहनेन महिषीसखेन तेन सायं संयमिनः तस्य महर्षेः आश्रमः प्रापि ॥ ४८ ॥

( सरलार्थ ) दुर्लभ यश वाला, थके हुए वाहन वाला, रानी सहित राजा दिलीप सायंकाल के समय महर्षि वसिष्ठ महाराज के आश्रम पर पहुँचा ॥ ४८ ॥

[१]वनान्तरादुपावृत्तैः समित्कुशफलाहरैः ।
पूर्यमाणमदृश्याग्निप्रत्युद्यातैस्तपस्विभिः ॥ ४९ ॥

( अन्वयः ) वनान्तराद् उपावृत्तैः समित्कुशफलाहरैः अदृश्याग्निप्रत्युद्यातैः तपस्विभिः पूर्यमाणम् ॥ ४९ ॥

( सुबोधिनी ) वनान्तरात् ( अन्यस्माद् वनात् ) उपावृत्तैः ( प्रत्यावृत्तैः ) समित्कुशफलाहरैः ( समित्कुशफलाहरणशीलैः ) अदृश्याग्निप्रत्युद्यातैः ( दर्शनायोग्य-वैतानिक-प्रत्युद्गतैः ) तपस्विभिः ( महर्षिभिः ) पूर्यमाणं ( व्याप्तं ) ॥ ४९ ॥

( समासः ) वनान्तरात् = अन्यद् वनं वनान्तरं तस्मात् । समित्कुशफलाहरैः = समिधश्च कुशाश्च फलानि च आहर्तुं शीलं येषान्ते समित्कुशफलाहरास्तैः । अदृश्याग्निप्रत्युद्यातैः = अदृश्या अग्नयोऽदृश्याग्नयस्तैः प्रत्युद्यातास्तैः । तपः अस्ति एषामिति तपस्विनस्तैः॥४९॥

(१) सायं तपस्विनो वनाद् यज्ञकाष्ठान् कुशान् फलानि च गृहीत्वा आश्रमे सम्भूय समागच्छन्ति ।

बाला यथा प्रवासाद् आगतान् पित्रादीन् दूरत एव दृष्ट्वा मिष्टान्नादिलोभेन मार्ग एव प्रत्युद्गच्छन्ति तथत्र तेषां साग्निकानां तपस्विनां पुत्ररूपा होमाग्नयोऽपि अन्यैरनवलोकिताः सन्तो यज्ञकाष्ठादिभोज्यलोभात्तान् प्रत्युद्गच्छन्तीति भावः ।

तथा च—"प्रोष्यागच्छतामाहिताग्नीनामग्नयः प्रत्युद्यान्तीतिश्रुतिः ।" अन्यदपि— " कामं पितरं प्रोषितवन्तं पुत्राः प्रत्याधावन्ति, एवमेतमग्नयः प्रत्याधावन्ति सशकलान् दारुनिवाहरन् " ॥ इति ॥

( वाच्यपरिवर्तनम् ) वनान्तरात्........................पूर्णमाणः आश्रमः प्रापि ॥ ४६ ॥

( सरलार्थ ) सायङ्काल के समय सम्पूर्ण तपस्वी अरण्यों में से समिधा, कुश, फल आदि लेकर अपने २ आश्रम में आते हैं; बालक जिस प्रकार परदेश से आते हुए अपने बड़ों को दूर से देखकर मिठाई आदि के लोभ से मार्ग ही में उन्हें घेर लेते हैं और उनके आगे २ चलते हैं उस प्रकार दूसरों से न देखे गये तपस्वियों के पुत्र स्वरूप होमाग्निभी यज्ञियकाष्ठादिभोज्य पदार्थ के लोभ से उन ऋषियों की अगुआवनी करते हैं ॥ ४६ ॥

आकीर्णमृषिपत्नीनामुटजद्वाररोधिभिः ।
अपत्यैरिव नीवारभागधेयोचितैर्मृगैः ॥ ५० ॥

( अन्वयः ) नीवारभागधेयोचितैः उटजद्वाररोधिभिः मृगैः ऋषिपत्नीनाम् अपत्यैः इव आकीर्णम् ॥ ५० ॥

( सुबोधिनी ) नीवारभागधेयोचितैः ( नीवारधान्यांशयोग्यैः ) उटजद्वाररोधिभिः ( पर्णशालाद्वाररोधकैः ) मृगैः ( हरिणैः ) ऋषिपत्नीनां ( मुनिभार्याणां ) अपत्यैः ( सन्तानैः ) इव, आकीर्णं ( व्याप्तम् ) ॥ ५० ॥

( समासः ) नीवारभागधेयोचितैः=भाग एव भागधेयः नीवाराणां भागधेयः नीवारभागधेयस्तस्य उचितास्तैः । उटजद्वाररोधिभिः=उटजानां द्वाराणि रुन्धन्ति इति उटजद्वाररोधिनस्तैः । ऋषिपत्नीनां=ऋषीणां पत्न्यो ऋषिपत्न्यस्तासाम् ॥ ५० ॥

( वाच्यपरिवर्तनम् ) उटजद्वाररोधिभिः..............अपत्यैः इव मृगैः आकीर्णः ( आश्रमः प्रापि )

( सरलार्थ ) ऋषियों की पर्णकुटी का द्वार रोकने वाले, धान्य के भाग को पानेवाले ऋषिपत्नियों की सन्तान की तरह मृगों से व्याप्त था ॥ ५० ॥

सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम् ।
विश्वासाय विहङ्गानामालवालाम्बुपायिनाम् ॥ ५१ ॥

( अन्वयः ) आलवालाम्बुपायिनां विहङ्गानां विश्वासाय मुनिकन्याभिः सेकान्ते तत्क्षणोज्झितवृक्षकं ( प्रापत् ) ॥ ५१ ॥

( सुबोधिनी ) आलावालाम्बुपायिनां ( जलावापप्रदेशस्थजलपानशीलानां "स्यादालवालमावालमावापोऽथ" इत्यमरः, विहङ्गानां ( पक्षिणां ) विश्वासाय ( प्रत्ययाय ) मुनिकन्याभिः ( सेक्त्रीभिः ऋषिसुताभिः ) सेकान्ते ( पादपमूलसेचनावसाने ) तत्क्षणोज्झितवृक्षकं ( सद्यः परिहृतवृक्षकं ) ( आश्रमं प्रापत् )

( समासः ) आलवालाम्बुपायिनां = आलवालेषु अम्बु आलवालाम्बु, तस्य पातुं शीलमस्ति एषां ते आलवालाम्बुपायिनस्तेषां । मुनिकन्याभिः = मुनीनां कन्याः मुनिकन्यास्ताभिः । तत्क्षणोज्झितवृक्षकं = तत्क्षणे उज्झिता वृक्षका यस्मिंस्तम् ॥ ५१ ॥

( वाच्यपरिवर्तनम् ) आवालाम्बुपायिनां............तत्क्षणोज्झितवृक्षकः ( आश्रमः प्रापि ) ॥ ५१ ॥

( सरलार्थ ) पक्षी निर्भय हो वृक्षकी क्यारियों का जलपीवें इस कारण उनके विश्वास के लिये सींचने के अनन्तरही मुनिकन्याओं करके छोड़े हुए वृक्षवाले ॥ ५१ ॥

आतपात्ययसंक्षिप्तनीवारासु निषादिभिः ।
मृगैर्वर्तितरोमन्थमुटजाङ्गनभूमिषु ॥ ५२ ॥

( अन्वयः ) आतपात्ययसंक्षिप्तनीवारासु उटजाङ्गनभूमिषु निषादिभिः मृगैः वर्तितरोमन्थम् ५२ ॥

( सुबोधिनी ) आतपात्ययसंक्षिप्तनीवारासु ( आतपापगमे एकत्रीकृततृणधान्यासु ) उटजाङ्गनभूमिषु ( पर्णशालानां चत्वरभागेषु ) निषादिभिः ( उपविष्टैः ) मृगैः ( हरिणैः ) वर्तितरोमन्थं ( कृतचर्वितचर्वणम् ) ॥ ५२ ॥

( समासः ) आतपात्ययसंक्षिप्तनीवारासु = आतपस्य अत्ययः आतपात्ययः, आतपात्यये संक्षिप्ताः नीवाराः यासु ताः तासु । उटजाङ्गनभूमिषु । उटजानाम् अङ्गनानि उटजाङ्गनानि, तेषां भूमयस्तासु । निषादिभिः = निषीदन्ति इति निषादिनस्तैः । वर्तितरोमन्थं = वर्तितः रोमन्थः ( चर्वितचर्वणं ) यस्मिन् ( आश्रमे ) सः तम् ॥ ५२ ॥

( वाच्यपरिवर्तनम् ) आतपात्य०..............................
वर्तितरोमन्थः ( आश्रमः प्रापि ) ॥ ५२ ॥

( सरलार्थः ) वर्षा में एकत्रित कर रक्खे हुए धान्यवाली पर्ण-शाला की आंगन की भूमि ( ओसारा ) में बैठे हुए हरिणों करके पागुर किया जाता था ॥ ५२ ॥

अभ्युत्थिताग्निपिशुनैरतिथीनाश्रमोन्मुखान्।
पुनानं पवनोद्धूतैर्धूमैराहुतिगन्धिभिः ॥ ५३ ॥

( अन्वयः ) अभ्युत्थिताग्निपिशुनैः पवनोद्धूतैः आहुतिगन्धिभिः धूमैः आश्रमोन्मुखान् अतिथीन् पुनानम् ॥ ५३ ॥

( सुबोधिनी ) अभ्युत्थिताग्निपिशुनैः ( प्रज्वलितवह्निसूचकैः ) पवनोद्धूतैः (वायूत्थापितैः) आहुतिगन्धिभिः ( हवनीयद्रव्यसुगन्धिभिः ) धूमैः ( धूम्रैः ) आश्रमोन्मुखान् (आश्रममभिलक्षीकृत्य गन्तुमुत्सुकान् ) अतिथीन् ( अभ्यागतान् ) पुनानं ( पवित्रीकुर्वाणम् )॥५६॥

( समासः ) अभ्युत्थिताग्निपिशुनैः = अभ्युत्थिता अग्नयः अभ्युत्थिताग्नयः तेषां पिशुनास्तैः। आहुतिगन्धिभिः = आहुतेः गन्धो येषामस्तीत्याहुतिगन्धिनस्तैः। पवनोद्धूतैः = पवनेनोद्धूतास्तैः। आश्रमोन्मुखान् = आश्रमस्य उन्मुखास्तान्। अतिथीन् = अतन्ति ( गच्छन्ति एकत्र न तिष्ठन्ति ) इत्यतिथयस्तान् ( अत + इथिन् ) यद्वा न विद्यते द्वितीया तिथिः यस्य सः अतिथिः। यथा :—"एकरात्रं तु निवसन् अतिथिर्ब्राह्मणः स्मृतः। अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते " इति मनुः ॥ ५३ ॥

( वाच्यपरिवर्तनम् ) अभ्युत्थिताग्निपिशुनैः पुनानः ( आश्रमः, प्रापि ) ॥ ५३ ॥

( सरलार्थः ) प्रज्वलित अग्नि को सूचित करने वाली वायु से उठाई हुई आहुति की सुगन्धि से मिले धूएँ से आश्रम की ओर आते हुए अतिथियों को पवित्र करने वाला था ॥ ५३ ॥

अथ यन्तारमादिश्य धुर्यान्विश्रमयेति सः।
तामवारोहयत्पत्नीं रथादवततार च ॥ ५४ ॥

( अन्वयः ) अथ सः यन्तारं " धुर्यान् विश्रामय " इति आदिश्य तां पत्नीं रथाद् अवारोहयत् " स्वयं च " अवततार ॥ ५४ ॥

( सुबोधिनी ) अथ ( आश्रमे आगमनानन्तरं ) सः ( राजा-दिलीपः ) यन्तारं ( सारथिं ) धुर्यान् ( अश्वान् ) विश्रामय ( विनीताध्वश्रमं कुरु ) इति, आदिश्य ( आज्ञाप्य ) तां पत्नीं ( सुदक्षिणां ) रथात् ( स्यन्दनात् ) अवारोहयत् ( अवतारितवान् ) " स्वयं च " अवततार ( अवारुरोह ) ॥ ५४ ॥

( समासः ) धुर्यान् = धुरं वहन्तीति धुर्यास्तान् ॥ ५४ ॥

( वाच्यपरिवर्तनम् ) ( त्वया ) धुर्याः विश्राम्यन्तां । तेन सा पत्नी अवारोह्यत स्वयम् अवतेरे च ॥ ५४ ॥

( सरलार्थ ) उसके बाद राजा, सारथि को " घोड़ों को विश्राम दो " यह आज्ञा देकर स्वयं उतरा और रानी को उतारा ॥ ५४ ॥

तस्मै सभ्याः सभार्याय गोप्त्रे गुप्ततमेन्द्रियाः ।
अर्हणामर्हते चक्रुर्मुनयो नयचक्षुषे ॥ ५५ ॥

( अन्वयः ) सभ्याः गुप्ततमेन्द्रियाः, मुनयः सभार्याय गोप्त्रे नयचक्षुषे अर्हते तस्मै अर्हणां चक्रुः ॥ ५५ ॥

( सुबोधिनी ) सभ्याः ( सभायां साधवः, सन्त इत्यर्थः ) गुप्ततमेन्द्रियाः ( अतिनियमितेन्द्रियाः ) मुनयः ( ऋषयः ) सभार्याय ( भार्यासहिताय ) गोप्त्रे ( रक्षकाय ) नयचक्षुषे ( शास्त्रनेत्राय ) अर्हते ( पूज्याय ) तस्मै ( राज्ञे ) अर्हणां ( पूजां ) चक्रुः ( अनुष्ठितवन्तः ) ॥ ५५ ॥

( समासः ) गुप्ततमेन्द्रियाः = अतिशयेन गुप्तानि गुप्ततमानि, गुप्ततमानि इन्द्रियाणि येषान्ते । सभार्याय = भार्यया सहितः सभार्यः तस्मै । गोप्त्रे = गोपायतीति गोप्ता तस्मै । नयचक्षुषे = नयः नीतिशास्त्रमेव चक्षुः ( हिताहितनिर्णयसाधनं ) यस्यासौ नयचक्षुस्तस्मै । अर्हते = अर्हतीति अर्हन् तस्मै ॥ ५५ ॥

( वाच्यपरिवर्तनम् ) सभ्यैः गुप्ततमेन्द्रियैः मुनिभिः सभार्याय गोप्त्रे नयचक्षुषे तस्मै अर्हणा चक्रे ॥ ५५ ॥

( सरलार्थः ) जितेन्द्रिय मुनियों ने प्रजापालन करने वाले नीति शास्त्ररूपी चक्षुवाले, रानी सहित उस राजा दिलीप का स्वागत किया ॥ ५५ ॥

विधेः सायन्तनस्यान्ते स ददर्श तपोनिधिम् ।
अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम् ॥ ५६ ॥

( अन्वयः ) सः सायन्तनस्य विधेः अन्ते अरुन्धत्या अन्वासितं तपोनिधिं स्वाहया "अन्वासितं हविर्भुजम् इव " ददर्श ॥ ५६ ॥

( सुबोधिनी ) सः ( राजा ) सायन्तनस्य ( सायंभवस्य ) विधेः ( अनुष्ठानस्य ) अन्ते ( पर्यवसाने ) अरुन्धत्या ( अरुन्धतीनाम्न्या धर्मपत्न्या ) अन्वासितं ( उपसेवितं ) तपोनिधिं ( तपस्विनं ) [1]स्वाहया ) स्वाहादेव्या ) अन्वासितं ( उपसेवितं ) हविर्भुजं ( अग्निं) इव, ददर्श ( अवलोकयामास ) ॥ ५६ ॥

( समासः ) सायन्तनस्य = सायं भवः सायन्तनः तस्य । तपोनिधिं = तपसां निधिस्तपोनिधिस्तं । हविर्भुजं = हविः भुनक्तीति हविर्भुक् तम् ॥ ५६ ॥

---

( १ ) "प्रकृते कलया चैव सर्व्वशक्ति स्वरूपिणी ।
बभूव दाहिका शक्तिरग्नेः स्वाहा स्वकामिनी ॥ १ ॥
ऋषयो मुनयश्चैव ब्राह्मणा दक्षिणादयः ।
स्वाहान्तं मन्त्रमुच्चार्य हविर्ददति नित्यशः ॥ २ ॥
स्वाहायुक्तञ्च मन्त्रञ्च यो गृह्णाति प्रशस्तकम् ।
सर्वसिद्धिर्भवेत्तस्य ब्रह्मन् ! ग्रहणमात्रतः ॥ ३ ॥

अपि च, ब्रह्मोवाच :—

"त्वमग्नेर्दाहिका शक्तिर्भव पत्नी च सुन्दरी ।
दग्धुं न शक्तस्त्वकृती हुताशश्च त्वया विना ॥ १ ॥
त्वन्नामोच्चार्य मन्त्रान्ते यो दास्यति हविर्नरः ।
सुरेभ्यस्तत्प्राप्नुवन्ति सुराः स्वानन्दपूर्व्वकम् ॥ २ ॥
अग्नेः सम्पत्स्वरूपा च स्त्रीरूपा सा गृहेश्वरी ।
देवानां पूजिता शश्वत् नरादीनां भवाम्बिके ॥ ३ ॥
( ब्रह्मवैवर्तम् )

( वाच्यपरिवर्तनम् ) तेन..................( अन्वासितः ) हविर्भुग् इव अरुन्धत्या अन्वासितः तपोनिधिः ( वसिष्ठः ) ददृशे ॥ ५६ ॥

( सरलार्थः ) सायंकालोचित अनुष्ठान के अनन्तर स्वाहा सहित अग्नि की तरह पीछे बैठी हुई अरुन्धती के साथ महर्षि वसिष्ठ को देखा ॥ ५६ ॥

तयोर्जगृहतुः पादान् राजा राज्ञी च मागधी ।
तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिननन्दतुः ॥ ५७

( अन्वयः ) मागधी राज्ञी, राजा च, तयोः पादान् जगृहतुः, गुरुपत्नी गुरुश्च तौ प्रतिननन्दतुः ॥ ५७ ॥

( सुबोधिनी ) मागधी ( मगधराजकन्या ) राज्ञी ( सुदक्षिणा ) राजा च, तयोः ( अरुन्धतीवसिष्ठयोः ) पादान् ( चरणान् ) जगृहतुः ( प्रणेमतुः ) गुरुपत्नी ( अरुन्धती ) गुरुः ( वसिष्ठश्च ) तौ ( सुदक्षिणादिलीपौ ) प्रीत्या ( प्रेम्णा ) प्रतिननन्दतुः ( आशीर्वादादिभिः सम्मानयाञ्चक्रतुः ) ॥ ५७ ॥

( समासः ) मागधी मगधस्य राज्ञः अपत्यं स्त्री। गुरुपत्नी = गुरोः पत्नी गुरुपत्नी । सा च स च तौ ॥ ५७ ॥

(वाच्यपरिवर्तनम् ) राज्ञः, मागध्या राज्ञ्या च ( द्वाभ्यां ) तयोः पादाः जगृहिरे । गुरुणा गुरुपत्न्या च ( द्वाभ्यां ) प्रीत्या तौ प्रतिनन्दाते ॥ ५७ ॥

( सरलार्थः ) रानी सुदक्षिणा और राजा दिलीप ने गुरुपत्नी और गुरु के चरण पकड़े । गुरु और उनकी पत्नी ने प्रसन्न मन हो उन्हें आशीर्वाद प्रदान किया ॥ ५७ ॥

तमातिथ्यक्रियाशान्तरथक्षोभपरिश्रमम् ।
पप्रच्छ कुशलं राज्ये राज्याश्रममुनिं मुनिः ॥ ५८ ॥

( अन्वयः ) मुनिः आतिथ्यक्रियाशान्तरथक्षोभपरिश्रमं राज्याश्रममुनिं तं राज्ये कुशलं पप्रच्छ ॥ ५७ ॥

( सुबोधिनी ) मुनिः ( वसिष्ठः ) आतिथ्यक्रियाशान्तरथक्षोभपरिश्रमं ( अतिथिसत्कारेण शान्ताध्वखेदं ) राज्याश्रममुनिं (राज्याश्रमे

ऋषिकल्पं ) तं ( दिलीपं ) [१]राज्ये ( स्वाम्यमात्यसुहृत्कोषराष्ट्र-दुर्गबलात्मके ) [२]कुशलं ( क्षेमं ) पप्रच्छ ( पृष्टवान् ) ॥ ५८ ॥

( समासः ) आतिथ्यक्रियाशान्तरथक्षोभपरिश्रमं = रथस्य क्षोभः रथक्षोभः तेन परिश्रमः रथक्षोभपरिश्रमः, आतिथ्यस्य क्रिया आतिथ्यक्रिया तया शान्तः रथक्षोभपरिश्रमो यस्य सः तं। राज्याश्रम-मुनिं = राज्यमेवाश्रमः राज्याश्रमः तस्मिन् मुनिस्तम् ॥ ५८ ॥

( वाच्यपरिवर्तनम् ) मुनिना आतिथ्यक्रियाशान्तरथक्षोभपरि-श्रमः राज्याश्रममुनिः राज्ये कुशलं पप्रच्छे ॥ ५८ ॥

( सरलार्थ ) रथ के हलचल से उत्पन्न हुई राजा की थकावट मुनि वसिष्ठके कियेहुए अतिथिसत्कारसे दूर हुई। उसकेबाद उन्होंने राज्याश्रम के मुनि दिलीप से राज्य का कुशल पूछा ॥ ५८ ॥

अथाथर्वनिधेस्तस्य विजितारिपुरः पुरः।
अर्थ्यामर्थपतिर्वाचमाददे वदतां वरः ॥ ५९ ॥

( अन्वयः ) अथ विजितारिपुरः वदतां वरः अर्थपतिः अथर्वनिधेः तस्य पुरः अर्थ्यां वाचम् आददे ॥ ५९ ॥

( सुबोधिनी ) अथ ( गुरोः कुशलप्रश्नानन्तरं ) विजितारिपुरः ( जितशत्रुनगरः ) वदतां ( वक्तॄणां ) "मध्ये" वरः ( श्रेष्ठः ) अर्थ-पतिः ( राजा दिलीपः ) अथर्वनिधेः (अथर्ववेदविदुषः) तस्य (मुनेः) पुरः ( अग्रे ) अर्थ्यां ( अर्थयुक्तां ) वाचं ( वाणीं ) आददे ( स्वीच-कार, वक्तुं प्रारब्धवानित्यर्थः ) ॥ ५९ ॥

---

( १ ) तथाच मनुः "स्वाम्यमात्यपुरं राष्ट्रं कोशदण्डौ तथा सुहृत्। सप्तैतानि समस्तानि लोकेऽस्मिन् राज्यमुच्यते " इति। कामन्दकोऽपि :—

"स्वाम्यमात्यञ्च राष्ट्रञ्च दुर्गकोशौ बलं सुहृत्।
परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते ॥"

(२) "ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम्।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च "

इति मनुवचनानुरोधाद् ब्राह्मणविषय एव कुशलप्रश्नः समुचितस्तथापि ऋषि-कल्पस्य सत्क्षत्रियस्य अस्य राज्ञो महानुभावत्वाद् आदौ कुशलप्रश्नो न दोषाय।

( समासः ) विजितारिपुरः = अरीणां पुराणि अरिपुराणि, विजितानि अरिपुराणि येन सः । अर्थपतिः = अर्थस्य पतिरित्यर्थपतिः । अथर्वनिधेः = अथर्वस्य ( अथर्ववेदस्य ) निधिः अथर्वनिधिस्तस्य । अर्थ्या = अर्थाद् अनपेता अर्थ्या ताम् ॥ ५९ ॥

( वाच्यपरिवर्तनम् ) अथ विजितारिपुरेण वदतां वरेण अर्थपतिना अथर्वनिधेः तस्य पुरः अर्थ्या वाग् आददे ॥ ५९ ॥

( सरलार्थ ) वैरियों के देशों को जीतने वाले, वक्ताओं में श्रेष्ठ, राजा दिलीप ने अथर्ववेद के खजाने जैसे वसिष्ठ ऋषिके सामने कार्य की बात छेड़ी ॥ ५९ ॥

उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।
दैवीनां मानुषीणां च प्रतिहर्ता त्वमापदाम् ॥ ६० ॥

( अन्वयः ) " हे गुरो " सप्तसु अङ्गेषु मे शिवम् उपपन्नं ननु "यस्य मे" दैवीनां मानुषीणाम् आपदां त्वं प्रतिहर्ता ॥ ६० ॥

( सुबोधिनी ) "हे गुरो" सप्तसु अङ्गेषु ( "स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च " इति सप्तसङ्ख्याकेषु राज्याङ्गेषु ) मे ( मम ) शिवं ( कुशलं ) उपपन्नं ननु ( युक्तमेव ) यस्य मे दैवीनां ( देवेभ्यः प्राप्तानां ) मानुषीणां ( मनुष्येभ्य आगतानां ) [१]आपदां ( दुःखानां ) त्वं ( भवान् ) एव, प्रतिहर्ता ( वारयिता ) भवसीतिशेषः ॥ ६० ॥

समासः ) देवेभ्य आगता दैव्यस्तासां दैवीनाम् । मनुष्येभ्य आगता मानुष्यस्तासां मानुषीणाम् ॥ ६० ॥

( वाच्यपरिवर्तनम् ) मे सप्तसु........................परिहर्त्रा त्वया ( भूयते ) ॥ ६० ॥

---

(१) "हुताशनो जलं व्याधिर्दुर्भिक्षं मरणं तथा ।
इति पञ्चविधं दैवं मानुषं व्यसनं ततः ॥
अयुक्तकेभ्यश्चौरेभ्यः परेभ्यो राजवल्लभात् ।
पृथिवीपपिलोभाच्च नराणां पञ्चधा मतम् ॥

( सरलार्थ ) मेरे राज्य के प्रत्येक अंग में कुशल क्यों न हो। जिस की दैवी और मानुषी आपत्तिको नाश करने वाले आप स्वयं विद्यमान हैं ॥ ६० ॥

तव मन्त्रकृतो मन्त्रैर्दूरात्प्रशमितारिभिः ।
प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥ ६१ ॥

( अन्वयः ) दूरात् प्रशमितारिभिः मन्त्रकृतः तव मन्त्रैः दृष्टलक्ष्यभिदः मे शराः प्रत्यादिश्यन्त इव ॥ ६१ ॥

( सुबोधिनी ) दूरात् ( परोक्षे एव ) प्रशमितारिभिः ( शान्तवैरिभिः ) [1]मन्त्रकृतः ( मन्त्रप्रयोक्तुः ) तव ( भवतः ) मन्त्रैः ( वेदमन्त्रैः) दृष्टलक्ष्यभिदः ( प्रत्यक्षलक्ष्यभेदनसमर्थाः ) मे ( मम ) शराः (बाणाः) प्रत्यादिश्यन्त इव ( निराक्रियन्त इव ) ॥ ६१ ॥

( समासः ) प्रशमितारिभिः=प्रशमिता अरयो यैस्ते तैः। मन्त्रकृतः=मन्त्रं करोति ( प्रयोगविधिना साध्यं करोति, अभीष्टवस्तुलाभाय प्रयुङ्क्ते ) इति मन्त्रकृत् तस्य। दृष्टलक्ष्यभिदः=दृष्टं लक्ष्यं दृष्टलक्ष्यं, दृष्टलक्ष्यं भिन्दन्तीति दृष्टलक्ष्यभिदः ॥ ६१ ॥

( वाच्यपरिवर्तनम् ) मन्त्रकृतः तव दूरात् प्रशमितारयः मन्त्राः दृष्टलक्ष्यभिदः मे शरान् प्रत्यादिशन्ति इव ॥ ६१ ॥

( सरलार्थ ) मन्त्र द्वारा देवताओं का साक्षात्कार करने वाले और मन्त्रों से ही शत्रुओं का नाश करने वाले आप के मन्त्रों से, केवल प्रत्यक्ष निशाने को मारने वाले मेरे बाण व्यर्थ से हैं ॥ ६१ ॥

हविरावर्जितं होतस्त्वया विधिवदग्निषु ।
वृष्टिर्भवति सस्यानामवग्रहविशोषिणाम् ॥ ६२ ॥

---

( १ ) " मन्त्रं करोति ( सृजति ) इति मन्त्रकृत् तस्य" इति रीत्या अपौरुषेयाणां वेदमन्त्राणां पौरुषेयत्वं सिद्ध्यति, एवं सति तस्मिन् अनाप्तवाक्यवद्धेयता स्यादतो मन्त्रकृत इति विशेषणं। वेदस्य अपौरुषेयत्वसाधकं यथा स्यात्तथोपपादितम्।

यत्तु केनचिद्वेदनिन्दकेनापशोधकेनास्य अपरपर्यायः 'मन्त्रस्रष्टुः" इति व्यलेखि स सर्वथैव त्याज्यः।

( अन्वयः ) हे होतः ? त्वया विधिवद् अग्निषु आवर्जितं हविः अवग्रहविशोषिणां सस्यानां वृष्टिः भवति ॥ ६२ ॥

( सुबोधिनी ) हे होतः ? ( हे हवनशील ? ) त्वया ( भवता ) विधिवत् ( यथाशास्त्रं ) अग्निषु ( वह्निषु ) आवर्जितं ( दत्तं ) हविः ( आज्यादिकं ) अवग्रहविशोषिणां ( वृष्टिप्रतिबन्धेन विशुष्यतां ) "वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ" इत्यमरः । सस्यानां ( धान्यानां ) वृष्टिः ( वर्षणं ) भवति ( जायते ) [1]वृष्टिरूपेण धान्यान्युत्पादयतीति भावः ॥ ६२ ॥

( समासः ) विधिवत्=विधिना तुल्यं विधिवत् । अवग्रहविशोषिणां=अवग्रहेण विशुष्यन्तीति अवग्रहविशोषिणः तेषाम् ॥ ६२ ॥

( वाच्यपरिवर्तनम् ) हे होतः ? त्वया विधिवद् अग्निषु आवर्जितेन हविषा अवग्रहविशोषिणाम् सस्यानां वृष्ट्या भूयते ॥ ६२ ॥

( सरलार्थ) हे यज्ञ करने वाले ? तुम्हारी विधिपूर्वक अग्नि में दी हुई आहुति अकाल से सूखते हुये धानों के विषय वृष्टि का काम कर रही है ॥

पुरुषायुषजीविन्यो निरातङ्का निरीतयः ।
यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्चसम् ॥ ६३ ॥

( अन्वयः ) मदीयाः प्रजाः पुरुषायुषजीविन्यः निरातङ्काः निरीतयः ( सन्ति ) इति यत् "तस्य सर्वस्य" त्वद्ब्रह्मवर्चसम् एव हेतुः॥३॥

सुबोधिनी ) मदीयाः ( मत्सम्बन्धिन्यः ) प्रजाः ( जनाः ) पुरुषायुषजीविन्यः ( पूर्णायुर्वत्यः ) निरातङ्काः ( भयरहिताः ) [2]निरीतयः (अतिवृष्ट्यादिषड्बाधारहिताः) इति यत् "तस्यसर्वस्य" त्वद्ब्रह्मवर्चसं ( भवतः सततमनुष्ठितं तपश्चरणजं ब्रह्मतेजः ) एव, हेतुः ( कारणं ) वर्तते ॥ ६३ ॥

---

(१) तथा च :—अग्नौ प्रास्ताहुतिः सम्यग् आदित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥

(२) "अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः खगाः ।
प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः ॥"

( समासः ) मदीयाः=मम इमाः मदीयाः । प्रजाः=प्रजायन्त इति प्रजाः । पुरुषायुषजीविन्यः=पुरुषस्य आयुः पुरुषायुषं, पुरुषायुषं जीवन्तीति पुरुषायुषजीविन्यः । निरातङ्काः=निर्गतः आतङ्कः (रोगशोकादिभयं ) याभ्य इति निरातङ्काः । निरीतयः निर्गता ईतयो याभ्यस्ताः । ब्रह्मणो वर्चः ब्रह्मवर्चसं, तव ब्रह्मवर्चसं त्वद्ब्रह्मवर्चसम् ॥६३॥

( वाच्यपरिवर्तनम् ) यत् पुरुषायुषजीविभिः निरातङ्काभिः निरीतिभिः मदीयाभिः प्रजाभिः भूयते । तस्य हेतुना त्वद्ब्रह्मवर्चसेन भूयते ॥ ६३ ॥

( सरलार्थः ) मेरी प्रजा, पुरुष की आयुतक जीनेवाली, निर्भय, और ईतियों [ अतिवर्षा, सूखा, चूहा, टीड्डी, पक्षी, राजा की चढ़ाई ] से बची है इसका कारण आपका ब्रह्म तेज ही है ॥ ६३ ॥

त्वयैवं चिन्त्यमानस्य गुरुणा ब्रह्मयोनिना ।
सानुबन्धाः कथं न स्युः सम्पदो मे निरापदः ॥ ६४ ॥

( अन्वयः ) ब्रह्मयोनिना गुरुणा त्वया एवं चिन्त्यमानस्य "अतएव" निरापदः मे सम्पदः सानुबन्धाः कथं न स्युः ॥ ६४ ॥

( सुबोधिनी ) ब्रह्मयोनिना ( ब्रह्मपुत्रेण[1] ) गुरुणा ( आचार्येण ) त्वया ( भवता ) एवं ( उक्तप्रकारेण ) चिन्त्यमानस्य ( अनुध्यायमानस्य ) "अतएव" निरापदः ( आपत्तिरहितस्य ) मे ( मम ) सम्पदः ( ऐश्वर्य्याणि ) सानुबन्धाः । ( अविच्छिन्नाः ) कथं न स्युः ( कुतो न भूयासुः ) ॥ ६४ ॥

---

१ तथा च ब्रह्मपुराणेः—मरीचिरात्रिर्भगवानङ्गिराः पुलहः क्रतुः ।
पुलस्त्यश्च वसिष्ठश्च सप्तैते ब्रह्मणः सुताः ॥

मात्स्ये तुः—वेदाभ्यासरतस्तस्य प्रजाकामस्य मानसाः ।
मनसः पूर्वसृष्टा वै जाता एतेन मानसाः ॥ १ ॥
मरीचिरभवत्पूर्वं ततोऽत्रिर्भगवान् ऋषिः ।
अङ्गिराश्चाभवत्पश्चात् पुलस्त्यस्तदनन्तरम् ॥ २ ॥
ततः पुलहनामा वै ततः क्रतुरजायत ।
प्रचेताश्च ततः पुत्रो वसिष्ठश्चाभवत्पुनः ॥ ३ ॥
पुत्रो भृगुरभूत्तत्र नारदोऽपि चिरादभूत् ।
दशेमान् मानसान् ब्रह्मा जपन् पुत्रानजीजनत् ॥ ४ ॥

( समासः ) ब्रह्मयोनिना = ब्रह्मा योनिः कारणं यस्य सः तेन । निरापदः = निर्गता आपदः यस्मात्स निरापत् तस्य । अनुबन्धेन सहिताः सानुबन्धाः । चिन्त्यतेऽसौ चिन्त्यमानस्तस्य ॥ ६४ ॥

( वाच्यपरिवर्तनम् ) ब्रह्मयोनिना त्वया गुरुणा एवं चिन्त्यमानस्य मे निरापद्भिः सम्पद्भिः सानुबन्धाभिः कथं न भूयते ॥ ६४ ॥

( सरलार्थ ) जब साक्षात् ब्रह्मपुत्र आप मेरे गुरु हो, सर्वदा के मेरे कल्याणका अनुध्यान करते हो फिर आपत्ति रहित मेरी सम्पत्ति निरन्तर अविच्छिन्न क्यों न रहे ॥ ६४ ॥

किन्तु वध्वां तवैतस्यामदृष्टसदृशप्रजम् ।
न मामवति सद्वीपा रत्नसूरपि मेदिनी ॥ ६५ ॥

( अन्वयः ) किन्तु तव एतस्यां वध्वां अदृष्टसदृशप्रजं मां सद्वीपा रत्नसूः अपि मेदिनी न अवति ॥ ६५ ॥

( सुबोधिनी ) किन्तु, तव ( भवतः ) एतस्यां ( पुरोवर्तिन्यां ) वध्वां ( स्नुषायां अदृष्टसदृशप्रजं ( अनवलोकितानुरूपसन्ततिं ) मां [१] सद्वीपा ( द्वीपमण्डलपरिवेष्टिता, समुद्रसहितेत्यर्थः ) रत्नसूः ( हीरकादिमहामणिप्रसूः ) अपि, मेदिनी ( वसुधा ) न अवति ( न प्रीणाति ) ॥ ६५ ॥

( समासः ) अदृष्टसदृशप्रजं = न दृष्टा सदृशी ( अनुरूपा ) प्रजा येन सः तम् । सद्वीपा = द्वीपैः सह वर्तते इति सद्वीपा । रत्नानि सूयते इति रत्नसूः ॥ ६५ ॥

( वाच्यपरिवर्तनम् ) सद्वीपया रत्नस्वा मेदिन्या तव एतस्यां वध्वां अदृष्टसदृशप्रजः अहं न अव्ये ॥ ६५ ॥

---

( १ ) द्वीपा यथाः—

भूमेरर्द्धं क्षारसिन्धोरुदक्स्थं जम्बूद्वीपं प्राहुराचार्यवर्य्याः ।
अर्द्धेऽन्यस्मिन् द्वीपषट्कस्य याम्ये क्षारक्षीराद्यम्बुधीनां निवेशः ॥
शाकं ततः शाल्मलमत्र कौशं क्रौञ्चञ्च गोमर्दकपुष्करे च ।
द्वयोर्द्वयोरन्तरमेकमेकं समुद्रयोर्द्वीपमुदाहरन्ति ॥

सिद्धान्तशिरोमणौ ।

( सरलार्थ ) परन्तु आपकी इस वधूमें अपने सदृश सन्तान होती न देखकर रत्नों को पैदा करने वाली द्वीपों सहित पृथ्वी भी मुझे नहीं भाती ॥ ६५ ॥

नूनं मत्तः परं वंश्याः पिण्डविच्छेददर्शिनः ।
न प्रकामभुजः श्राद्धे स्वधासङ्ग्रहतत्पराः ॥ ६६ ॥

( अन्वयः ) मत्तः परं पिण्डविच्छेददर्शिनः वंश्याः स्वधासंग्रहतत्पराः सन्तः श्राद्धे प्रकामभुजः न भविष्यन्ति नूनम् ॥ ६६ ॥

( सुबोधिनी ) मत्तः परं ( मदवसाने ) पिण्डविच्छेददर्शिनः ( पिण्डदानविच्छेदमुत्प्रेक्षमाणाः ) वंश्याः ( वंशोद्भवाः पितरः ) स्वधासंग्रहतत्पराः ( स्वधाग्रहणासक्ताः ) सन्तः, श्राद्धे ( पितृकर्मणि ) प्रकामभुजः ( पर्याप्तभोजिनः ) नूनं ( सत्यं ) न भविष्यन्ति ॥ ६६ ॥

( समासः ) पिण्डविच्छेददर्शिनः = पिण्डस्य विच्छेदः पिण्डविच्छेदः, तं द्रष्टुं शीलं येषां ते पिण्डविच्छेददर्शिनः । वंश्याः = वंशे भवाः वंश्याः । स्वधासंग्रहतत्पराः = स्वधायाः संग्रहः स्वधासङ्ग्रहस्तस्मिन् तत्पराः स्वधासंग्रहतत्पराः । प्रकामभुजः = प्रकामं भुञ्जन्तीति प्रकामभुजः ॥ ६६ ॥

( वाच्यपरिवर्तनम् ) नूनं मत्तः परं पिण्डविच्छेददर्शिभिः स्वधासंग्रहतत्परैः वंश्यैः श्राद्धे प्रकामभुग्भिः न भूयते ॥ ६६ ॥

( सरलार्थ ) निश्चय है कि मेरे अनन्तर पिण्ड का लोप देखने वाले स्वधा इकट्ठी करने में लगे हुए मेरे पूर्वज श्राद्ध में इच्छापूर्वक भोजन नहीं कर सकेंगे ॥ ६६ ॥

मत्परं दुर्लभं मत्वा नूनमावर्जितं मया ।
पयः पूर्वैः स्वनिश्वासैः कवोष्णमुपभुज्यते ॥ ६७ ॥

( अन्वयः ) मत्परं दुर्लभं मत्वा ( इदानीं ) मया आवर्जितं पयः पूर्वैः स्वनिश्वासैः कवोष्णम् उपभुज्यते ॥ ६७ ॥

( सुबोधिनी ) मत्परं ( मदनन्तरं ) दुर्लभं ( दुष्प्रापं ) मत्वा ( विचार्य ) "इदानीं" मया, आवर्जितं ( दत्तं ) पयः ( जलं ) पूर्वैः

( प्राग्भवैः पितृभिः ) स्वनिश्वासैः (दुःखसम्भवैः मुखवायुभिः) कवोष्णं ( मन्दोष्णं ) यथातथा, उपभुज्यते ( पीयते ) ॥ ६७ ॥

( समासः ) स्वस्य निश्वासाः स्वनिश्वासास्तैः ॥ ६७ ॥

( वाच्यपरिवर्तनम् ) मत्परं दुर्लभं मत्वा मया आवर्जितं पयः पूर्वैः स्वनिश्वासैः कवोष्णम् उपभुञ्जते ॥ ६७ ॥

( सरलार्थ ) निश्चय है कि मेरे पूर्वज मेरे बाद जल मिलना दुर्लभ समझ कर वर्त्तमान समय मेरे दिये हुए जलको शोक की स्वांस से कुछ गरम कर पीते हैं ॥ ६७ ॥

सोऽहमिज्याविशुद्धात्मा प्रजालोपनिमीलितः ।
प्रकाशश्चाप्रकाशश्च लोकालोक इवाचलः ॥ ६८ ॥

( अन्वयः ) इज्याविशुद्धात्मा प्रजालोपनिमीलितः सः अहं लोकालोकः अचलः इव प्रकाशश्चअप्रकाशश्च ॥ ६८ ॥ "अस्मि"

( सुबोधिनी ) इज्याविशुद्धात्मा ( यागपूतचेतनः ) प्रजालोपनिमीलितः ( सन्तत्यभावेन कृतनिमीलनः ) सः, अहं [1]लोकालोकः ( चक्रवालः ) अचलः ( पर्वतः ) इव ( यथा ) प्रकाशः, अप्रकाशः, च, देवर्णविमोचनात्प्रकाशः, पित्रर्णाविमोचनादप्रकाश इति भावः ॥६८॥ ( समासः ) इज्याविशुद्धात्मा = इज्यया विशुद्धः आत्मा यस्य सः । प्रजालोपनिमीलितः = प्रजायाः लोपः प्रजालोपः, तेन निमीलितः,

---

( १ ) साब्धिद्वीपां महीमावेष्ट्य प्राकारवत् स्थितो गिरिः, लोकालोकः । तथा च पाद्मे :—

" स्वादूदकस्य परतो लोकालोकाचलो महान् ।
लोकस्य चाप्यलोकस्य मध्ये गिरिरिव स्थितः ॥ १ ॥
प्राकार इव संवेष्टय लोकान् सर्वान् महामते ।
लोकालोकाचलो नाम तेनासौ परिकीर्तितः ॥ २ ॥
लोकालोको गिरिर्यस्तु लोकान्ते वर्तते महान् ।
आवृणोति स तेजांसि सूर्य्यादीनामपि द्विज ॥ ३ ॥
तमतिक्रम्य ज्योतींषि क्षमन्ते न प्रवर्तितुम् ।
योऽन्तर्विस्तार एतस्या भूम्यास्ते परिवर्णितः ॥ ४ ॥
तावती भूरलोकाख्या सान्द्रसन्तमसावृता ॥"

इत्यादि ।

लोकालोकः = ( अन्तः ) लोक्यते ( सूर्यरश्मिभिः स्पृश्यमानत्वात् ) इति लोकः, तथा ( बहिः सूर्यकिरणस्पर्शाभावात् ) न लोक्यते इत्यलोकः, लोकश्चासावलोकश्चेति लोकालोकः । प्रकाशत इति प्रकाशः । न प्रकाशत इत्यप्रकाशः ॥ ६८ ॥

( वाच्यपरिवर्तनम् ) तेन मया इज्याविशुद्धात्मना प्रजालोपनिमीलितेन सता अचलेन लोकालोकेन इव प्रकाशेन अप्रकाशेन च भूयते ॥ ६८ ॥

( सरलार्थ ) मैं यज्ञ करने के कारण शुद्ध हृदयवाला, पुत्र न होने से अन्धा, प्रकाशवान और अप्रकाशवान लोकालोक पर्वत की तरह हूं ॥ ६८ ॥

लोकान्तरसुखं पुण्यं तपोदानसमुद्भवम् ।
सन्ततिः शुद्धवंश्या हि परत्रेह च शर्म्मणे ॥ ६९ ॥

( अन्वयः ) तपोदानसमुद्भवं " यत् " पुण्यं " तत् " लोकान्तरसुखं, शुद्धवंश्या सन्ततिः हि इह परत्र च शर्मणे { भवति } ॥ ६९ ॥

( सुबोधिनी ) तपोदानसमुद्भवं ( कृच्छ्रचान्द्रायणादितपसा दानेन च समुत्पन्नं ) " यत् " पुण्यं ( सुकृतं ) " तत् " लोकान्तरसुखं ( परलोकसुखावहं ) शुद्धवंश्या ( शुद्धान्वया ) सन्ततिः ( प्रजा ) इह ( अस्मिँल्लोके ) परत्र ( परलोके च ) शर्मणे ( सुखाय ) भवतीति शेषः ॥ ६९ ॥

( समासः ) तपोदानसमुद्भवं = समुद्भवत्यस्मादिति समुद्भवः ( कारणं ) तपश्च दानञ्च तपोदाने, तपोदाने समुद्भवो यस्य तत् । लोकान्तरसुखं = सुखयति इति सुखम् , अन्यः लोकः लोकान्तरं

( १ ) पुत्रस्य उभयलोकसुखावहत्वे प्रमाणं यथा महाभारते—
"यदागमवतः पुंसस्तदपत्यं प्रजायते ।
तत्तारयति सन्तत्या पूर्व्वप्रेतान् पितामहान् ॥ १ ॥
पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः ।
तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥ २ ॥
पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते ।
अथ पौत्रस्य पुत्रेण ब्रध्नस्याप्नोति पिष्टपम् ॥ ३ ॥"

तस्मिन् सुखं लोकान्तरसुखं । शुद्धवंश्या = शुद्धवंशे भवा शुद्धवंश्या । परत्र = परस्मिन्निति परत्र ॥ ६९ ॥

( वाच्यपरिवर्तनम् ) तपोदानसमुद्भवेन पुण्येन लोकान्तरसुखेन ( भूयते ) हि शुद्धवंश्यया सन्तत्या परत्र इह च शर्मणे ( भूयते ) ॥ ६९ ॥

( सरलार्थ ) तप और दान से उत्पन्न पुण्य परलोक में सुख देने वाला होता है पर शुद्धवंश की सन्तान इस लोक और परलोक दोनो ही लोक में सुखदायी होती है ॥ ६९ ॥

तया हीनं विधातर्मां कथं पश्यन्न दूयसे ।
सिक्तं स्वयमिव स्नेहाद्वन्ध्यमाश्रमवृक्षकम् ॥ ७० ॥

( अन्वयः ) हे विधातः ! तया हीनं मां स्नेहात् स्वयम् " एव " सिक्तं वन्ध्यम् आश्रमवृक्षकम् इव पश्यन् कथं न दूयसे ॥ ७० ॥

हे विधातः ( हे स्रष्टः ! ) तया ( सन्तत्या ) हीनं ( रहितं, अनपत्यमित्यर्थः ) मां, स्नेहात् ( प्रेम्णा ) स्वयमेव, सिक्तं ( जलसेचनेन वर्धितं ) वन्ध्यं ( फलरहितं ) आश्रमवृक्षकं ( आश्रमस्थं वृक्षशिशुं ) इव ( यथा ) पश्यन् ( अवलोकयन् ) " त्वं " कथं (कस्मात्) न दूयसे ( न परितप्यसे ॥ ७० ॥

( समासः ) आश्रमवृक्षकं = आश्रमस्य वृक्षक आश्रमवृक्षकस्तम् पश्यन् = पश्यतीति पश्यन् ॥ ७० ॥

( वाच्यपरिवर्तनम् ) हे विधातः ............ मां पश्यता ( सता-त्वया ) कथं न दूयते ॥ ७० ॥

( सरलार्थ ) प्यार से अपने सींचे आश्रमवृक्ष को निष्फल देख जैसे आपको खेद होता है उस तरह सन्तानहीन मुझ दीन को देख क्यों दुःखी नहीं होते हो ॥ ७० ॥

असह्यपीडं भगवन्नृणमन्त्यमवेहि मे ।
अरुन्तुदमिवालानमनिर्वाणस्य दन्तिनः ॥ ७१ ॥

( अन्वयः ) हे भगवन् ! मे अन्त्यम् ऋणम् अनिर्वाणस्य दन्तिनः अरुन्तुदम् आलानम् इव असह्यपीडम् अवेहि ॥ ७१ ॥

( सुबोधिनी ) हे भगवन्[१] ( हे परमेश्वर ! ) मे ( मम ) अन्त्यं ( देवर्षिपितृसम्बन्धिनः, ऋणस्य अन्त्यं ) ऋणं ( पैतृकमृणं[२]) [३]अनिर्वाणस्य ( मज्जनरहितस्य ) दन्तिनः ( गजस्य ) अरुन्तुदं ( मर्मस्पृशं) आलानं ( बन्धनस्तम्भं ) इव, असह्यपीडं ( दुःसहदुःखजनकं ) अवेहि ( जानीहि ) ॥ ७१ ॥

( समासः ) अनिर्वाणस्य = न निर्वाणोऽनिर्वाणस्तस्य ( न० त०) अरुन्तुदं = अरुं तुदतीति अरुन्तुद् तत् । असह्यपीडं = सोढुं शक्या सह्या, न सह्या असह्या, असह्या पीड़ा यस्मिंस्तत् ( ब० ) ॥ ७१ ॥

( वाच्यपरिवर्तनम् ) हे भगवन्...अन्त्यं ऋणं त्वया अवेयताम् ॥

( सरलार्थ ) बान्धेहुए हाथी के मर्म छेदने वाले खम्भे की तरह मेरी पितृऋण-पीड़ा को असह्य जानो ॥ ७१ ॥

तस्मान्मुच्ये यथा तात संविधातुं तथार्हसि ।
इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः ॥ ७२ ॥

( अन्वयः ) हे तात ! तस्मात् यथा मुच्ये तथा संविधातुं "त्वं" अर्हसि । हि इक्ष्वाकूणां दुरापे अर्थे सिद्धयः त्वदधीनाः ॥ ७२ ॥

---

(१) अत्र भगवच्छब्दस्य सर्वज्ञत्वमुक्तमभियुक्तैः—तथा च—
"उत्पत्तिं प्रलयञ्चैव आगतिञ्च गतिं तथा ।
वेत्ति विद्यामविद्याञ्च भगवान् स उदीर्यते ॥„

( २ ) निर्वाणोत्थानशयनानि त्रीणि गजकर्माणि " इति पालकाप्यशास्त्रम् ॥

( ३ ) तथा च विष्णुधर्मोत्तरे :—
"देवानाञ्च पितृणाञ्च ऋषीणाञ्च तथा नरः ।
ऋणवान् जायते यस्मात् तन्मोक्षे प्रयतेत सः ॥"

तन्मोक्षोपायस्तु :—
"देवानामनृणो नूनं यज्ञैर्भवति मानवः ।
अल्पवित्तश्च पूजाभिरुपवासव्रतैस्तथा ॥ १ ॥
श्राद्धेन प्रजया चैव पितृणामनृणो भवेत् ।
ऋषीणां ब्रह्मचर्य्येण श्रुतेन तपसा तथा ॥ २ ॥

अन्यत्र च :—
"ऋणं देवस्य यागेन ऋषीणां पाठकर्म्मणा ।
सन्तत्या पितृलोकानां शोधयित्वा परिव्रजेत् ॥ १

( सुबोधिनी ) हे तात ! ( हे पितः ! ) तस्मात् ( पैतृकादृणात् ) यथा ( येन प्रकारेण ) मुच्ये ( मुक्तो भवामि ) तथा ( तेन प्रकारेण ) संविधातुं ( कर्तुं ) "त्वं" अर्हसि ( योग्यो भवसि ) हि ( यस्मात्कारणात् ) इक्ष्वाकूणां ( इक्ष्वाकुवंशीयानां ) दुरापे ( दुष्प्रापे ) अर्थे ( प्रयोजने ) सिद्धयः ( कार्यसिद्धयः ) त्वदधीनाः ( त्वदायत्ताः ) ॥ ७२ ॥

( समासः ) त्वदधीनाः = तव अधीनाः त्वदधीनाः ॥ ७२ ॥

( वाच्यपरिवर्तनम् ) तात यथा तस्मात् ( मया ) मुच्यते तथा संविधातुं ( त्वया ) अर्ह्यते, हि इक्ष्वाकूणां दुरापेऽर्थे सिद्धिभिः त्वदधीनाभिः भूयते ॥ ७२ ॥

( सरलार्थ ) हे तात ! उस दुःख से जिस भांति मैं मुक्त हो सकूं उस उपायको आप करने योग्य हो । ऐसे २ कठिन कार्य में इक्ष्वाकुवंशियों की सिद्धि आपही के हाथ रहा करती है ॥ ७२ ॥

इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः ।
क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः ॥ ७३ ॥

( अन्वयः ) इति राज्ञा विज्ञापितः ऋषिः ध्यानस्तिमितलोचनः सन् क्षणमात्रं सुप्तमीनः ह्रदः इव तस्थौ ॥ ७३ ॥

( सुबोधिनी ) इति ( इत्थं, अनेन प्रकारेण वा ) राज्ञा ( दिलीपेन ) विज्ञापितः ( प्रार्थितः, निवेदितः ) ऋषिः ( मुनिर्वसिष्ठः ) ध्यानस्तिमितलोचनः ( ध्याननिश्चलाक्षः ) सन् क्षणमात्रं ( मुहूर्तमात्रं ) सुप्तमीनः ( निद्रितमत्स्यः ) ह्रदः ( सरः ) इव ( यथा ) तस्थौ ( स्थितवान् ) ॥ ७३ ॥

( समासः ) ध्यानस्तिमितलोचनः = ध्यानेन स्तिमिते लोचने यस्यासौ । सुप्तमीनः = सुप्ताः ( निद्रिताः ) निस्पन्दभावेन अवस्थिताः ) मीनाः यस्मिन् सः ॥ ७३ ॥

( वाच्यपरिवर्तनम् ) इति राज्ञा विज्ञापितेन ऋषिणा ध्यानस्तिमितलोचनेन सुप्तमीनेन ह्रदेन इव क्षणमात्रं तस्थे ॥ ७३ ॥

( सरलार्थ ) इस प्रकार राजा से निवेदन किये वसिष्ठ महाराज, सोई हुई मछलियोंवाले तालाब की तरह ध्यान में आंखें मूंदकर क्षणमात्र चुपचाप रहे ॥ ७३ ॥

सोपश्यत्प्रणिधानेन सन्ततेः स्तम्भकारणम् ।
भावितात्मा भुवो भर्तुरथैनं प्रत्यबोधयत् ॥ ७४ ॥

( अन्वयः ) प्रणिधानेन भावितात्मा सः भुवः भर्तुः सन्ततेः स्तम्भ-कारणम् अपश्यत् अथ एनं प्रत्यबोधयत् ॥ ७४ ॥

( सुबोधिनी ) प्रणिधानेन ( योगसमाधिना ) "प्रणिधानं प्रयत्ने स्यात् प्रवेशे च समाहितौ" इति विश्वः । भावितात्मा ( पूतान्तः करणः ) सः ( महर्षिर्वसिष्ठः ) भुवः ( पृथिव्याः ) भर्तुः ( स्वामिनो दिलीपस्य ) सन्ततेः ( सन्तानस्य ) स्तम्भकारणं ( प्रतिबन्धुहेतुं ) अपश्यत् ( दृष्टवान् ) अथ ( सन्तानप्रतिबन्धकारणदर्शनानन्तरं ) एनं ( राजानं दिलीपं ) प्रत्यबोधयत् ( ज्ञापितवान् ) ॥ ७४ ॥

( समासः ) भावितात्मा = भावितः ( समाधिना विशुद्धः ) आत्मा ( अन्तःकरणं ) यस्य सः ( ब० ) स्तम्भस्य कारणं स्तम्भ-कारणम् ॥ ७४ ॥

( वाच्यपरिवर्तनम् ) भावितात्मना तेन भुवः········अदृश्यत, अथ एषः प्रत्यबोध्यत ॥ ७४ ॥

( सरलार्थ ) इस प्रकार ध्यान से सन्तान के प्रतिबन्ध-कारण को जानकर राजा को कह सुनाया ॥ ७४ ॥

पुरा शक्रमुपस्थाय तवोर्वीं प्रति यास्यतः ।
आसीत्कल्पतरुच्छायामाश्रिता सुरभिः पथि ॥ ७५ ॥

( अन्वयः ) पुरा शक्रम् उपस्थाय उर्वीं प्रति यास्यतः तव पथि कल्पतरुच्छायाम् अश्रिता सुरभिः आसीत् ॥ ७५ ॥

( सुबोधिनी ) पुरा ( पूर्वं ) शक्रं ( इन्द्रं ) उपस्थाय (संसेव्य) उर्वीं ( भुवं ) प्रति ( उद्दिश्य ) यास्यतः (आगमिष्यतः) तव (भवतः) पथि ( वर्त्मनि ) कल्पतरुच्छायां ( कल्पवृक्षस्य अधस्तात् ) आश्रिता ( स्थिता ) सुरभिः ( कामधेनुः ) आसीत् ॥ ७५ ॥

( समासः ) कल्पतरुच्छायां = कल्पतरोः छाया कल्पतरुच्छाया तां ॥ ७५ ॥

( वाच्यपरिवर्तनम् ) पुरा............सुरभ्या कल्पतरुच्छायां आश्रितया सत्या अभूयत ॥ ७५ ॥

( सरलार्थ ) इन्द्र की सेवा कर पृथ्वी की ओर लौटते हुए तेरे मार्ग में, कामधेनू, कल्पवृक्ष की छाया में बैठी थी ॥ ७५ ॥

धर्मलोपभयाद्राज्ञीं ऋतुस्नातामिमां स्मरन् ।
प्रदक्षिणक्रियार्हायां तस्यां त्वं साधु नाचरः ॥ ७६ ॥

( अन्वयः ) ऋतुस्नाताम् इमां राज्ञीं धर्मलोपभयात् प्रदक्षिणक्रियार्हायां तस्यां त्वं साधु न आचरः ॥ ७६ ॥

( सुबोधिनी ) ऋतुस्नातां ( रजोदर्शननिमित्तेन संस्नातां ) इमां ( पुरोवर्तिनीं ) राज्ञीं ( सुदक्षिणां ) धर्मलोपभयात् ( ऋतुप्राप्तौ अभिगमनरूपधर्मस्य लोपभीतेः ) स्मरन् (ध्यायन् तामेवानुचिन्तयन्) प्रदक्षिणक्रियार्हायां ( प्रदक्षिणकरणयोग्यायां ) तस्यां ( कामधेन्वां ) त्वं ( भवान् ) साधु ( उचितं प्रदक्षिणादिसत्कारं ) न आचरः ( नाचरितवानसि ) ॥ ७६ ॥

( समासः ) ऋतुस्नातां = ऋतुना ( निमित्तेन ) स्नाता ऋतुस्नाता तां धर्मलोपभयात् = धर्मस्य लोपः धर्मलोपस्तस्मात् भयं धर्मलोपभयं तस्मात् । प्रदक्षिणक्रियार्हायां = प्रगतं दक्षिणं प्रदक्षिणं प्रदक्षिणस्य क्रिया प्रदक्षिणक्रिया, तां अर्हतीति प्रदक्षिणक्रियार्हा तस्यां । स्मरन् = स्मरतीति स्मरन् ॥ ७६ ॥

---

( १ ) इक्ष्वाकुवंश्याः सर्वेऽपि राजानः पुरन्दरस्य आराधनाय स्वर्गं गच्छन्ति अतस्ते भुवनत्रये अस्खलितगतयो भवन्तीति बोध्यम् ।

( २ ) कल्पतरुर्देववृक्षविशेषः । तथा च—अमरसिंहः—
"पञ्चैते देवतरवो मन्दारः पारिजातकः ।
सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥ "

( ३ ) ऋतौ भार्यागमने मनुः—"ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा" तथा च श्रुतिः—ऋतौ भार्यामुपेयात् " ॥
अनभिगमने दोषमाह पराशरः—"ऋतुस्नातां तु यो भार्यां स्वस्थः सन्नोपसर्पति ।
बालगोघ्नापराधेन विध्यते नात्र संशयः ॥ "

( ४ ) मृदङ्गं दैवतं विप्रं घृतं मधु चतुष्पथम् ।
प्रदक्षिणानि कुर्वीत विज्ञातांश्च वनस्पतीन् " इति नीतिसंग्रहः ।

( वाच्यपरिवर्तनम् )......राज्ञीं स्मरता ( सता ) त्वया प्रदक्षिण-क्रियार्हायां तस्यां ( धेन्वां ) साधु न आचर्यत ॥ ७६ ॥

( सरलार्थ ) उस समय यह सुदक्षिणा रजस्वला के चौथे दिन को स्नानकर तेरे समागम की बाट जोहती हुई बैठी थी। तूने, ऋतुकाल का पालन न करने के कारण धर्मलोप होगा इस भयसे ऋतुस्नान की हुई रानी को स्मरण करते हुए प्रदक्षिणा करने योग्य उस सुरभी का सन्मान न किया ॥ ७६ ॥

अवजानासि मां यस्मादतस्ते न भविष्यति ।
मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा ॥ ७७ ॥

( अन्वयः ) यस्मात् मां अवजानासि अतः मत्प्रसूतिम् अनाराध्य ते प्रजा न भविष्यति इति सा त्वां शशाप ॥ ७७ ॥

( सुबोधिनी) यस्मात् (यतः) माम् अवजानासि (मां तिरस्करोषि) अतः ( अस्मात् कारणात् ) मत्प्रसूतिं (मम सन्ततिं, सौरभेयीं) अना-राध्य ( न सेवयित्वा ) ते ( तव ) प्रजा (सन्ततिः) न भविष्यति, इति ( इत्थं ) सा ( कामधेनुः ) त्वां ( भवन्तं ) शशाप (अशपत् ) ॥७७॥

( समासः ) मत्प्रसूतिं = मम प्रसूतिः मत्प्रसूतिस्ताम् ॥ ७७ ॥

( वाच्यपरिवर्तनम् ) यस्मात् त्वया अवज्ञाये अतः मत्प्रसूतिम् अनाराध्य ते प्रजया न भूविष्यते इति तया त्वं शेपे ॥ ७७ ॥

( सरलार्थ ) तूने मेरा अनादर किया इस कारण मेरी सन्तति को आराधना किये बिना तुझे सन्तति न होगी ऐसा उसने तुझे शाप दिया ॥ ७७ ॥

स शापो न त्वया राजन्नच सारथिना श्रुतः ।
नदत्याकाशगङ्गायाः स्रोतस्युद्दामदिग्गजे ॥ ७८ ॥

( अन्वयः ) हे राजन् सः शापः उद्दामदिग्गजे आकाशगङ्गायाः स्रोतसि नदति सति त्वया सारथिना च न श्रुतः ॥ ७८ ॥

( सुबोधिनी ) हे राजन् ! ( भूप ) सः शापः ( उपरोक्तः सुरभि-शापः ) उद्दामदिग्गजे (उन्मुक्तगजे) आकाशगङ्गायाः (मन्दाकिन्याः)

स्रोतसि ( प्रवाहे ) नदति ( "हर हर" शब्दं कुर्वति ) सति, त्वया ( भवता ) सारथिना ( सूतेन ) च न श्रुतः ( न आकर्णितः ) ॥७८॥

( समासः ) आकाशगङ्गायाः = आकाशे स्थिता गङ्गा आकाशगङ्गा तस्याः । उद्दामदिग्गजे = दाम्नः उद्गताः ( उच्छृङ्खलाः ) दिग्गजाः ( ऐरावतादयः ) यस्मिंस्तत्तस्मिन् ॥ ७८ ॥

( वाच्यपरिवर्तनम् )......नदति ( सति ) तं शापं त्वं न श्रुतवान् सारथिः च न श्रुतवान् ॥ ७८ ॥

( सरलार्थ ) हे राजन् उस शापको आकाशगङ्गाके प्रवाहमें मत-वाले दिग्गजों का शब्द होने के कारण तू ने और तेरे सारथी ने भी नहीं सुना ॥ ७८ ॥

ईप्सितं तदवज्ञानाद्विद्धि सार्गलमात्मनः ।
प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ॥७९ ॥

( अन्वयः ) तदवज्ञानात् आत्मनः ईप्सितं सार्गलं विद्धि । हि पूज्यपूजाव्यतिक्रमः श्रेयः प्रतिबध्नाति ॥ ७९ ॥

( सुबोधिनी ) तदवज्ञानात् ( कामधेनोरपमानात् ) आत्मनः ( स्वस्य ) ईप्सितं ( सन्तानरूपं मनोरथं ) सार्गलं ( सप्रतिबन्धं ) विद्धि ( जानीहि ) हि (यतः) पूज्यपूजाव्यतिक्रमः[1] (पूज्यपूजालङ्घनं) श्रेयः ( कल्याणं ) प्रतिबध्नाति[2] ( अवरुणद्धि ) ॥ ७९ ॥

( समासः ) तदवज्ञानात् = तस्या अवज्ञानं तदवज्ञानं तस्मात् ( ६ त० ) सार्गलं = अर्गलेन सहितं सार्गलं ( ३ त० ) पूज्यपूजाव्यति-क्रमः = पूज्यानां पूजा पूज्यपूजा तस्याः व्यतिक्रमः पूज्यपूजाव्यतिक्रमः

( वाच्यपरिवर्तनम् ) तदवज्ञानात् ( त्वया ) सार्गलं विद्यताम् । हि पूज्यपूजाव्यतिक्रमेण श्रेयः प्रतिबध्यते ॥ ७९ ॥

( सरलार्थ ) उस कामधेनुकी अवज्ञा होनेसे तू अपना मनोरथ रुका हुआ समझ । पूज्यकी पूजाका उल्लङ्घन कल्याणको रोकताहीहै ॥

---

( १ ) पूज्यानां पूजाव्यतिक्रमे दोषमाह :—
अपूज्या यत्र पूज्यन्ते पूज्यानाञ्च व्यतिक्रमः ।
त्रीणि तत्र भविष्यन्ति दुर्भिक्षं मरणं भयम् ।

( २ ) मनोरथावाप्तिप्रतिबन्धकोभवतीतिभावः ।

हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतसः ।
भुजङ्गपिहितद्वारं पातालमधितिष्ठति ॥ ८० ॥

( अन्वयः ) सा च इदानीं दीर्घसत्रस्य प्रचेतसः हविषे भुजङ्गपिहितद्वारं पातालम् अधितिष्ठति ॥ ८० ॥

( सुबोधिनी ) सा ( सुरभिः ) इदानीं ( अस्मिन् समये ) दीर्घसत्रस्य ( बहुकालसाध्ययागविशेषस्य ) प्रचेतसः ( वरुणस्य ) हविषे ( दध्याज्यादिप्रयोजनसाधनाय ) भुजङ्गपिहितद्वारं ( सर्पावृतद्वारं ) पातालं (पाताललोकम्)अधितिष्ठति (पाताले तिष्ठतीति भावः) ॥८०॥

( समासः ) दीर्घसत्रस्य=दीर्घं सत्रं यस्य तस्य। भुजङ्गपिहितद्वारं=भुजाभ्यां गच्छन्तीति भुजङ्गाः, तैः पिहितं द्वारं यस्य तत् ॥८०॥

( वाच्यपरिवर्तनम् ) तया च इदानीं..................पातालम् अधिष्ठीयते ॥ ८० ॥

( सरलार्थ) वह कामधेनु बहुकालसाध्य यज्ञ करनेवाले वरुण को हविष देने के निमित्त इन दिनों सापों से रुके हुए द्वारवाले पाताल में रहती है ॥

सुतां तदीयां सुरभेः कृत्वा प्रतिनिधिं शुचिः ।
आराधय सपत्नीकः प्रीता कामदुघा हि सा ॥ ८१ ॥

( अन्वयः ) तदीयां तां, सुरभेः प्रतिनिधिं कृत्वा शुचिः "भूत्वा" सपत्नीकः "सन्" आराधय, हि सा प्रीता सती " कामदुघा ( भवतीतिशेषः ) ॥ ८१ ॥

( सुबोधिनी ) तदीयां ( कामधेनुसम्बन्धिनीं ) तां ( नन्दिनीं ) सुरभेः ( कामधेनोः ) प्रतिनिधिं ( स्थानापन्नां ) कृत्वा ( विधाय ) शुचिः ( शुद्धः ) "भूत्वा" सपत्नीकः ( धर्मपत्नीसहितः ) सन्, आराधय ( प्रसादय ) हि ( यतः ) सा ( नन्दिनी ) प्रीता ( प्रसन्ना ) "सती" कामदुघा ( मनोरथप्रसूः ) भवतीतिशेषः ॥ ८१ ॥

( समासः ) तदीयां=तस्या इयं तदीया तां । पत्नी ( सहधर्मचारिणी ) तया सह वर्तते इति सपत्नीकः । कामान् ( मनोरथान् ) दुग्धे ( सूते ) इति कामदुघा ॥ ८१ ॥

( वाच्यपरिवर्तनम् ) सपत्नीकेन (त्वया) शुचिना (सता) तदीयां सुतां सुरभेः प्रतिनिधिं कृत्वा आराध्यतां हि तया प्रीतया कामदुघया भूयते ॥ ८१ ॥

( सरलार्थ ) उस कामधेनु की लड़की को उसी के स्थान पर मानकर तुम शुद्धमन से रानी सहित उसकी सेवा करो, प्रसन्न होने पर वह निश्चय तुम्हारा मनोरथ पूर्ण करेगी ॥ ८१ ॥

इति वादिन एवास्य होतुराहुतिसाधनम् ।
अनिन्द्या नन्दिनी नाम धेनुराववृते वनात् ॥ ८२ ॥

( अन्वयः ) इति वादिनः एव होतुः अस्य आहुतिसाधनं नन्दिनी नाम अनिन्द्या धेनुः वनाद् आववृते ॥ ८२ ॥

( सुबोधिनी ) इति ( इत्थं ) वादिनः ( वदतः ) एव होतुः ( हवनशीलस्य ) अस्य ( मुनेः वसिष्ठस्य ) आहुतिसाधनं ( आहुतिकारणं ) नन्दिनीनाम ( नन्दिनीत्यभिधेया ) अनिन्द्या ( अगर्ह्या ) धेनुः ( नन्दिनी ) वनात् ( अरण्यात् ) [1]आववृते (प्रत्याजगाम) ॥ ८२

( समासः ) आहुतिसाधनं = आहुतीनां साधनं ( ६ त० ) ॥ ८२ ॥

( वाच्यपरिवर्तनम् ) इति............आहुतिसाधनेन नन्दिन्या ( इति ) नाम्न्या अनिन्द्या धेन्वा वनाद् आववृते ॥ ८२ ॥

( सरलार्थ ) उस होता के इतना कहते ही उसकी आहुति साधने वाली नन्दिनी नाम की धेनु वन से लौट कर आई ॥ ८२ ॥

ललाटोदयमाभुग्नं पल्लवस्निग्धपाटला ।
बिभ्रती श्वेतरोमाङ्कं सन्ध्येव शशिनं नवम् ॥ ८३ ॥

( अन्वयः ) पल्लवस्निग्धपाटला ललाटोदयम् आभुग्नं श्वेतरोमाङ्कं बिभ्रती नवं शशिनं बिभ्रती सन्ध्या इव स्थिता ॥ ८३ ॥

( सुबोधिनी ) पल्लवस्निग्धपाटला ( किसलयवत्स्निग्धश्वेतरक्तवर्णा ) ललाटोदयं ( भालस्थलोद्भवं ) आभुग्नं (इषद्वक्रं) श्वेतरोमाङ्कं

---

१. तदानीमेव नन्दिन्याः समागमनेन अविलम्बेन कार्यसिद्धिः सूचिता । तथाच :—"अविलम्बो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम्" इति शकुनशास्त्रम् ।

( शुभ्रलोमचिन्हं ) बिभ्रती ( धारयन्ती ) नवं ( नूतनं ) शशिनं (चन्द्रमसं) बिभ्रती सन्ध्या ( सन्ध्याकाल इव ) स्थिता ॥ ८३ ॥

( समासः )पल्लवस्निग्धपाटला = स्निग्धा चासैा पाटला स्निग्ध-पाटला, पल्लववत् स्निग्धपाटला पल्लवस्निग्धपाटला । ललाटोदयं = ललाटे उदयो यस्य सः तं ( ब० ) श्वेतरोमाङ्कं = श्वेतानि रोमाणि, श्वेतरोमाणि, तान्येव अङ्कः श्वेतरोमाङ्कस्तम् ॥ ८३ ॥

( वाच्यपरिवर्तनम् ) पल्लवस्निग्धपाटलया, ललाटोदयं......... बिभ्रत्या सन्ध्यया इव ( धेन्वा आववृते ) ॥ ८३ ॥

( सरलार्थ ) नये चन्द्रमा को धारण करने वाली सन्ध्या की तरह तथा नवीन पल्लव की तरह कोमल लालरङ्ग वाली, माथे पर सफेद बालों का कुछ बांका टीका धारण की हुई ( धेनु आई ) ॥ ८३ ॥

भुवं कोष्णेन कुण्डोध्नी मेध्येनावभृथादपि ।
प्रस्नवेनाभिवर्षन्ती वत्सालोकप्रवर्तिना ॥ ८४ ॥

( अन्वयः ) कोष्णेन अवभृथादपि मेध्येन वत्सालोकप्रवर्तिना प्रस्नवेन भुवम् अभिवर्षन्ती कुण्डोध्नी ॥ ८४ ॥

( सुबोधिनी ) कोष्णेन ( मन्दोष्णेन ) अवभृथात् ( अवभृथस्नानात् ) अपि, मेध्येन ( पवित्रेण ) वत्सालोकप्रवर्तिना ( वत्सदर्शनेन प्रवहता ) प्रस्नवेन ( क्षीराभिस्यन्दनेन ) भुवं ( पृथ्वीं ) अभिवर्षन्ती ( सिञ्चन्ती ) कुण्डोध्नी ( कुण्डसदृशोध्नी ) ॥ ८४ ॥

( समासः ) वत्सालोकप्रवर्तिना = वत्सस्य आलोकः वत्सालोकः, वत्सालोकेन प्रवर्तत इति वत्सालोकप्रवर्ती तेन । कुण्डोध्नी कुण्डयति ( जलं होमाग्निं वा ) इति कुण्डम् ( प्रशस्तः जलाधारः कुम्भादिः, होमाग्नेः आधारो वा ) तदिव ऊधः ( आपीनं ) यस्याः सा कुण्डोध्नी । प्रकृष्टं सम्यक् स्नौति क्षरति इति प्रस्नवः ( निःसरणं निसृतं क्षीरमित्यर्थः ) ॥ ८४ ॥

( वाच्यपरिवर्तनम् ) .....................अभिवर्षन्त्या कुण्डोध्न्या ( धेन्वा आववृते ) ॥ ८४ ॥

( सरलार्थः ) यज्ञ के अन्त में होनेवाले अवभृथ स्नान से भी अति पवित्र और बछड़े को देखने से अपने आप बहती हुई दूधकी धारसे पृथ्वी को अभिषिक्त करती हुई ( धेनु आई ) ॥ ८४ ॥

रजः कणैः खुरोद्धूतैः स्पृशद्भिर्गात्रमन्तिकात् ।
तीर्थाभिषेकजां शुद्धिमादधाना महीक्षितः ॥ ८५ ॥

( अन्वयः ) खुरोद्धूतैः, अन्तिकाद्, गात्रं, स्पृशद्भिः, रजःकणैः, महीक्षितः, तीर्थाभिषेकजां, शुद्धिम्, आदधाना ॥ ८५ ॥

( सुबोधिनी ) खुरोद्धूतैः, ( शफोत्क्षिप्तैः ) अन्तिकात् (समीपे) गात्रं ( शरीरं ) स्पृशद्भिः ( स्पर्शं कुर्वद्भिः ) रजःकणैः ) ( धूलिकणैः, धूलिलेशैरित्यर्थः ) महीक्षितः ( राज्ञो दिलीपस्य ) [1]तीर्थाभिषेकजां (पवित्रतीर्थजलाभिषेकसम्भवां) शुद्धिं (शौचं) आदधाना(कुर्वाणा) ८५

( समासः ) खुरोद्धूतैः = खुराभ्यां उद्धूतास्तैः । रजःकणैः = रजसां कणाः रजःकणास्तैः । महीक्षितः = महीं क्षियते ( ईष्टे ) इति महीक्षित् तस्य । तीर्थाभिषेकजां = तीर्थस्य तीर्थजलस्य अभिषेकस्तीर्थाभिषेकः, तस्माज्जातेति तीर्थाभिषेकजा ताम् ॥ ८५ ॥

( वाच्यपरिवर्तनम् ) खुरोद्धूतैः ............ शुद्धिम् आदधानया ( तया आववृते ) ॥ ८५ ॥

( सरलार्थ ) खुरों से उठे हुए, समीपता के कारण शरीर को स्पर्श करते हुए रज के कणों से राजा को मानों तीर्थस्नान की शुद्धि देती हुई ॥ ८५ ॥

तां पुण्यदर्शनां दृष्ट्वा निमित्तज्ञस्तपोनिधिः ।
याज्यमाशंसितावन्ध्यप्रार्थनं पुनरब्रवीत् ॥ ८६ ॥

( अन्वयः ) निमित्तज्ञः तपोनिधिः पुण्यदर्शनां तां दृष्ट्वा आशंसितावन्ध्यप्रार्थनं याज्यं ( तं ) पुनः अब्रवीत् ॥ ८६ ॥

---

१. एतेन वायव्यं स्नानमुक्तम् । तथा च कौर्म्मः—
" ब्राह्ममाग्नेयमुद्दिष्टं वायव्यं दिव्यमेव च ।
वारुणं यौगिकं तद्वत् षोढा स्नानं प्रकीर्तितम् ।
ब्राह्मं तु मार्ज्जनं मन्त्रैः कुशैः सोदकबिन्दुभिः ।
आग्नेयं भस्मना पादमस्तकादि विधूननम् ॥ २ ॥
गवां हि रजसा प्रोक्तं वायव्यं स्नानमुत्तमम् ।
यत्तु सातपवर्षेण स्नानं तद् दिव्यमुच्यते ॥ ३ ॥
वारुणञ्चावगाह्यं तु मानसन्त्वात्मवेदनम् ।
यौगिकं स्नानमाख्यातं योगो विष्णुविचिन्तनम् ।

( सुबोधिनी ) निमित्तज्ञः ( शकुनज्ञः ) तपोनिधिः ( तपस्वी वसिष्ठः ) पुण्यदर्शनां ( पवित्रदर्शनां ) तां ( धेनुं ) दृष्ट्वा ( अवलोक्य ) आशंसितावन्ध्यप्रार्थनं ( मनोरथे सफलप्रार्थनम् ) [1]याज्यं ( याजयितुं योग्यं दिलीपं यजमानमितियावत् ) पुनः ( भूयः ) अब्रवीत् ( अगदीत् ) ॥ ८६ ॥

( समासः ) निमित्तज्ञः = निमित्तं ( शुभाशुभलक्षणं ) जानातीति निमित्तज्ञः। तपोनिधिः = तपसां निधिस्तपोनिधिः। पुण्यदर्शनां = पुण्यं ( पुण्यजनकं ) दर्शनं ( साक्षात्कारः ) यस्याः सा तां। आशंसिते अवन्ध्या प्रार्थना यस्य सः तं याजयितुं योग्यो याज्यस्तम् ॥८६॥

( वाच्यपरिवर्तनम् ) निमित्तज्ञेन तपोनिधिना········आशंसितावन्ध्यप्रार्थनः याज्यः पुनः औच्यत ॥ ८६ ॥

( सरलार्थ ) उस पवित्र दर्शनवाली को देख शकुन जाननेवाले तपोनिधि ऋषि ने सफल मनोरथ के प्रार्थी राजा के प्रति फिर कहा ॥ ८६ ॥

अदूरवर्तिनीं सिद्धिं राजन् विगणयात्मनः।
उपस्थितेयं कल्याणी नाम्नि कीर्तित एव यत् ॥ ८७ ॥

( अन्वयः ) हे राजन् आत्मनः सिद्धिम् अदूरवर्तिनीं विगणय यत् कल्याणी इयं नाम्नि कीर्तिते एव उपस्थिता ॥ ८७ ॥

( सुबोधिनी ) हे राजन्? आत्मनः ( स्वस्य ) सिद्धिं ( कार्यसिद्धिं ) अदूरवर्तिनीं ( शीघ्रभाविनीं ) विगणय ( जानीहि ) यत् ( यस्मात् ) कल्याणी ( कल्याणकारिणी ) इयं ( एषा धेनुः ) नाम्नि कीर्तिते एव ( नामग्रहणमात्रत एव ) उपस्थिता ( आगता ) ॥८७॥

( समासः ) अदूरवर्तिनीं = न दूरे वर्तते इति अदूरवर्तिनी ताम् ॥८७॥

( वाच्यपरिवर्तनम् ) हे राजन् त्वया आत्मनः सिद्धिः अदूरवर्तिनी विगण्यतां यत् कल्याण्या एव अनया······उपस्थितया ( अभूयत ) ॥

( सरलार्थ ) हे राजन् आप अपनी कामना निकट आई जानिये क्योंकि नाम लेते ही यह कल्याणी आ उपस्थित हुई है ॥ ८७ ॥

---

आत्मतीर्थमितिख्यातं सेवितं ब्रह्मवादिभिः।
मनः शुचिकरं पुंसां नित्यं तत्स्नानमाचरेत् ॥

१ राजा यजति, वसिष्ठः शास्त्रोक्तेन विधिना तं याजयतीति राज्ञो याज्यत्वम्।

वन्यवृत्तिरिमां शश्वदात्मानुगमनेन गाम्।
विद्यामभ्यसनेनेव प्रसादयितुमर्हसि ॥ ८८ ॥

( अन्वयः ) वन्यवृत्तिः सन् इमां गां शश्वद् आत्मानुगमनेन अभ्यसनेन विद्याम् इव प्रसादयितुम् अर्हसि ॥ ८८ ॥

( सुबोधिनी ) वन्यवृत्तिः ( कन्दफलमूलाद्याहारः ) सन्, इमां ( एनां ) गां ( धेनुं ) शश्वत् ( निरन्तरं, तस्याः प्रसादपर्यन्तमित्यर्थः ) आत्मानुगमनेन ( आत्मनोऽनुसरणेन ) अभ्यसनेन ( सततमभ्यासेन ) विद्याम्, इव, प्रसादयितुं ( तोषयितुं, प्रसन्नां कर्तुमित्यर्थः ) अर्हसि ( योग्योभवसि ) ॥ ८८ ॥

( समासः ) वन्यवृत्तिः = वने भवं वन्यं ( कन्दमूलफलादिकं ) तदेव वृत्तिर्व्यवहारो यस्य सः । आत्मनुगमनेन = आत्मनः अनुगमनम् आत्मानुगमनं तेन ॥ ८८ ॥

( वाच्यपरिवर्तनम् ) त्वया वन्यवृत्तिना सता शश्वद् आत्मानुगमनेन इयं गौः अभ्यसनेन विद्या इव प्रसादयितुम् अर्ह्यते ॥ ८८ ॥

( सरलार्थ ) निरन्तर अभ्यास से विद्या की तरह, तूँ जंगलों के कन्द मूल फल आदि खाकर इस गाय के पीछे २ चलकर इसे प्रसन्न करने के योग्य है ॥ ८८ ॥

प्रस्थितायां प्रतिष्ठेथा स्थितायां स्थितिमाचरेः।
निषण्णायां निषीदास्यां पीताम्भसि पिबेरपः ॥८९ ॥

( अन्वयः ) अस्यां प्रस्थितायां प्रतिष्ठेथाः, स्थितायां स्थितिम् आचरेः, निषण्णायां निषीद, पीताम्भसि (सत्यां) अपः पिबेः ॥ ८९ ॥

( सुबोधिनी ) अस्यां ( नन्दिन्यां ) प्रस्थितायां ( प्रयातायां ) प्रतिष्ठेथाः ( प्रयाहि, प्रयाणं कुरु ) स्थितायां ( तिष्ठन्त्यां ) स्थितिम् आचरेः ( स्थितिं कुरु, तिष्ठेत्यर्थः ) निषण्णायां ( उपविष्टायां ) निषीद ( उपविश ) पीताम्भसि ( कृतपयःपानायां ) "तस्यां" अपः ( जलानि ) पिबेः ( पिब ) आत्मानुगमनप्रकारमाहः- यदा इयं धेनुः गच्छेत् तदा त्वं विश्रामेच्छुरपि इमाम् अनुगच्छ, यदा इयं तिष्ठेत् तदा त्वं गमनेच्छुरपि तिष्ठ, यदा इयम् उपविशेत् तदा त्वम् उत्थानेच्छुरपि उपविश, यावच्च इयं जलं न पिबेत् तावत् त्वं पिपासुरपि जलं मा पिबेतिभावः ॥ ८९ ॥

( समासः ) पीताम्भसि = पीतम् अम्भः यया तस्यां ॥ ८६ ॥

( वाच्यपरिवर्तनम् ) अस्यां......( त्वया ) प्रतिष्ठीयेत,...स्थितिः आचर्येत, निषण्णायां निषद्यतां, पीताम्भसि आपः पीयेरन् ॥ ८६ ॥

( सरलार्थ ) इसके चलने पर चलो, ठहरने पर ठहरो, बैठने पर बैठो, पानी पीने पर पानी पीओ ॥ ८६ ॥

वधूर्भक्तिमती चैनामर्चितामा तपोवनात् ।
प्रयता प्रातरन्वेतु सायं प्रत्युद्व्रजेदपि ॥ ९० ॥

( अन्वयः ) वधूः भक्तिमती प्रयता "सती" अर्चिताम् एनां प्रातः आ तपोवनाद् अन्वेतु सायम् अपि प्रत्युद्व्रजेत् ॥ ९० ॥

( सुबोधिनी ) वधूः ( जाया ) भक्तिमती ( भक्तियुता ) प्रयता (संयता) "सती" अर्चितां ( गन्धादिभिः पूजितां ) एनां ( नन्दिनीं ) प्रातः ( प्रभाते ) आतपोवनात् ( तपोवनसीमापर्यन्तं ) अन्वेतु ( अनुगच्छतु ) सायं (सायङ्काले) अपि, प्रत्युद्व्रजेत् ( प्रत्युद्गच्छेत् )॥

( वाच्यपरिवर्तनम् ) भक्तिमत्या वध्वा प्रयतया च सत्या अर्चिता एव, प्रातः आतपोवनात् अन्वीयतां सायम् अपि प्रत्युद्व्रज्येत ॥ ९० ॥

( सरलार्थ ) और पूजा की हुई इस नन्दिनी के पीछे २ भक्तिमती वधूभी पवित्र मन होकर प्रातःकाल तपोवन के अन्त तक जाय और सन्ध्या समय सन्मुख होकर मिलै ॥ ९० ॥

इत्या प्रसादादस्यास्त्वं परिचर्यापरो भव ।
अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्रिणाम् ॥ ९१ ॥

( अन्वयः ) इति त्वम् आ प्रसादाद् अस्याः परिचर्यापरः भव, ते अविघ्नम् अस्तु पिता इव पुत्रिणाम् धुरि स्थेयाः ॥ ९१ ॥

( सुबोधिनी ) इति ( अनेन प्रकारेण ) त्वं ( भवान् ) आ प्रसादात् ( प्रसादपर्यन्तं ) अस्याः ( धेनोः ) परिचर्यापरः ( सेवातत्परः ) भव । ते ( तव ) अविघ्नं ( विघ्नाभावः ) अस्तु ( भवतु ) पिता, इव, पुत्रिणां ( सत्पुत्रवतां ) धुरि ( अग्रे ) स्थेयाः ( तिष्ठेः ) ॥ ९१॥

( समासः ) परिचर्यापरः = परितश्चर्या इति परिचर्या तस्यां परः परिचर्यापरः । पुत्रिणां = पुत्राः सन्ति एषां तेषाम् ॥ ९१ ॥

( वाच्यपरिवर्तनम् ) इति त्वया आप्रसादाद् अस्याः परिचर्यापरेण भूयताम् । ते अविघ्नेन भूयताम् । पुत्रिणां धुरि पित्रा इव स्थीयताम् ९१

( सरलार्थ ) इस प्रकार इसके प्रसन्न होने तक तुम इसकी सेवा करो, तुम्हारा कल्याण हो पिता के समान पुत्रवालों में तुम मुख्य होवो ॥ ९१ ॥

तथेति प्रतिजग्राह प्रीतिमान् सपरिग्रहः ।
आदेशं देशकालज्ञः शिष्यः शासितुरानतः । ९२ ॥

( अन्वयः ) देशकालज्ञः "अतएव" प्रीतिमान् सपरिग्रहः शिष्यः आनतः सन्" शासितुः आदेशं तथा इति प्रतिजग्राह ॥ ९२ ॥

( सुबोधिनी ) देशकालज्ञः ( अग्निसामीप्यस्य अग्निहोत्रावसानसमयस्य च बोद्धा "तादृशे मेध्याग्निसन्निधौ होमकालावसाने च यदा यथार्थवादिना ब्रह्मर्षिणा पुत्रो भविष्यतीत्युक्तम् तदाऽवश्यमेव मे पुत्रो भविष्यतीति जातप्रत्यय इत्यर्थः" अतएव प्रीतिमान् (प्रसन्नः) शिष्यः (अन्तेवासी राजा दिलीपः) सपरिग्रहः (सपत्नीकः) आनतः (विनीतः) सन् ) शासितुः ( शासकस्य गुरोः ) आदेशं ( आज्ञां ) तथा इति ( तथास्तु इति ) प्रतिजग्राह ( स्वीचकार ) ॥ ९२ ॥

( समासः ) देशकालज्ञः = देशश्च कालश्च देशकालौ तौ जानातीति देशकालज्ञः । सपरिग्रहः = परिग्रहेण सहितः सपरिग्रहः ॥ ९२ ॥

( वाच्यपरिवर्तनम् ) प्रीतिमता सपरिग्रहेण देशकालज्ञेन शिष्येण आनतेन सता शासितुः आदेशः तथा इति प्रतिजगृहे ॥ ९२ ॥

( सरलार्थ ) प्रसन्न, देशकाल जानने वाले धर्मपत्नी सहित, सुशील शिष्य राजा दिलीप ने " ऐसा ही हो " यह कहकर गुरु की आज्ञा ग्रहण की ॥ ९२ ॥

अथ प्रदोषे दोषज्ञः संवेशाय विशांपतिम् ।
सूनुः सूनृतवाक्स्रष्टुर्विससर्जोदितश्रियम् ॥ ९३ ॥

( अन्वयः ) अथ प्रदोषे दोषज्ञः सूनृतवाक् स्रष्टुः सूनुः उदितश्रियं विशाम्पतिं संवेशाय विससर्ज ॥ ९३ ॥

( सुबोधिनी ) अथ ( गुरोर्वचनाङ्गीकारानन्तरं ) प्रदोषे ( रजनीमुखे ) दोषज्ञः ( विद्वान् ) सूनृतवाक् ( सत्यवचनः ) स्रष्टुः (विधातुः) सूनुः ( पुत्रः ) " मुनिर्वसिष्ठः " उदितश्रियं ( पुत्रोपायश्रवणेन जातसौन्दर्यं ) विशाम्पतिं ( राजानं ) संवेशाय ( निद्रायै ) विससर्ज ( विसृष्टवान्, निद्रायै आज्ञापयामास ) ॥ ९३ ॥

( समासः ) दोषज्ञः=दोषं जानातीति दोषज्ञः । सूनृतवाक्=सूनृता वाग् यस्य असौ सूनृतवाक् । उदितश्रियं=उदिता सुप्रकाशिता श्रीर्यस्य सः तम् ॥ ९३ ॥

( वाच्यपरिवर्तनम् ) अथ प्रदोषे दोषज्ञेन सूनृतवाचा स्रष्टुः सूनुना उदितश्रीः विशाम्पतिः संवेशाय विससृजे ॥ ९३ ॥

( सरलार्थ ) उसके बाद रात्रि में, सत्य और मधुर भाषी, ब्रह्मपुत्र वसिष्ठ ऋषि ने राजा दिलीप को सोने की आज्ञा दी ॥ ९३ ॥

सत्यामपि तपःसिद्धौ नियमापेक्षया मुनिः ।
कल्पवित्कल्पयामास वन्यामेवास्य संविधाम् ॥ ९४ ॥

( अन्वयः ) कल्पवित् मुनिः तपःसिद्धौ सत्याम् अपि नियमापेक्षया अस्य वन्याम् एव संविधां कल्पयामास ॥ ९४ ॥

( सुबोधिनी ) कल्पवित् ( व्रतप्रयोगाभिज्ञः ) मुनिः ( वसिष्ठः ) तपःसिद्धौ ( तपश्चरणादिना अणिमाद्यैश्वर्ये ) सत्याम् अपि, नियमापेक्षया ( व्रतचर्यापेक्षया ) अस्य ( राज्ञः दिलीपस्य ) वन्याम् एव ( वनोत्पन्नामेव ) संविधां ( कुशादिशयनसामग्रीं ) कल्पयामास ( सम्पादयामास ) ॥ ९४ ॥

( समासः ) कल्पवित्=कल्पं ( शास्त्रोक्तव्रतादिनियमं ) वेत्तीति कल्पवित् । तपःसिद्धौ=तपसां सिद्धिस्तपःसिद्धिस्तस्याम् । नियमापेक्षया=नियमस्य अपेक्षा नियमापेक्षा तया । वन्यां=वने भवा वन्या ताम् ॥ ९४ ॥

( वाच्यपरिवर्तनम् ) कल्पविदा मुनिना तपःसिद्धौ सत्याम् अपि नियमापेक्षया अस्य वन्या एव संविधा कल्पयाञ्चक्रे ॥ ९४ ॥

( सरलार्थ ) व्रत व्यवहार जानने वाले मुनि ने तपकी सिद्धि से राजा के उपभोगयोग्य प्रबन्ध करने की शक्ति रहते हुए भी तपस्या के नियमों को विचार कर उसके लिये वनवासी ही की सामग्री बताई ॥ ९४ ॥

निर्दिष्टां कुलपतिना स पर्णशाला-
मध्यास्य प्रयतपरिग्रहद्वितीयः ।
तच्छिष्याध्ययननिवेदितावसानां
संविष्टः कुशशयने निशां निनाय ॥ ९५ ॥

( अन्वयः ) सः कुलपतिना निर्दिष्टां पर्णशालाम् अध्यास्य प्रयतपरिग्रहद्वितीयः कुशशयने संविष्टः "सन्" तच्छिष्याध्ययननिवेदितावसानां निशां निनाय ॥ ९५ ॥

( सुबोधिनी ) सः ( राजा दिलीपः ) †कुलपतिना ( ऋषिकुलेश्वरेण, महर्षिणा वसिष्ठेन ) निर्दिष्टां ( आदिष्टां ) पर्णशालां (पर्णकुटीं) अध्यास्य ( अधिष्ठाय ) प्रयतपरिग्रहद्वितीयः ( नियतपत्नीद्वितीयः ) कुशशयने ( कुशशय्यायां ) संविष्टः ( सुप्तः "सन्" ) तच्छिष्याध्ययननिवेदितावसानां ( वसिष्ठर्षिच्छात्राणां वेदपाठेन ज्ञातावसानां ( निशां ( रात्रिं ) निनाय ( यापयामास ) ॥ ९५ ॥

( समासः ) पर्णशालां = पर्णानां ( पर्णनिर्मिता वा ) शाला पर्णशाला तां । प्रयतपरिग्रहद्वितीयः = प्रयतः (व्रतानुरोधात् संयतेन्द्रियः) परिग्रहः ( पत्नी ) द्वितीयो यस्य सः । कुशशयने = शेते अस्मिन्निति शयनं कुशानां ( कुशनिर्मितमित्यर्थः ) शयनं कुशशयनं तस्मिन् । तच्छिष्याध्ययननिवेदितावसानां = तस्य शिष्यास्तच्छिष्यास्तेषामध्ययनं तेन निवेदितमवसानं यस्याः सा तां । कुलस्य (मुनिसमुदायस्य) पतिः ( नायकः, अन्नविद्यादिदानेन प्रतिपालकः ) तेन ॥ ९५ ॥

( वाच्यपरिवर्तनम् ) प्रयतपरिग्रहद्वितीयेन तेन ( राज्ञा ) कुलपतिना निर्दिष्टां पर्णशालाम् अध्यास्य कुशशयने संविष्टेन ( सता ) तच्छिष्याध्ययननिवेदितावसाना निशा निन्ये ॥ ९५ ॥

( भावार्थ ) कुलपति वसिष्ठ ऋषि की कही हुई पर्णकुटी में जाकर अपनी धर्मपत्नी सुदक्षिणा के साथ कुशासन पर सोये हुए राजा दिलीपने गुरु वसिष्ठ महाराज के शिष्यों के प्रातःकाल वेद पढ़ने से जाने हुए प्रभात वाली रात बिताई ॥ ९५ ॥

इति श्री पाठकोपाह्वस्वधर्मधुरन्धर-स्मार्तकर्मानुष्ठाननिष्ठ-कश्यपवंशावतंस-जयकृष्णशर्मतनुजनुषा श्रीगौरीनाथशर्मणा विरचितया सुबोधिनीसमाख्यया सरलार्थया प्राकृतभाषया च संवलितो महाकविश्रीकालीदासकृतौ रघुवंशे महाकाव्ये दिलीपस्य वशिष्ठाश्रमगमनप्रयुक्तः प्रथमः सर्गः ॥ १ ॥

† मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात् ।
अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः ॥

## द्वितीयः सर्गः

-उपजाति-

अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम् ।
वनाय पीतप्रतिबद्धवत्सां यशोधनो धेनुमृषेर्मुमोच ॥ १ ॥

( अन्वयः ) अथ, यशोधनः, प्रजानाम्, अधिपः प्रभाते, जायाप्रतिग्राहितगन्धमाल्यां, पीतप्रतिबद्धवत्सां, ऋषेः, धेनुं, वनाय, मुमोच ।

( टीका ) अथ = निशानयनानन्तरं, यशोधनः = कीर्तिधनः, "अतियशस्वी" इत्यर्थः । "यशः कीर्तिः समज्ञा च" इत्यमरः, प्रजानां = जनानां, "प्रजा स्यात्संततौ जने" इत्यमरः, अधिपः = राजा दिलीपः, प्रभाते = प्रातःकाले, जायाप्रतिग्राहितगन्धमाल्यां = सुदक्षिणास्वीकारितचन्दनपुष्पमालाम्, पीतप्रतिबद्धवत्सां = पानान्तरबद्धवत्सकां, ऋषेः = वशिष्ठस्य, धेनुं = नन्दिनीम्, वनाय = वनं गन्तुं, मुमोच = मुक्तवान् ॥ १ ॥

( समासः ) यशोधनः, यश एव धनं यस्य सः यशोधनः । प्रजानां = प्रजायन्त इति प्रजाः तासाम् । अधिकम्पातीत्यधिपः । प्रभाते = प्रकर्षेण भातीति प्रभातं तस्मिन् । जायाप्रतिग्राहितगन्धमाल्यां, गन्धश्च माल्यश्च गन्धमाल्ये, जायतेऽस्यामिति जाया, तया प्रतिग्राहिते गन्धमाल्ये यया सा ताम् । पीतप्रतिबद्धवत्साम्, आदौ पीतः पश्चात्प्रतिबद्धः वत्सो यस्याः सा ताम् ॥ १ ॥

( वाच्यपरिवर्तनम् ) अथ प्रभाते यशोधनेन प्रजानां अधिपेन जायाप्रतिग्राहितगन्धमाल्या पीतप्रतिबद्धवत्सा ऋषेः धेनुः वनाय मुमुचे ॥ १ ॥

( सरलार्थः ) दयादाक्षिण्यादिविविधगुणगणविशिष्टो दिलीपः, प्रातर्महिष्या सुदक्षिणया गन्धमाल्याभ्यां पूजयित्वा वत्समपि दुग्धं पाययित्वा बद्धा च, नन्दिनीं स्वच्छन्दवनविहारार्थं मुक्तवान् ॥ १ ॥

( सरलार्थ भाषा ) रात्रि व्यतीत होनेपर प्रातःकाल प्रजापालक, यशके धनी, राजा दिलीपने, सुदक्षिणासे दिये हुये चन्दन और पुष्पमालाको धारणकरनेवाली, दूध पीकर बन्धे हुए बछड़ेवाली मुनिवशिष्ठजी की गायको जंगल में घूमने के लिये खोल दिया ॥ १ ॥

तस्याः खुरन्यासपवित्रपांसुमपांसुलानां धुरि कीर्तनीया ।
मार्गं मनुष्येश्वरधर्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ॥ २ ॥

( अन्वयः ) अपांसुलानां, धुरि, कीर्तनीया, मनुष्येश्वरधर्मपत्नी, खुरन्यासपवित्रपांसुं, तस्याः, मार्गं, स्मृतिः, श्रुतेः, अर्थम्, इव, अन्वगच्छत् ॥ २ ॥

( टीका ) अपांसुलानां = पतिव्रतानां, धुरि = अग्रे, कीर्तनीया = परिगणनीया "पतिव्रतात्वेन कामिनीकुलललामभूता" मनुष्येश्वरधर्मपत्नी = दिलीपकान्ता सुदक्षिणा, खुरन्यासपवित्रपांसुं = शफनिक्षेपपूतरजःकणम्, "शफं क्लीबे खुरः पुमान्" इति तथा "रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः" इति चामरः, तस्याः = धेनोः, मार्गं = वर्त्म, स्मृतिः = मन्वादिस्मृतिः, श्रुतेः = वेदस्य, अर्थमिव = अभिधेयमिव, अन्वगच्छत् = अनुससार ॥ २ ॥

( समासः ) अपांसुलानां, पांसवः = दोषाः पापानि वा सन्ति आसाम् इति पांसुलाः " सिध्मादिभ्यश्चेति लच् प्रत्ययः " न पांसुला इत्यपांसुलास्तासाम् । कीर्तयितुं योग्या कीर्तनीया । मनुष्येश्वरधर्मपत्नी, धर्मस्य पत्नी, धर्मपत्नी, ईशितुं शीलमस्येति ईश्वरः, मनुष्याणामीश्वर इति मनुष्येश्वरस्तस्य धर्मपत्नीति । खुरन्यासपवित्रपांसुं, पूयन्ते एभिरिति पवित्राः, खुराणां न्यासाः खुरन्यासाः तैः पवित्राः पांसवो यस्त तं । मार्गं = मार्ग्यतेऽन्विष्यतेऽनेनेति मार्गः तम् । श्रुतेः = श्रूयते धर्मोऽनयेति श्रुतिः, तस्याः ॥ २ ॥

( वाच्यपरिवर्तनम् )·········मनुष्येश्वरधर्मपत्न्या खुरन्यासपवित्रपांसुः तस्याः मार्गः श्रुतेः अर्थः स्मृत्या इव अन्वगम्यत ॥ २ ॥

( सरलार्थः ) यथा स्मृतिः सर्वदा वेदार्थमेवाऽनुसरति तथैव पतिव्रताकुलललामभूता दिलीपपत्नी सुदक्षिणाऽपि खुरक्षेपेण विशुद्धपांसुं तमेव नन्दिनीमार्गमनुससार ॥ २ ॥

( सरलार्थ भाषा ) पतिव्रताओं में पहले पूजा करने योग्य राजा दिलीप की पत्नी सुदक्षिणा, नन्दिनीके खुरके रखने से पवित्र धूलिवाले मार्गमें श्रुतिके अर्थके अनुसार स्मृतिके नाईं चली ॥ २ ॥

निवर्त्य राजा दयितां दयालुस्तां सौरभेयीं सुरभिर्यशोभिः ।
पयोधरीभूतचतुःसमुद्रां जुगोप गोरूपधरामिवोर्वीम् ॥ ३ ॥

( अन्वयः ) यशोभिः, सुरभिः, दयालुः, राजा, दयितां, निवर्त्य, पयोधरीभूतचतुःसमुद्रां, गोरूपधराम्, उर्वीम्, इव, तां, सौरभेयीं, जुगोप ।

( टीका ) यशोभिः = कीर्तिभिः, "यशः कीर्तिः समज्ञा च" इत्यमरः सुरभिः = मनोज्ञः "सुरभिः स्यान्मनोज्ञेऽपि" इति विश्वः, दयालुः = कृपालुः, "स्याद्दयालुः कारुणिकः कृपालुः" इत्यमरः, राजा = दिलीपः, दयितां = प्रियां, "दयितं वल्लभं प्रियम्" इत्यमरः, निवर्त्य = परावर्त्य, भूमिपक्षे = पयोधरीभूतचतुःसमुद्राम् = ऊधोभूतचतुःसागरां, धेनुपक्षे = दुग्धतिरस्कृतचतुःसागराम्, गोरूपधरां = गोमूर्त्तिधारिणीम्, उर्वीम् = वसुन्धरामिव, "वसुधोर्वी वसुन्धरा" इत्यमरः, जुगोप = ररक्ष ॥ ३ ॥

( समासः ) दयाशीलो दयालुः । राजते शोभतेऽसौ राजा । पयोधरीभूतचतुःसमुद्रां, (भूमिपक्षे-समीचीनाः उद्राः जलजन्तुविशेषादयो यत्र, सह मुद्रया वेलया वर्तत इति वा समुद्रः,) धरन्तीति धराः, पयसां धराः पयोधराः, अपयोधराः पयोधराः सम्पद्यमानी भूताः पयोधरीभूताः, पयोधरीभूताश्चत्वारः समुद्रा यस्यास्ताम् । धेनुपक्षे :—पयसा अधरीभूताश्चत्वारः समुद्रा यस्यास्ताम् । सुरभ्या अपत्यं स्त्री सौरभेयी ताम् । गोरूपधरां, धरतीति धरा, गोः रूपं गोरूपं, तस्य धरा ताम् ॥ ३ ॥

( वाच्यपरिवर्तनम् ) यशोभिः सुरभिणा दयालुना राज्ञा दयितां निवर्त्य पयोधरीभूतचतुःसमुद्रा गोरूपधरा उर्वी इव सा सौरभेयी जुगुपे ॥ ३ ॥

( सरलार्थः ) परमकारुणिको दिलीपः तपोवनबहिर्गमनात्सुदक्षिणां परावर्त्य नन्दिनीरूपेण समागतां चतुर्भिः स्तनैरिव चतुर्भिः समुद्रैः संयुक्तां साक्षाद्वसुन्धरां देवीमिव तां नन्दिनीं ररक्ष ॥ ३ ॥

( भावार्थ ) दयावान यशसे सुशोभित राजा दिलीपने रानी सुदक्षिणा को लौटाकर चार समुद्ररूपी चार स्तनोंवाली कामधेनू की कन्याकी गायं के रूप में पृथ्वी के जैसी रक्षा की ॥ ३ ॥

व्रताय तेनाऽनुचरेण धेनोर्न्यषेधि शेषोऽप्यनुयायिवर्गः ।
न चान्यतस्तस्य शरीररक्षा स्ववीर्यगुप्ता हि मनोः प्रसूतिः ॥४॥

( अन्वयः ) व्रताय, धेनोः, अनुचरेण, तेन, शेषोऽपि, अनुयायिवर्गः, न्यषेधि, तस्य, शरीररक्षा, अन्यतः, न, च, हि, मनोः, प्रसूतिः, स्ववीर्यगुप्ता ॥ ४ ॥

( टीका ) व्रताय = गोपालनरूपं व्रतङ्कर्तुं, धेनोः = नन्दिन्याः, अनुचरेण = सेवकेन, तेन = राज्ञा दिलीपेन, शेषोऽपि = अवशिष्टोऽपि, सुदक्षिणापेक्षयेत्यर्थः, अनुयायिवर्गः = अनुचरगणः, न्यषेधि = परावर्तितः, तस्य = दिलोपस्य, शरीररक्षा = देहसंरक्षणं, "गात्रं वपुः संहननं शरीरं, वर्ष्म विग्रहः । कायो देहः" इत्यमरः, च, अन्यतः = अन्यस्मात्, न = नास्ति, हि = यतः, मनोः = वैवस्वतमनोः, प्रसूतिः = सन्ततिः, स्ववीर्य्यगुप्ता = स्वपराक्रमरक्षिता, भवति ॥ ४ ॥

( समासः ) अनुचरेण, अनु = पश्चाच्चरतीत्यनुचरस्तेन । अनुयायिवर्गः, अनु = पश्चाद्यान्तीत्यनुयायिनोऽनुगामिनस्तेषां वर्गः । शरीररक्षा शृणाति शीर्यते वा शरीरं, तस्य रक्षा । प्रसूयत इति प्रसूतिः । स्ववीर्यगुप्ता, स्वस्य वीर्य्यं स्ववीर्य्यं, तेन गुप्ता ॥ ४ ॥

( वाच्यपरिवर्तनम् ) व्रताय धेनोः अनुचरः सः शेषं अपि अनुयायिवर्गं न्यषेधीत् अस्य शरीररक्षया च अन्यतः न हि मनोः प्रसूत्या स्ववीर्यगुप्तया ( भूयते ) ॥ ४ ॥

( सरलार्थः ) व्रतपरिपालनायैव वने नन्दिनीमनुगच्छन्दिलीपः प्राक् राज्ञीं ततोऽन्यानपि परिचारकगणाननुगमनान्निवारितवान्, मनुप्रभवाणां कुलधुरन्धराणां स्वबाहुबलेनैव स्वरक्षणकर्तृत्वसंभ-

वादेकाकिनोऽपि तस्य दिलीपस्य स्वसंरक्षणविषये काऽपि मनोविकृतिर्न बभूव ॥ ४ ॥

( भावार्थ ) राजा दिलीप ने शेष अनुचरों का झुण्ड भी लौटा दिया, उसके शरीर की रक्षा दूसरे किसी से नहीं होती थी, क्योंकि मनु की सन्तान अपनेही बल से रक्षित रहती है ॥ ४ ॥

आस्वादवद्भिः कवलैस्तृणानां कण्डूयनैर्दंशनिवारणैश्च ।
अव्याहतैः स्वैरगतैः स तस्याः सम्राट् समाराधनतत्परोऽभूत् ॥५॥

( अन्वयः ) सम्राट्, सः, आस्वादवद्भिः, तृणानां, कवलैः, कण्डूयनैः, दंशनिवारणैः, अव्याहतैः, स्वैरगतैः, च, तस्याः, समाराधनतत्परः, अभूत् ॥ ५ ॥

( टीका ) सम्राट् = मण्डलेश्वरः, "येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राट्" इत्यमरः, सः = राजा दिलीपः, आस्वादवद्भिः = रसवद्भिः, "सुस्वादुभिरित्यर्थः" तृणानां = घासानां, "शष्पं बालतृणं घासः" इत्यमरः, कवलैः = ग्रासैः, "ग्रासस्तु कवलः पुमान्" इत्यमरः, कण्डूयनैः = गात्रखर्जनैः, दंशनिवारणैः, = वनमक्षिकादूरीकरणैः, "दंशस्तु वनमक्षिका" इत्यमरः, अव्याहतैः = अप्रतिहतैः, स्वैरगतैः = स्वेच्छागमनैः, "मन्दस्वच्छन्दयोः स्वैरः," इत्यमरः, तस्याः = धेनोः, समाराधनतत्परः = सेवासक्तः, "तत्परे प्रसिताऽसक्तौ" इत्यमरः, अभूत् = आसीत् ॥ ५ ॥

( समासः ) सम्यक् राजतेऽसौ सम्राट् । दंशनिवारणः, दंशानां निवारणानि तैः । आस्वादवद्भिः, आस्वादो विद्यते येषान्ते आस्वादवन्तस्तैः । अव्याहतैः, न व्याहतानीत्यव्याहतानि तैः । स्वैरगतैः, स्वैराणि गतानि स्वैरगतानि तैः । समाराधनतत्परः = तदेव परं प्रधानं यस्येति तत्परः, आराध्यतेऽनेनेत्याराधनं, सम्यग् आराधनं समाराधनं, तस्मिन् तत्पर इति समाराधनतत्परः ॥ ५ ॥

( वाच्यपरिवर्तनम् ) तेन सम्राजा आस्वादवद्भिः..........तस्याः समाराधनतत्परेण अभावि ॥ ५ ॥

( सरलार्थः ) सरसघासग्रासदानेन, गात्रखर्जनेन, वनमक्षिकादूरीकरणेन, स्वेच्छानुरूपगमनेन च, तस्या आराधनासक्त आसीत् ॥५॥

( भावार्थ ) राजा दिलीप हरे हरे २ घासों के ग्रासों से, खुजलाने से, मक्खी और मच्छड़ों के उड़ाने से, इच्छानुसार उसे फिरने देने से, उसकी सेवा में तत्पर होता हुआ ॥ ५ ॥

स्थितः स्थितामुच्चलितः प्रयातां निषेदुषीमासनबन्धधीरः ।
जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छत् ॥६॥

( अन्वयः ) सः, भूपतिः, तां, स्थितां स्थितः 'सन्', प्रयातां उच्चलितः 'सन्' निषेदुषीम्, आसनबन्धधीरः 'सन', जलम्, आददानां जलाभिलाषी 'सन्' छायेव, अन्वगच्छत ॥ ६ ॥

( टीका ) भूपतिः=महीपतिः, सः=राजा दिलीपः, तां= नन्दिनीं, स्थितां=तिष्ठन्तीं, 'दृष्ट्वा' स्थितः सन्=तिष्ठन् सन्, प्रयातां=प्रस्थितां 'दृष्ट्वा' उच्चलितः सन्=प्रयातः सन्, निषेदुषीं =उपविष्टां 'दृष्ट्वा' आसनबन्धधीरः सन्=उपविष्टः सन्, जलं= सलिलं, आददानां=पिबन्तीं "दृष्ट्वा" "स्वयं" जलाभिलाषी सन्= सलिलेच्छुः सन्, 'पिबन् सन्नित्यर्थः' छायेव=प्रतिबिम्बमिव, "छाया सूर्य्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इत्यमरः, अन्वगच्छत्=अनुजगाम ॥ ६ ॥

( समासः ) पातीति पतिः, भुवः पतिः भूपतिः । निषेदुषीं, निषसाद इति निषेदुषी तां । आसनबन्धधीरः=आसनस्य बन्धः आसनबन्धः तत्र धीरः । आददानां, आदत्तेऽसावाददाना ताम् । जलाभिलाषी=जलमभिलषतेऽसौ जलाभिलाषी ॥ ६ ॥

( वाच्यपरिवर्तनम् ) भूपतिना, स्थिता स्थितेन, प्रयाता उच्चलितेन, निषेदुषी आसनबन्धधीरेण जलं आददाना जलाभिलाषिणा ( सता ) सा छायया इव अन्वगम्यत ।

( सरलार्थः ) तिष्ठन्तींताम्प्रति तिष्ठन्, चलन्तीञ्चलितः, उपविशन्तीं समुपविशन्, जलमभि लषन्तीञ्जलमभिलषन् सः तस्याश्छाया इव तामनुजगाम ॥ ६ ॥

( भावार्थः ) राजा दिलीप का चलना, रुकना, बैठना और पानी पीना नन्दिनी की इन २ क्रियाओं पर ही निर्भर रहता था ॥ ६ ॥

सन्यस्तचिन्हामपि राजलक्ष्मीं तेजोविशेषानुमितां दधानः ।
आसीदनाविष्कृतदानराजिरन्तर्मदावस्थ इव द्विपेन्द्रः ॥ ७ ॥

( अन्वयः ) न्यस्तचिह्नामपि, तेजोविशेषानुमितां, राजलक्ष्मीं, दधानः, सः, अनाविष्कृतदानराजिः, अन्तर्मदावस्थः द्विपेन्द्रः, इव, आसीत् ॥ ७ ॥

( टीका ) न्यस्तचिह्नामपि = त्यक्तच्छत्रचामरामपि, तेजोविशेषानुमितां = प्रतापातिशयतर्कितां "स प्रभावः प्रतापश्च यत्तेजः कोषदण्डजम्" इत्यमरः, राजलक्ष्मीं = राजशोभां, दधानः = धारयन, सः = राजा दिलीपः, अनाविष्कृतदानराजिः = अप्रकटितमदरेखः, "गण्डः कटो मदो दानम्" इत्यमरः, अन्तर्मदावस्थः = अभ्यन्तरदानदशः, द्विपेन्द्रः = गजेन्द्रः, "द्विरदोऽकपो द्विपः। मतङ्गजो गजो नागः" इत्यमरः, इव = यथा, "व वा यथातथेवैवम्" इत्यमरः, आसीत् = अभूत् ॥ ७ ॥

( समासः ) न्यस्तचिह्नामपि, न्यस्तानि चिन्हानि यस्याः सा ताम्। तेजोविशेषानुमितां, तेजसः विशेषस्तेजोविशेषस्तेनाऽनुमिता ताम्। राजलक्ष्मीं, राज्ञः लक्ष्मीः राजलक्ष्मीः तां। धत्तेऽसौ दधानः। दानस्य राजिः, दानराजि, न आविष्कृता अनाविष्कृता; अनाविष्कृता दानराजिर्यस्यासौ अनाविष्कृतदानराजिः। मदस्य अवस्था मदावस्था, अन्तः मदावस्था यस्य सोऽन्तर्मदावस्थः। द्वाभ्यां शुण्डतुण्डाभ्यां पिबन्तीति द्विपास्तेषामिन्द्रो द्विपेन्द्रः ॥ ७ ॥

( वाच्यपरिवर्तनम् ) तेन न्यस्तचिह्नां अपि ...................... दधानेन ( सता ) अनाविष्कृतदानराजिना अन्तर्मदावस्थेन द्विपेन्द्रेण इव अभूयत ॥ ७ ॥

( सरलार्थः ) यथा कश्चन समदो गजराजः स्वीयां मदावस्थां दानोदकधाराभिरप्रकटयन्नपि केवलं तेजसः अतिशयेन भव्याकारतया वाऽन्तर्गतां दानदशां प्रत्याययति, तथैवासावपि अङ्गीकृतनन्दिनीपरिचर्य्याव्रतो भूमिपश्छत्रचामररत्नखचितशिरोमुकुटालङ्कारादिभिः स्वां राजश्रियमप्रदर्शयन्नपि असाधारणप्रतापातिशयशालिना निजमूर्तिप्रभावेणैव स्वां राजलक्ष्मीमनुमापयति स्म ॥ ७ ॥

( भावार्थ ) जैसे किसी हाथी के मस्तकसे मदका चूना प्रगट नहीं हुआ है तोभी उसके भव्य आकारके देखनेसे ही भीतर मदका रहना जाना जाता है उसी प्रकार यद्यपि उस समय दिलीपके पास राजलक्ष्मी के चिन्ह छत्र चमर आदि नहीं थे तोभी केवल उनके प्रतापसे ही राजलक्ष्मी जानी जाती थी ॥ ७ ॥

लताप्रतानोद्ग्रथितैः स केशैरधिज्यधन्वा विचचार दावम्।
रक्षापदेशान्मुनिहोमधेनोर्वन्यान्विनेष्यन्निव दुष्टसत्वान् ॥ ८ ॥

( अन्वयः ) लताप्रतानोद्ग्रथितैः, केशैः, "उपलक्षितः" अधिज्यधन्वा, सः, मुनिहोमधेनोः, रक्षापदेशात, वन्यान, दुष्टसत्वान्, विनेष्यन, इव, दावं विचचार ॥ ८ ॥

( टीका ) लताप्रतानोद्ग्रथितैः = दीर्घलताबद्धैः, "वल्ली तु व्रततिर्लता" इत्यमरः, केशैः = कचैः "चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः" इत्यमरः 'उपलक्षितः' अधिज्यधन्वा = आरोपितकार्मुकः, सः = दिलीपः, मुनिहोमधेनोः = वसिष्ठनन्दिन्याः, रक्षापदेशात् = संरक्षणच्छलात, वन्यान् = काननोत्पन्नान्, "अटव्यरण्यं विपिनं गहनं काननं वनम्" इत्यमरः, दुष्टसत्वान् = हिंस्रजन्तून्, "सत्त्वमस्त्री तु जन्तुषु" इत्यमरः, विनेष्यन्निव = शिक्षयिष्यन्निव, दावं = वनं, "दवदावौ वनारण्ये वह्नी" इत्यमरः, विचचार = सञ्चचार ॥ ८ ॥

( समासः ) लताप्रतानोद्ग्रथितैः, लतानां प्रतानानि विस्ताराः तैरुद्ग्रथितास्तैः। ज्यामधिगतमधिज्यं, अधिज्यन्धनुर्यस्य सोऽधिज्यधन्वा। मुनिहोमधेनोः, होमस्य धेनुर्होमधेनुः, मुनेर्होमधेनुस्तस्याः। रक्षापदेशात्, रक्षाया अपदेशस्तस्मात। वने भवान वन्यान्। दुष्टसत्वान्, दुष्टाश्च ते सत्वाश्च दुष्टसत्वास्तान्। विनेष्यन्, विनेष्यतीति विनेष्यन् ॥ ८ ॥

( वाच्यपरिवर्तनम् ) लताप्रतानोद्ग्रथितैः केशैः उपलक्षितेन अधिज्यधन्वना तेन मुनि·············विनेष्यता इव दावः विचेरे ॥ ८ ॥

( सरलार्थः ) लताप्रतानोद्बद्धकचः धनुर्धारी दिलीपः, वशिष्ठनन्दनीसंरक्षणच्छलेन वनजान्दुष्टजीवान्दण्डयन्निव अटति स्म ॥ ८ ॥

( भावार्थः ) वसिष्ठकी यज्ञ-नन्दिनी की रक्षा करने के बहाने से जंगलके दुष्ट प्राणियोंको शिक्षा देता हुआ लताओंके तन्तुओं से गुंथे हुए केशोंवाला राजा दिलीप प्रत्यंचा चढ़े हुए धनुषको धारण कर बनमें विचरने लगा ॥ ८ ॥

विसृष्टपार्श्वानुचरस्य तस्य पार्श्वद्रुमाः पाशभृता समस्य ।
उदीरयामासुरिवोन्मदानामालोकशब्दं वयसां विरावैः ॥ ९ ॥

( अन्वयः ) पार्श्वद्रुमाः, उन्मदानां, वयसां, विरावैः, विसृष्टपार्श्वानुचरस्य, पाशभृता, समस्य, तस्य, आलोकशब्दं, उदीरयामासुः, इव ॥ ९ ॥

( टीका ) पार्श्वद्रुमाः = पार्श्वस्थवृक्षाः, उन्मदानां = मदोन्मत्तानां, वयसां = खगानां, " खगबाल्यादिनोर्वयः " इत्यमरः, विरावैः = शब्दैः, विसृष्टपार्श्वानुचरस्य = त्यक्तपार्श्वसेवकस्य, पाशभृता = वरुणेन, " प्रचेता वरुणः पाशी " इत्यमरः, समस्य = समानस्य, तस्य = दिलीपस्य, आलोकशब्दं = राजानमालोकयेतिसूचकशब्दं, " जयशब्दमिति भावः " उदीरयामासुरिव = उच्चारयामासुरिव ॥ ९ ॥

( समासः ) पार्श्वद्रुमाः = द्रुवति ऊर्ध्वं गच्छति इति द्रुः, द्रवः शाखाः सन्त्येषामिति द्रुमाः, पार्श्वयोः द्रुमाः, पार्श्वद्रुमाः । उन्मदानां = उत् मदो येषान्तानि तेषां । विसृष्टपार्श्वानुचरस्य = अनुचरन्तीत्यनुचराः, पार्श्वयोरनुचराः पार्श्वानुचराः, विसृष्टाः पार्श्वानुचरा येन तस्य । पाशभृता = पाशं बिभर्तीति पाशभृत् तेन । आलोकशब्दं, आलोकनमित्यालोकस्तस्य शब्दस्तमालोकशब्दम् ॥ ९ ॥

( वाच्यपरिवर्तनम् ) पार्श्वद्रुमैः उन्मदानां वयसां विरावैः विसृष्टपार्श्वानुचरस्य ..........आलोकशब्दः उदीरयाञ्चक्रे ॥ ९ ॥

( सरलार्थः ) दिलीपस्य उभयपार्श्वस्था वृक्षाः, परित्यक्ताऽनुचरसार्थस्य तस्य " जयति जयति महाराजः " इति विजयशब्दं स्वावस्थितमत्तशकुन्तकुलकूजितैः प्रोच्चारितवन्तः ॥ ९ ॥

( भावार्थ ) वरुणके उपमावाले राजा दिलीपका जयशब्द दोनों ओरके वृक्षोंने उन्मत्त पक्षियोंके कलरव द्वारा कराया ॥ ९ ॥

मरुत्प्रयुक्ताश्च मरुत्सखाभं तमर्च्यमारादभिवर्तमानम् ।
अवाकिरन् बाललताः प्रसूनैराचारलाजैरिव पौरकन्याः ॥ १० ॥

( अन्वयः ) मरुत्प्रयुक्ताः, बाललताः, मरुत्सखाभं आरात्, अभिवर्तमानं, अर्च्यं, तं प्रसूनैः, पौरकन्याः, आचारलाजैः, इव, अवाकिरन् ॥ १० ॥

( टीका ) मरुत्प्रयुक्ताः = मारुतान्दोलिताः, बाललताः = कोमलवल्लयः; "वल्ली तु व्रततिर्लता" इत्यमरः, मरुत्सखाभं = अग्नितुल्यं, आरात् = समीपे, आराद्दूरसमीपयोः" इत्यमरः, अभिवर्तमानं = स्थितं, अर्च्यं = पूज्यं, तं = दिलीपं, प्रसूनैः = कुसुमैः, 'प्रसूनं कुसुमं सुमम्" इत्यमरः, पौरकन्याः = पुरवासिसुताः' आचारलाजैः = मङ्गलाचारलाजैः, इव, अवाकिरन् = ववृषुः, "दिलीपोपरि प्रक्षिप्तवत्य इत्यर्थः" ॥ १० ॥

( समासः ) मरुत्प्रयुक्ताः = मरुता प्रयुक्ताः। बाललताः = बालाश्च ताः लताश्च बाललताः। मरुत्सखाभं = मरुतः सखा मरुत्सखस्तस्य आभेवाभा यस्य सः तम्। अभिवर्तमानं, अभिवर्ततेऽसावभिवर्तमानस्तम्। आचारार्था लाजाः आचारलाजास्तैः। पौरकन्याः = पुरे भवाः पौरास्तेषां कन्याः। अर्चितुं योग्योऽर्च्यस्तम् ॥ १० ॥

( वाच्यपरिवर्तनम् ) मरुत्प्रयुक्ताभिः बाललताभिः मरुत्सखाभः अर्च्यः आराद् अभिवर्तमानः सः आचारलाजैः पौरकन्याभिः इव प्रसूनैः अवाकीर्यत ॥ १० ॥

( सरलार्थः ) मारुतान्दोलिता अभिनवलताः समीपस्थमनलप्रभं दिलीपं नगरप्रवेशावसरे पुरवासिसुतानां मङ्गलार्थकलाजावर्षणमिव शाखारूपैः करैस्तस्योपरि नवजातकुसुमानि समवर्षन् ॥ १० ॥

( भावार्थ ) नई लताओंने, समीप आये हुए आदरणीय अग्नितुल्य तेजस्वी दिलीपराजा पर, पुरकीकन्या, जैसे अपने देश के राजा पर लावा बरसाती हैं उस तरह फूलोंकी वर्षा की ॥ १० ॥

धनुर्भृतोऽप्यस्य दयार्द्रभावमाख्यातमन्तःकरणैर्विशङ्कैः।
विलोकयन्त्यो वपुरापुरक्ष्णां प्रकामविस्तारफलं हरिण्यः ॥ ११ ॥

( अन्वयः ) धनुर्भृतः, अपि, अस्य, विशङ्कैः, अन्तःकरणैः, दयार्द्रभावं आख्यातं, वपुः, विलोकयन्त्यः, हरिण्यः, अक्ष्णां प्रकामविस्तारफलं, आपुः ॥ ११ ॥

( टीका ) धनुर्भृतः = धनुर्धारिणः, अपि, अस्य = दिलीपस्य, विशङ्कैः = निर्भीकैः, अन्तःकरणै = चित्तैः, दयार्द्रभावं = कृपाद्रवी-

भूताभिप्रायम्, आख्यातं=कथितं, 'अस्य' वपुः=शरीरं "गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः" इत्यमरः, विलोकयन्त्यः=अवलोकयन्त्यः, हरिण्यः=मृग्यः, अक्ष्णां=नेत्राणां, "लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी" इत्यमरः, प्रकामविस्तारफलं=अत्यन्तविशालताफलं, आपुः=प्रापुः ॥ ११ ॥

(समासः) धनुर्भृतः=धनति इति धनुः, धनुः बिभर्तीति धनुर्भृत्तस्य । विशङ्कैः=विगता शङ्का येभ्यस्तानि तैः । विलोकयन्त्यः=विलोकयन्तीति विलोकयन्त्यः । प्रकामविस्तारफलं=प्रकामं विस्तारः प्रकामविस्तारस्तस्य फलम् । दयार्द्रभावं, दयया आर्द्रः भावश्चित्ताभिप्रायो यस्य सः तम् ॥ ११ ॥

(वाच्यपरिवर्तनम्) विलोकयन्तीभिः हरिणीभिः अक्ष्णां प्रकामविस्तारफलं आपे ॥ ११ ॥

(सरलार्थः) धृतधन्वनोऽप्यस्य दयया द्रवीभूतमन्तर्भावं ज्ञात्वा निर्भीकाः सत्यो हरिण्योऽस्य शरीरलावण्यमाकर्णान्तावस्फारितनयनैरवलोकयन्त्यो निजनयनविशालतासाफल्यम्प्राप्नुवत्यः ॥ ११ ॥

(भावार्थ) धनुष को धारण करनेपर भी भयरहित राजा के शरीर को देखने वाली हरिणियों ने अपने आंखों के बड़ेपन का फल पाया ॥ ११ ॥

सकीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम् ।
शुश्राव कुञ्जेषु यशः स्वमुच्चैरुद्गीयमानं वनदेवताभिः ॥ १२ ॥

(अन्वयः) सः, मारुतपूर्णरन्ध्रैः, कूजद्भिः, कीचकैः, आपादितवंशकृत्यं, कुञ्जेषु, वनदेवताभिः, उच्चैः, उद्गीयमानं, स्वं, यशः, शुश्राव ॥१२॥

(टीका) सः=दिलीपः, मारुतपूर्णरन्ध्रैः=वायुपूरितच्छिद्रैः, "छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा सुषिः, इत्यमरः, (अतएव) कूजद्भिः,=स्वनद्भिः, कीचकैः=वेणुविशेषैः, "वेणवः कीचकास्ते स्युर्यें स्वनन्त्यनिलोद्धताः" इत्यमरः, आपादितवंशकृत्यं=सम्पादितसुषिरकार्य्यं, कुञ्जेषु=निकुञ्जेषु, "निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे इत्यमरः, वनदेवताभिः,=विपिनदेवीभिः, "अटव्यरण्यं विपिनं गहनं काननं वनम्" इत्यमरः, उच्चैः,=उच्चस्वरेण, उद्गीयमानं,=स्तूयमानं, स्वं=निजं, यशः=कीर्तिं, यशः कीर्तिः समज्ञा च" इत्यमरः, शुश्राव=श्रुतवान् ॥ १२ ॥

( समासः ) मारुतेन पूर्णानि रन्ध्राणि येषान्तैः । कूजन्ति ते कूजन्तस्तैः । वंशस्य कृत्यं वंशकृत्यं आपादितं वंशकृत्यं यस्मिन् कर्मणि तत् । वनानां देवताः ताभिः । उद्गीयत इत्युद्गीयमानम् ।

( वाच्यपरिवर्तनम् ) तेन मारुतपूर्णरन्ध्रैः कूजद्भिः कीचकैः आपादितवंशकृत्यं कुञ्जेषु वनदेवताभिः उच्चैः उद्गीयमानं स्वं यशः शुश्रुवे ॥ १२ ॥

( सरलार्थः ) लतागृहेषु वनदेवताभिः उपगीतं स्वं यशः श्रुतवान् ॥ १२ ॥

( भावार्थ ) राजादिलीप, वायुसे भरे हुए छिद्रवाले अतएव शब्दायमान बांसो द्वारा लतागृह में वनदेवताओं करके ऊँचे स्वरसे गाये हुए अपने यशको सुनता हुआ ॥ १२ ॥

पृक्तस्तुषारैर्गिरिनिर्झराणामनोकहाकम्पितपुष्पगन्धी ।
तमातपक्लान्तमनातपत्रमाचारपूतं पवनः सिषेवे ॥ १३ ॥

( अन्वयः ) गिरिनिर्झराणां तुषारैः, पृक्तः, अनोकहाकम्पितपुष्पगन्धी, पवनः, अनातपत्रं, आतपक्लान्तं, आचारपूतं, तं, सिषेवे ॥१३॥

( टीका ) गिरनिर्झराणां = पर्वतप्रवाहाणां, " प्रवाहो निर्झरो झरः" इत्यमरः; तुषारैः = हिमकणैः, "तुषारौ हिमसीकरौ" इत्यमरः, पृक्तः = सम्पृक्तः, अनोकहाकम्पितपुष्पगन्धी = वृक्षाकम्पितकुसुमसुगन्धिः, पवनः = वातः, "नभस्वद्वातपवन- " इत्यमरः, अनातपत्रं = छत्ररहितं, ( अतएव ) आतपक्लान्तं = उष्णम्लानं, आचारपूतं = सदाचारपवित्रं, तं = दिलीपं, सिषेवे = सेवितवान् ॥ १३ ॥

( समासः ) गिरीणां निर्झरास्तेषाम् । अनसः शकटस्य अकं = गतिं हन्तीत्यनोकहः, आकम्पितानि च तानि पुष्पाणि आक०, अनोकहानाम् आकम्पतिपुष्पाणि अनो० तेषां गन्धोऽस्यास्तीत्यनोकहाकम्पितपुष्पगन्धी । पुनातीति पवनः । आतपात्त्रायतइत्यातपत्रं, न विद्यते आतपत्रं यस्य सः तम् । आतपेन क्लान्तमातपक्लान्तम् । आचारेण पूतम् आचारपूतम् ॥ १३ ॥

( वाच्यपरिवर्तनम् ) गिरिनिर्झराणां तुषारैः पृक्तेन अनोकहाकम्पितपुष्पगन्धिना पवनेन अनातपत्रः आतपक्लान्तः आचारपूतः सः सिषेवे ॥ १३ ॥

( सरलार्थः ) पर्वतीयनिर्झरसम्बन्धिवारिकणान्धारयन्, ईषत्कम्पिततरुकुसुमसुगन्धमाहरन् सुगन्धो गन्धवहो विना छत्रं भ्रमेण आतपतापितं सदाचारपवित्रं तं सेवितवान् ॥ १३ ॥

( भावार्थ ) पहाड़ी झरनोंके जलबिन्दुओंसहित सुगन्धित वायुने छत्ररहित अतएव सूर्यके किरणोंसे संतप्त पवित्र उस दिलीप राजा की सेवा की ॥ १३ ॥

शशाम वृष्ट्यापि विना दवाग्निरासीद्विशेषा फलपुष्पवृद्धिः ।
ऊनं न सत्त्वेष्वधिको बबाधे तस्मिन् वनं गोप्तरि गाहमाने ॥१४॥

( अन्वयः ) गोप्तरि, तस्मिन्, वनं, गाहमाने, ('सति') दवाग्निः, वृष्ट्या, विना, अपि, शशाम, फलपुष्पवृद्धिः, विशेषा, आसीत्, सत्त्वेषु, अधिकः, ऊनं, न, बबाधे ॥ १४ ॥

( टीका ) गोप्तरि = रक्षितरि, तस्मिन् = दिलीपे, वनं = अरण्यं "अटव्यरण्यं विपिनं गहनं काननं वनम्" इत्यमरः, गाहमाने सति = प्रविशति सति, दवाग्निः = वनाग्निः, "दवदावौ वनारण्यवह्नी" इत्यमरः, वृष्ट्या = वर्षणेन, विना अपि = वर्षणाभावेऽपि, शशाम = शान्तो बभूव, फलपुष्पवृद्धिः = सस्यकुसुमसमृद्धिः, "वृक्षादीनां फलं सस्यम्" इत्यमरः, विशेषा = अतिशयिता, आसीत् = अभूत्, सत्त्वेषु = जन्तुषु, "सत्त्वमस्त्री तु जन्तुषु" इत्यमरः, अधिकः = सबलः, सिंहादिरित्यर्थः" ऊनं = दुर्बलं, 'मृगादिकमित्यर्थः' न बबाधे = नपीड़यामास ॥ १४ ॥

( समासः ) गोपायतीति गोप्ता तस्मिन् । गाहतेऽसौ गाहमानस्तस्मिन् । फलानि च पुष्पाणि च फलपुष्पाणि तेषां वृद्धिः । दवस्याग्निर्दवाग्निः ॥ १४ ॥

( वाच्यपरिवर्तनम् )········दवाग्निना वृष्ट्या विना अपि शेमे फलपुष्पवृद्ध्या विशेषया ( अभूयत )

( सरलार्थः ) तस्यारण्यप्रवेशक्षण एव तस्मिन्महारण्ये वनाग्निः जलवर्षणेन विनैव शान्तिमवाप, वल्लीवृक्षादयोऽपि प्रभूतया फलपुष्पलक्ष्म्या चकाशिरे, वन्यजन्तुः सबलो दुर्बलं न बाधते स्म ॥ १४ ॥

( भावार्थ ) प्रजा की रक्षा करने वाले उस राजा के वन में प्रवेश करने पर वृष्टि के बिनाही वनाग्नि शान्त हुई । फल फूल की शोभा अधिक हुई, शत्रुओं में सबल निर्बल को न सताता हुआ ॥ १४ ॥

सञ्चारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम् ।
प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः ॥ १५ ॥

( अन्वयः ) पल्लवरागताम्रा, पतङ्गस्य, प्रभा, मुनेः, धेनुः, च, दिगन्तराणि, सञ्चारपूतानि कृत्वा, दिनान्ते, निलययाय, गन्तुं, प्रचक्रमे ॥ १५ ॥

( टीका ) पल्लवरागताम्रा = किसलयारक्तवर्णा " पल्लवोऽस्त्री किसलयम् " इत्यमरः, पतङ्गस्य = सूर्य्यस्य, " पतङ्गः पक्षिसूर्ययोः " इति विश्वः, प्रभा = कान्तिः, मुनेः = वशिष्ठर्षेः, धेनुश्च = नन्दिनी च, दिगन्तराणि, दिगवकाशानि, " अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये " इत्यमरः, सञ्चारपूतानि = भ्रमणपवित्राणि, कृत्वा = विधाय, दिनान्ते = सन्ध्यासमये, निलयाय = आलयाय, निजाश्रमायेत्यर्थः, गन्तुं प्रचक्रमे = उपक्रान्तवती ॥ १५ ॥

( समासः ) पल्लवस्य रागः पल्लवरागः स इव ताम्रा । प्रभा = प्रकर्षेण भातीति प्रभा । दिशामन्तराणीति दिगन्तराणि । सञ्चारेण पूतानि सञ्चारपूतानि । दिनस्यान्तो दिनान्तस्तस्मिन् ॥ १५ ॥

( वाच्यपरिवर्तनम् ) पल्लवरागताम्रया पतङ्गस्य प्रभया मुनेः धेन्वा च दिगन्तराणि प्रचक्रमे ॥ १५ ॥

( सरलार्थः ) अभिनवकिसलयरागरक्ताऽर्ककान्तिः तथा वसिष्ठनन्दिनी निखिलान्दिगन्तभागान् निजसंचरणेन पवित्रीकुर्वाणा सायङ्काले गृहं गन्तुं प्रवृत्ता ॥ १५ ॥

( भावार्थ ) नवीन खिले हुए कोमल पल्लव की समान लाल रंग वाली सूर्यकी प्रभा और नन्दिनी दोनों तपोवन को लौटीं ॥ १५ ॥

तां देवतापित्रतिथिक्रियार्थामन्वग्ययौ मध्यमलोकपालः ।
बभौ च सा तेन सतां मतेन श्रद्धेव साक्षाद्विधिनोपपन्ना ॥ १६ ॥

( अन्वयः ) मध्यमलोकपालः देवतापित्रतिथिक्रियार्थां, तां, अन्वक् ययौ, सतां, मतेन, तेन, उपपन्ना, सा, विधिना, साक्षात्, श्रद्धा, इव बभौ ॥ १६ ॥

( टीका ) मध्यमलोकपालः = मर्त्यलोकाधिपः, देवतापित्रतिथिक्रियार्थां = यागश्राद्धदानादिप्रयोजनहेतुकां, तां = नन्दिनीं, अन्वक् = अनुगं, " अन्वगन्वक्षमनुगे " इत्यमरः, ययौ = जगाम, सतां मतेन =

सज्जनसमादृतेन, तेन=दिलीपेन, उपपन्ना=युक्ता, सा=धेनुः, विधिना=अनुष्ठानेन, उपपन्ना, साक्षात्=प्रत्यक्षा, श्रद्धेव=आस्तिक्यबुद्धिरिव, बभौ=शुशुभे ॥ १६ ॥

( समासः ) मध्ये भवः मध्यमः, मध्यमश्चासौ लोकश्चेति मध्यमलोकः, तम्पालयतीति मध्यमलोकपालः । देवताश्च पितरश्चातिथयश्च देवतापित्रतिथयस्तेषां क्रिया एवार्थो यस्याः सा ताम् ॥१६॥

( वाच्यपरिवर्तनम् ) मध्यमलोकपालेन देवतापित्रतिथिक्रियार्था सा अन्वक् यये । विधिना उपपन्नया साक्षात् श्रद्धया इव तया सतां मतेन तेन बभे ॥ १६ ॥

( सरलार्थः ) दिलीपः देवतापित्रतिथिकार्यसाधिकायास्तस्याः पृष्ठतो ययौ । साधुजनसेवितेन तेन राज्ञा युक्ता सती अनुष्ठानोत्पादिता सक्षाच्छ्रद्धेव सा शुशुभे ॥ १६ ॥

( भावार्थ ) राजा दिलीप, देवता पितर और पहुनों के कार्य को साधनेवाली उस कामधेनुके पीछे २ चला, राजाके साथ वह नन्दिनी साक्षात् श्रद्धा की नाईं चली ॥ १६ ॥

स पल्वलोत्तीर्णवराहयूथान्यावासवृक्षोन्मुखबर्हिणानि।
ययौ मृगाध्यासितशाद्वलानि, श्यामायमानानि वनानि पश्यन् ॥१७॥

( अन्वयः ) सः, पल्वलोत्तीर्णवराहयूथानि, आवासवृक्षोन्मुखबर्हिणानि, मृगाध्यासितशाद्वलानि श्यामायमानानि, वनानि, पश्यन्, 'सन्' ययौ ॥ १७ ॥

( टीका ) सः=दिलीपः, पल्वलोत्तीर्णवराहयूथानि=अल्पजलाशयनिर्गतवनशूकरसमूहानि, आवासवृक्षोन्मुखबर्हिणानि=निवासतरून्मुखमयूराणि, "मयूरो बर्हिणो बर्हीं" इत्यमरः, मृगाध्यासितशाद्वलानि=हरिणाधीष्ठितहरिततृणानि, श्यामायमानानि=कृष्णवर्णानि, वनानि=अरण्यानि, पश्यन्=अवलोकयन् 'सन्' ययौ=जगाम ॥ १७ ॥

( समासः ) वराहाणां यूथानि वराहयूथानि, पल्वलेभ्य उत्तीर्णानि वराहयूथानि येषु तानि । बर्हाण्येषां सन्तीति बर्हिणः, आवासस्य वृक्षा आवासवृक्षास्तेषामुन्मुखा बर्हिणा येषु तानि । शादः शष्पाण्येषु सन्तीति तानि शाद्वलानि । मृगैः अध्यासितानि शाद्वलानि येषु तानि । श्यामायमानानि, श्यामानीव आचरन्तीति ॥ १७ ॥

( वाच्यपरिवर्तनम् ) तेन.........वनानि पश्यता ( सता ) ययेः ।

( सरलार्थः ) अल्पजलाशेभ्यो निर्गतवनशूकरसङ्घानि, निवासपादपगामिबर्हिवृन्दाणि, हरिणैरधिष्ठितशष्पाणि अतएव श्यामवर्णानि वनानि दिलीपोऽवलोकयञ्जगाम ॥ १७ ॥

( भावार्थ ) राजा दिलीप छोटे २ सरोवरों में से निकलते हुए जंगली सुअरों के झुण्ड वाले, अपने २ वृक्षों की ओर आते हुए मोरों वाले, हरे २ घास वाले श्यामवनों को देखता हुआ चला ॥१७॥

आपीनभारोद्वहनप्रयत्नाद्गृष्टिर्गुरुत्वाद्वपुषो नरेन्द्रः ।
उभावलञ्चक्रतुरञ्चिताभ्यां तपोवनावृत्तिपथं गताभ्याम् ॥ १८ ॥

( अन्वयः ) गृष्टिः, आपीनभारोद्वहनप्रयत्नात्, नरेन्द्रः, वपुषः, गुरुत्वात्, उभौ अञ्चिताभ्यां, गताभ्यां, तपोवनावृत्तिपथं, अलञ्चक्रतुः ॥ १८ ॥

( टीका ) गृष्टिः = सकृत्प्रसूता गौः, आपीनभारोद्वहनप्रयत्नात्, महोधोभारधारणायासात्, "ऊधस्तु क्लीबमापीनम्" इत्यमरः, नरेन्द्रः, वपुषः = शरीरस्य, गुरुत्वात् = स्थूलशरीरभारात्, उभौ = नन्दिनीनरेन्द्रौ, अञ्चिताभ्यां = मनोहराभ्यां, गताभ्यां = गमनाभ्यां, तपोवनावृत्तिपथं = तपोवनपरावर्तनमार्गं, अलञ्चक्रतुः = भूषितवन्तौ ॥ १८ ॥

( समासः ) आपीनस्य भारः आपीनभारस्तस्योद्वहनं तस्मिन् प्रयत्नस्तस्मादापीनभारोद्वहनप्रयत्नात् । नराणामिन्द्रो नरेन्द्रः, तपसो वनं तपोवनं, तस्मादावृत्तिस्तपोवनावृत्तिः तस्याः पन्थास्तम् ॥१८॥

( वाच्यपरिवर्तनम् ) आपीनभारोद्वहनप्रयत्नात्, गृष्ट्या, वपुषः गुरुत्वात् नरेन्द्रेण उभाभ्यां अञ्चिताभ्यां गताभ्यां तपोवनवृत्तिपथः अलञ्चक्रे ॥ १८ ॥

( सरलार्थ ) नन्दिनी स्थूलोधोभारात् दिलीपश्च महाकायभारात् उभावप्येतौ नन्दिनीदिलीपौ मनोहरपादविन्यासेन तपोवनमार्गमलञ्चक्रतुः ॥ १८ ॥

( भावार्थ ) पहली बार ब्याई हुई गाय ने ऐनका भार सम्हालने के प्रयत्न से, राजा ने अपने देह की स्थूलता से दोनों ने ही अपनी २ मन्दगति से तपोवन के आवागमन मार्ग को सुशोभित किया ॥१८॥

वसिष्ठधेनोरनुयायिनं तमावर्तमानं वनिता वनान्तात् ।
पपौ निमेषालसपक्ष्मपङ्क्तिरुपोषिताभ्यामिव लोचनाभ्याम् ॥१९॥

( अन्वयः ) वनिता, निमेषालसपक्ष्मपङ्क्तिः 'सती' वसिष्ठधेनोः, अनुयायिनं, वनान्तात्, आवर्तमानं, तम्, उपोषिताभ्याम्, इव, लोचनाभ्यां, पपौ ॥ १९ ॥

( टीका ) वनिता=दिलीपपत्नी सुदक्षिणा, निमेषालसपक्ष्मपङ्क्तिः=निमीलनमन्दाक्षिलोमपङ्क्तिः, सती, वसिष्ठधेनोः=वशिष्ठर्षिनन्दिन्याः, अनुयायिनम्=अनुगामिनं, वनान्तात्=वनप्रान्तभागात्, आवर्तमानं=परावर्तमानं, तं=दिलीपं, उपोषिताभ्यां=बुभुक्षिताभ्याम्, इव, लोचनाभ्यां=नयनाभ्यां, "लोचनं नयनं नेत्रम्"इत्यमरः, पपौ=पीतवती, अवलोकितवतीति भावः ॥ १९ ॥

(समासः) निमेषालसपक्ष्मपङ्क्तिः, पक्ष्मणां पङ्क्तिः पक्ष्मपङ्क्तिः, निमेषेषु अलसा निमेषालसा, निमेषालसा पक्ष्मपङ्क्तिर्यस्याः सा । वसिष्ठस्य धेनुः वसिष्ठधेनुस्तस्याः । अनुयातीत्यनुयायी तम् । वनस्यान्तो वनान्तस्तस्मात् । आवर्ततेऽसावावर्तमानस्तम् ॥ १९ ॥

( वाच्यपरिवर्तनम् ) वनितया निमेषालसपक्ष्मपङ्क्त्या सत्या वसिष्ठधेनोः अनुयायी वनान्ताद् आवर्तमानः स········· पपे ॥ १९ ॥

( सरलार्थः ) यथा कश्चन पिपासाकुलितः सरसं जलम्मुहुर्मुहुः पीत्वाऽपि तृप्तिं नाप्नोति तथैव प्राणाधीश्वरस्य चिरमनवलोकनेनाधीरायास्तस्याः प्रियतमवियोगतापितमाकर्णान्तविस्फारितनयनयुगलं, प्राणप्रियं तं दृष्ट्वाऽपि सन्तोषं न प्राप ॥ १९ ॥

( भावार्थ ) होमधेनु के पीछे पीछे चलने वाले राजा दिलीप को रानी सुदक्षिणा ने प्यासे हुए की तरह भर आंख देखा ॥ १९ ॥

पुरस्कृता वर्त्मनि पार्थिवेन प्रत्युद्गता पार्थिवधर्मपत्न्या ।
तदन्तरे सा विरराज धेनुर्दिनक्षपामध्यगतेव सन्ध्या ॥२०॥

( अन्वयः ) वर्त्मनि, पार्थिवेन, पुरस्कृता, पार्थिवधर्मपत्न्या, 'च' प्रत्युद्गता, सा, धेनुः, तदन्तरे, दिनक्षपामध्यगता, सन्ध्या, इव, विरराज ॥ २० ॥

( टीका ) वर्त्मनि=मार्गे, पार्थिवेन=राज्ञा दिलीपेन, पुरस्कृता=अग्रे कृता, पार्थिवधर्मपत्न्या=दिलीपपत्न्या सुदक्षिणया, प्रत्युद्गता=

आनेतुमभिगता, सा = धेनुः, तदन्तरे = सुदक्षिणादिलीपमध्ये, दिनक्षपामध्यगता = अहोरात्रान्तरगता, † सन्ध्या इव = सायं समय इव, विरराज = शुशुभे ॥ २० ॥

( समासः ) पृथिव्या ईश्वरः पार्थिवस्तेन। पुरः कृतेति पुरस्कृता। धर्मस्य पत्नी धर्मपत्नी, पृथिव्या ईश्वरः पार्थिवस्तस्य धर्मपत्नी तया। तयोरन्तरम्तदन्तरन्तस्मिन्। दिनश्च क्षपा च दिनक्षपे, तयोर्मध्यंगता इति दिनक्षपामध्यगता ॥ २० ॥

( वाच्यपरिवर्तनम् ) वर्त्मनि पार्थिवेन पुरस्कृतया पार्थिवधर्मपत्न्या च प्रत्युद्गतया तया धेन्वा तदन्तरे दिनक्षपामध्यगतया सन्ध्यया इव विरेजे ॥ २० ॥

( भावार्थ ) मार्ग में राजा दिलीप से आगे की गई और रानी सुदक्षिणा से आगे ली हुई ( अगुवानी की गई ) कामधेनु उन दोनों ( राजा रानी ) के बीच, दिन और रात के मध्य में सन्ध्या के जैसी शोभा को प्राप्त हुई ॥ २० ॥

प्रदक्षिणीकृत्य पयस्विनीं तां सुदक्षिणा साक्षतपात्रहस्ता।
प्रणम्य चानर्च विशालमस्याः शृङ्गान्तरं द्वारमिवार्थसिद्धेः॥ २१॥

( अन्वयः ) साक्षतपात्रहस्ता, सुदक्षिणा, पयस्विनीं, तां, प्रदक्षिणीकृत्य, प्रणम्य, च, अस्याः विशालं शृङ्गान्तरं, अर्थसिद्धेः, द्वारम्, इव, आनर्च ॥ २१ ॥

( टीका ) साक्षतपात्रहस्ता = सतन्दुलभाण्डकरा, सुदक्षिणा = दिलीपपत्नी, पयस्विनीं = प्रशस्तदुग्धां, तां = नन्दिनीं, प्रदक्षिणीकृत्य = अपसव्येन परितः परिभ्रम्य, प्रणम्य = प्रणामं कृत्वा च, अस्याः = धेनोः, विशालं = पृथुलं, " विशङ्कटं पृथु बृहद्विशालं पृथुलं महत् " इत्यमरः, शृङ्गान्तरं = शृङ्गमध्यदेशं, अर्थसिद्धेः = कार्यसिद्धेः, द्वारमिव = प्रवेशपथमिव, आनर्च = पूजयामास ॥ २१ ॥

( समासः ) अक्षतानाम्पात्रमक्षतपात्रं, तेन सह वर्तेते हस्तौ यस्याः सा। पयस्विनीं, पयो विद्यते यस्याः सा ताम्। प्रदक्षिणीकृत्य, अप्रदक्षिणं प्रदक्षिणं कृत्वेति प्रदक्षिणीकृत्य। शृङ्गान्तरं = शृङ्गयोरन्तरं शृङ्गान्तरम्। अर्थसिद्धेः, अर्थस्य सिद्धिरर्थसिद्धिस्तस्याः ॥२१॥

† सन्ध्या—अहोरात्रस्य यः सन्धिः सूर्यनक्षत्रवर्जितः।

( वाच्यपरिवर्तनम् ) साक्षतपात्रहस्तया सुदक्षिणया तां पयस्विनीं प्रदक्षिणीकृत्य प्रणम्य च ......... आनर्चे ॥ २१ ॥

( सरलार्थः ) सतन्दुलभाजनकरा सुदक्षिणा नन्दिनीं परिक्रम्य प्रणम्य च इष्टसिद्धिद्वारमिवास्याः शृङ्गमध्यप्रदेशं पूजयामास ॥ २१ ॥

( भावार्थ ) नन्दिनी की प्रदक्षिणा कर पूजापात्र हाथ में ली हुई रानी सुदक्षिणा ने मनोरथ सिद्धि के द्वार के नाईं उसके चौड़े मस्तक की पूजा की ॥ २१ ॥

वत्सोत्सुकाऽपि स्तिमिता सपर्य्यां प्रत्यग्रहीत्सेति ननन्दतुस्तौ ।
भक्त्योपपन्नेषु हि तद्विधानां प्रसादचिह्नानि पुरःफलानि ॥२२॥

( अन्वयः ) सा, ' धेनुः ' वत्सोत्सुका, अपि, स्तिमिता, ( ' सती ' ) सपर्य्यां, प्रत्यग्रहीत्, इति, तौ, ननन्दतुः, हि, भक्त्या, उपपन्नेषु, तद्विधानां, प्रसादचिह्नानि, पुरःफलानि, ( भवन्ति ) ॥ २२ ॥

( टीका ) सा = धेनुः, वत्सोत्सुकाऽपि = स्ववत्सदर्शनोत्कण्ठिताऽपि, स्तिमिता = निश्चला सती, सपर्य्यां = पूजां " पूजा नमस्याऽपचितिः सपर्य्याऽर्चार्हणाः समाः, इत्यमरः " प्रत्यग्रहीत् = स्वीचकार, इति = हेतोः, " वत्सावलोकनौत्सुक्येऽपि निश्चलभावेन पूजा स्वीकाराद्धेतोरिति भावः " तौ = नन्दिनी नरेन्द्रौ, ननन्दतुः = आनन्दम्प्रापतुः, हि = यस्मात् कारणात्, भक्त्या = पूज्यानुरागतया, उपपन्नेषु = प्राप्तेषु, 'विषये' तद्विधानां = तादृशीनां, प्रसादचिह्नानि = प्रसन्नतालक्षणानि, पुरःफलानि = प्रत्यासन्नेष्टनिमित्तानि भवन्तीति शेषः ॥२२॥

( समासः ) वत्से उत्सुका वत्सोत्सुका । तद्विधानां तस्या विधेव विधा येषां तेषाम् । प्रसादचिह्नानि, प्रसादस्य चिह्नानि प्रसादचिह्नानि । पुरःफलानि = पुरः फलानि येषान्तानि पुरःफलानि ॥ २२ ॥

( वाच्यपरिवर्तनम् ) तया वत्सोत्सुकया अपि स्तिमितया सत्या सपर्या प्रत्यग्राहि इति ताभ्यां ननन्दे, भक्त्या उपपन्नेषु तद्विधानां प्रसादचिन्हैः पुरःफलैः ( भूयते ) ।

( सरलार्थः ) स्वसुतावलोकनोत्कण्ठिताऽपि सा तस्याः पूजां निश्चलभावेन स्वीचकार, अतः सुदक्षिणादिलीपौ निर्भरमानन्दतुः । यतः भक्तान्प्रति प्रसादो महात्मनामचिरेणैव मनोरथसाफल्यं प्रकटयति ॥ २२ ॥

( भावार्थ ) अपने बछड़े के देखने में अत्युत्कण्ठित नन्दिनी ने स्थिर होकर उसकी पूजा ग्रहण की, इससे वे दोनों अधिक प्रसन्न हुए, भक्त के प्रति मनोरथके देनेवाले महात्माओं के प्रसन्नता के चिन्ह निःसन्देह फल के हेतु होते हैं ॥ २२ ॥

गुरोः सदारस्य निपीड्य पादौ समाप्य सान्ध्यं च विधिं दिलीपः ।
दोहावसाने पुनरेव दोग्ध्रीं भेजे भुजोच्छिन्नरिपुर्निषण्णाम् ॥२३॥

( अन्वयः ) भुजोच्छिन्नरिपुः, दिलीपः, सदारस्य, गुरोः, पादौ, निपीड्य, सान्ध्यं, विधिञ्च, समाप्य, दोहावसाने, निषण्णां, दोग्ध्रीं पुनः, एव, भेजे ॥ २३ ॥

( टीका ) भुजोच्छिन्नरिपुः = बाहुविध्वंसितारिः, "भुजबाहू प्रवेष्टो दोः" इत्यमरः, दिलीपः = दिलीपनामा भूपः, सदारस्य = सभार्य्यस्य, "भार्य्या जायाऽथ पुंभूम्नि दाराः, इत्यमरः, गुरोः = वसिष्ठस्य, पादौ = चरणौ, निपीड्य = नितराम्पीड़यित्वा, मूर्ध्ना प्रणम्येत्यर्थः, सान्ध्यं = सायङ्कालिकं, विधिम् = अनुष्ठानं, समाप्य = सम्पाद्य, दोहावसाने = दोहान्ते, निषण्णां = सुखासीनां, दोग्ध्रीं = दोहनशीलां नन्दिनीं, पुनः = भूयः, एव, भेजे = सिषेवे ॥ २३ ॥

(समासः) भुजोच्छिन्नरिपुः, भुजाभ्यामुच्छिन्नाः रिपवो येन सः । सदारस्य, दारैः सहितः सदारस्तस्य । सन्ध्यायां भवः सान्ध्यस्तम् । दोहावसाने, दोहस्यावसानं दोहावसानं, तस्मिन् ॥ २३ ॥

( वाच्यपरिवर्तनम् ) भुजोच्छिन्नरिपुणा दिलीपेन ·········· निषण्णा दोग्ध्री पुनः एव भेजे ।

( सरलार्थः ) सस्त्रीको दिलीपः स्वगुरुचरणसरोरुहावभिवन्द्य सायङ्कालिकमनुष्ठानञ्च समाप्य दोहनानन्तरं सुखासीनां नन्दिनीं पुनः सेवितवान् ॥ २३ ॥

( भावार्थ ) अरुन्धती के सहित गुरु वसिष्ठ के चरणों को प्रणाम कर और सन्ध्या समय के अनुष्ठान को समाप्त कर राजा दिलीप ने दुहने के बाद बैठी हुई उस नन्दिनी की फिर से सेवा करनी शुरू की ॥ २३ ॥

तामन्तिकन्यस्तबलिप्रदीपामन्वास्य गोप्ता गृहिणीसहायः ।
क्रमेण सुप्तामनु संविवेश सुप्तोत्थितां प्रातरनूदतिष्ठत् ॥ २४ ॥

( अन्वयः ) गोप्ता, गृहिणीसहायः, ' सन् ' अन्तिकन्यस्तबलिप्रदीपां, ताम्, अन्वास्य, क्रमेण, सुप्ताम्, अनु, संविवेश, प्रातः, सुप्तोत्थिताम् अनु, उदतिष्ठत् ॥ २४ ॥

( टीका ) गोप्ता = पालको दिलीपः, गृहिणीसहायः = पत्नीसहितः सन्, अन्तिकन्यस्तबलिप्रदीपां = समीपस्थापितपूजोपकरणदीपां, तां = पूर्वोक्तां सुखीसानां नन्दिनीम्, अन्वास्य = अनूपविश्य, क्रमेण = क्रमशः, सुप्तां = निद्रिताम्, अनु = पश्चात्, संविवेश = सुष्वाप, प्रातः = प्रातःकाले, सुप्तोत्थितां = शयनोत्थिताम्, अनु, उदतिष्ठत् = उत्थितवान् ॥ २४ ॥

( समासः ) गोपायतीति गोप्ता । गृहिणीसहायः = सह अयते गच्छतीति या सहाया, गृहिणी सहाया यस्यासौ । बलिश्च प्रदीपश्च बलिप्रदीपौ, अन्तिके न्यस्तौ अन्तिकन्यस्तौ, अन्तिकन्यस्तौ बलिप्रदीपौ यस्याः सा तां । सुप्तोत्थितां, आदौ सुप्ता पश्चात् उत्थिता ताम् ॥२४॥

( वाच्यपरिवर्तनम् ) गोप्त्रा गृहिणीसहायेन सता सुप्ताम् अनु संविविशे । प्रातः सुप्तोत्थिताम् अनु उदस्थीयत ।

( सरलार्थः ) जायायुतो दिलीपः समीपस्थापितप्रदीपायास्तस्याः पार्श्वे उपविवेश । ततो निद्राभिभूतायां तस्यां तावपि निद्रितवन्तौ, प्रातरुत्थितायां तस्यां तावपि उदतिष्ठताम् ॥ २४ ॥

( भावार्थ ) नन्दिनी की सेवा करनेवाला स्त्रीसहित राजा दिलीप उसके सोने के बाद सोया जागनेके अनन्तर जागा ॥ २४ ॥

इत्थं व्रतं धारयतः प्रजार्थं समं महिष्या महनीयकीर्तेः ।
सप्त व्यतीयुस्त्रिगुणानि तस्य दिनानि दीनोद्धरणोचितस्य ॥२५॥

( अन्वयः ) इत्थं, प्रजार्थं, महिष्या, समं, व्रतं, धारयतः, महनीयकीर्तेः, दीनोद्धरणोचितस्य, तस्य, त्रिगुणानि, सप्त, दिनानि, व्यतीयुः ॥ २५ ॥

( टीका ) इत्थं = अनेन प्रकारेण, प्रजार्थं = सन्तानार्थं, "प्रजा स्यात्सन्ततौ जने" इत्यमरः, महिष्या = पत्न्या सुदक्षिणया, समं = सह, व्रतं = गोसेवारूपं व्रतं, धारयतः = दधतः, 'पालयत इत्यर्थः' महनीयकीर्तेः = पूज्ययशसः, दीनोद्धरणोचितस्य = दीनजनरक्षणनिर-

तस्य, तस्य=दिलीपस्य, त्रिगुणानि=त्रिरावृत्तानि, सप्त दिनानि =एकविंशतिवासराणि, व्यतीयुः=व्यतिक्रान्तानि ॥ २५ ॥

(समासः)प्रजार्थं, प्रजायत इति प्रजा=सन्तानः, सैवार्थः प्रयोजनं यस्य तत् । धारयतः, धारयतीति धारयन् तस्य । महनीयकीर्तेः, महनीया कीर्तिर्यस्य तस्य । दीनोद्धरणोचितस्य, दीनानामुद्धरणं दीनोद्धरणं तस्मिन्नुचितस्तस्य । त्रिगुणानि, त्रयो गुणा आवृत्तयो येषां तानि ।

( वाच्यपरिवर्तनम् ) इत्थं.........सप्तभिः त्रिगुणैः दिनैः व्यतीये ॥२५॥

( सरलार्थः ) एवं सन्तानार्थकव्रतमाचरतः कीर्तिसम्पन्नस्य तस्यैकविंशतिदिनानि समतीतानि ॥ २५ ॥

( भावार्थः ) इस प्रकार सन्तानके लिये स्त्री सहित व्रत करने वाले राजादिलीपके २१ दिन व्यतीत हुए ॥ २५ ॥

**अन्येद्युरात्माऽनुचरस्य भावं जिज्ञासमाना मुनिहोमधेनुः ।**
**गङ्गाप्रपातान्तविरूढशष्पं गौरीगुरोर्गह्वरमाविवेश ॥ २६ ॥**

( अन्वयः ) अन्येद्युः, आत्माऽनुचरस्य, भावं, जिज्ञासमाना, 'सती' मुनिहोमधेनुः, गङ्गाप्रपातान्तविरूढशष्पं, गौरीगुरोः, गह्वरम्, आविवेश ॥ २६ ॥

( टीका ) अन्येद्युः=अन्यस्मिन् दिने, आत्मानुचरस्य=स्वसेवकस्य राज्ञः, भावं=अभिप्रायं, भक्तिमित्यर्थः, जिज्ञासमाना=ज्ञातुमिच्छन्ती, 'सती' मुनिहोमधेनुः=मुनेः होमार्थघृतसाधकधेनुर्नन्दिनी, गङ्गाप्रपातान्तविरूढशष्पम्=जाह्नवीपतनप्रदेशसमीपोत्पन्नबालतृणम्, " शष्पं बालतृणं घासः " इत्यमरः, गौरीगुरोः=पार्वतीपितुः, " हिमाचलस्येत्यर्थः " गह्वरं=गुहाम्, आविवेश=प्रविवेश ॥ २६ ॥

( समासः ) अन्यस्मिन् अहनि इति अन्येद्युः । आत्मानुचरस्य= अनुचरतीत्यनुचरः,आत्मनोऽनुचर आत्मानुचरस्तस्य । जिज्ञासमाना, जिज्ञासतेऽसौ जिज्ञासमाना । गङ्गाप्रपातान्तविरूढशष्पं, प्रपतत्यस्मिन्निति प्रपातः, गङ्गायाः प्रपातो गङ्गाप्रपातस्तस्यान्तस्तस्मिन् विरूढानि शष्पाणि यस्मिंस्तत् । गौरीगुरोः, गौर्याः गुरुः गौरीगुरुस्तस्य ॥२६॥

( वाच्यपरिवर्तनम् ) अन्येद्युः मुनिहोमधेन्वा आत्मानुचरस्य भावं जिज्ञासमानया गङ्गाप्रपातान्तविरूढशष्पः गौरीगुरोः गह्वरः आविविशे ॥ २६ ॥

( सरलार्थं ) द्वाविंशे दिने नन्दिनी दिलीपस्य भावं जिज्ञासमाना "किमयं स्वार्थसाधनानुरोधादेव उत विशुद्धभक्तियोगात् मामेवं सेवते इति मायाबलेन ज्ञातुमिच्छन्ती" हिमालयकन्दरमाविवेश ॥ २६ ॥

( भावार्थः ) बाइसवें दिन अपने सेवक की परीक्षा करने की इच्छा से नन्दिनीने गंगाद्वार पर बढ़ी हुई तृणमय गुफा में प्रवेश किया ॥ २६ ॥

सा दुष्प्रधर्षा मनसाऽपि हिंस्रैरित्यद्रिशोभाप्रहितेक्षणेन ।
अलक्षिताभ्युत्पतनो नृपेण प्रसह्य सिंहः किल तां चकर्ष ॥ २७ ॥

( अन्वयः ) सा, हिंस्रैः, मनसा अपि, दुष्प्रधर्षा, '(अस्ति) इति अद्रिशोभाप्रहितेक्षणेन, नृपेण, अलक्षिताभ्युत्पतनः, सिंहः, प्रसह्य, तां चकर्ष, किल ॥ २७ ॥

( टीका ) सा = नन्दिनी, हिंस्रैः = घातुकैः, 'व्याघ्रादिभिरित्यर्थः, मनसाऽपि = अन्तःकरणेनाऽपि, दुष्प्रधर्षा = दुर्धर्षा, 'अनभिभवनीयेत्यर्थः' इति = हेतोः, अद्रिशोभाप्रहितेक्षणेन = पर्वतशोभावलोकनदत्तनयनेन, नृपेण = राज्ञा दिलीपेन, अलक्षिताभ्युत्पतनः = अदृष्टाक्रमणः, सिंहः = मृगेन्द्रः, "सिंहो मृगेन्द्रः पञ्चास्यः" इत्यमरः, प्रसह्य = हठात्, "प्रसह्य, तु हठार्थकम्" इत्यमरः, तां = नन्दिनीं, चकर्ष = आकृष्टवान् किल ॥ २७ ॥

( समासः ) हिंस्रैः, हिंसन्तीति हिंस्रास्तैः। दुःखेन प्रधृष्यतेऽसाविति दुष्प्रधर्षा, अद्रिशोभाप्रहितेक्षणेन, अद्रेः शोभा अद्रिशोभा, तस्यां प्रहिते ईक्षणे येन सः तेन। अलक्षिताभ्युत्पतनः, न लक्षितमलक्षितं, अलक्षितमभ्युत्पतनं यस्यासावलक्षिताभ्युत्पतनः। नॄन् पातीति नृपस्तेन। हिनस्ति मारयति इति सिंहः, हिंसेर्वर्णविपर्यय इति चारित्रवर्धनः ॥ २७ ॥

(वाच्यपरिवर्तनम्) तया हिंस्रैः मनसा अपि दुष्प्रधर्षया "भूयते" इति·········अलक्षिताभ्युत्पतनेन सिंहेन प्रसह्य चकृषे किल ॥ २७ ॥

( सरलार्थः ) महाप्रभावाम् एतां कामधेनुं सिंहादयो मनसाऽप्यभिभवितुं न प्रभवन्ति इति निश्चित्य पर्वतशोभावलोकनदत्तदृष्टिना भूपेनानवलोकितोत्पनः सिंहो झटिति तामाक्रान्तवान् ॥ २७ ॥

( भावार्थ ) व्याघ्रादि हिंसक पशु भी इसपर आक्रमण नहीं कर सकते इस विचारसे नन्दिनी की ओरसे निश्चिन्त राजा दिलीप पहाड़ी दृश्य देखने लगा इधर मौका पाकर सिंह नन्दिनी पर झपटा ॥ २७ ॥

तदीयमाक्रन्दितमार्तसाधोर्गुहानिबद्धप्रतिशब्ददीर्घम् ।
रश्मिष्विवादाय नगेन्द्रसक्तां निवर्तयामास नृपस्य दृष्टिम् ॥ २८ ॥

( अन्वयः ) गुहानिबद्धप्रतिशब्ददीर्घं, तदीयम् आक्रन्दितं, आर्तसाधोः, नृपस्य, नगेन्द्रसक्तां, दृष्टिं, रश्मिषु, आदाय इव, निवर्तयामास ॥ २८ ॥

( टीका ) गुहानिबद्धप्रतिशब्ददीर्घं = कन्दरप्रतिबद्धप्रतिध्वानायतं, " दरी तु कन्दरोवाऽस्त्री देवखातबिले गुहा " तथा " दवीयश्च दविष्ठश्च सुदूरं दीर्घमायतम् " इतिचाप्यमरः, तदीयं = धेनुसम्बन्धि, आक्रन्दितम् = आक्रन्दनं, आर्तसाधोः = दीनरक्षणशीलस्य, नृपस्य = राज्ञो दिलीपस्य, नगेन्द्रसक्तां = पर्वतरामणीयकावलोकनप्रसितां, " तत्परे प्रसितासक्तौ " इत्यमरः, दृष्टिं = दर्शनं, रश्मिषु = प्रग्रहेषु, " किरणप्रग्रहौ रश्मी " इत्यमरः, आदाय इव = गृहीत्वेव, निवर्तयामास = परावर्तयामास ॥ २८ ॥

( समासः ) गुहायां निबद्धः गुहानिबद्धः, गुहानिबद्धश्चासौ प्रतिशब्दश्च तेन दीर्घं । तस्या इदं तदीयं । आर्तसाधोः, साध्नोति परकार्य्यमिति साधुः, आर्तेषु साधुरार्तसाधुस्तस्य । नगेन्द्रसक्तां = नगेषु इन्द्रो नगेन्द्रस्तत्र सक्ता तां । दृष्टिं = दृश्यतेऽनया ताम् ॥ २८ ॥

( वाच्यपरिवर्तनम् ) गुहानिबद्धप्रतिशब्ददीर्घेण तदीयेन आक्रन्दितेन आर्तसाधोः नृपस्य नगेन्द्रसक्ता दृष्टिः निवर्त्तयाञ्चक्रे ॥ २८ ॥

( सरलार्थः ) सिंहाक्रमणेन अतिदीर्घः तस्याः क्रन्दनशब्दः, यथा सारथिः धावन्तम् अश्वं रश्मिभिः आकृष्य निवर्त्तयति तथा राज्ञो दिलीपस्य दृष्टिं परावर्तयामास ॥ २८ ॥

( भावार्थ ) गुफा की प्रतिध्वनिसे ऊंचे आवाज के उसके डकरानेने दुखियोंके रक्षक राजा दिलीपकी पर्वतमें लगी हुई दृष्टि लगाम के द्वारा घोडेकी तरह अपनी ओर झुकाई ॥ २८ ॥

स पाटलायां गवि तस्थिवांसं धनुर्धरः केसरिणं ददर्श ।
अधित्यकायामिव धातुमय्यां लोध्रद्रुमं सानुमतः प्रफुल्लम् ॥२९॥

( अन्वयः ) धनुर्धरः, सः, पाटलायां, गवि, तस्थिवांसं, केसरिणं, सानुमतः, धातुमय्यां, अधित्यकायां, प्रफुल्लं, लोध्रद्रुमम्, इव, ददर्श ॥ २९ ॥

( टीका ) धनुर्धरः, धनुष्मान्, 'धन्वी धनुष्मान् धानुष्को निषङ्ग्यस्त्री धनुर्धरः' इत्यमरः, सः=दिलीपः, पाटलायां=रक्तवर्णायां, "श्वेतरक्तस्तु पाटलः" इत्यमरः, गवि=कामधेनौ, तस्थिवांसं=स्थितं, केसरिणं=सिंहं, सानुमतः=अद्रेः, धातुमय्यां =गैरिकादिधातुप्रचुरायाम्, अधित्यकायाम्=उर्ध्वभूमौ, "भूमिरूर्ध्वमधित्यका" इत्यमरः, प्रफुल्लं=विकसितं, लोध्रद्रुमं=लोध्रनामानं वृक्षमिव, ददर्श=अवलोकयामास ॥ २९ ॥

( समासः ) धनुर्धरः=धरतीति धरः, धनुषो धर इति धनुर्धरः । केसरिणं, केसराः स्कन्धबालाः सन्त्यस्येति केसरी तं । सानुमतः, सानूनि सन्त्यस्येति सानुमान् तस्य । धातुमय्यां, धातोर्विकारो धातुमयी तस्याम् । प्रफुल्लं, प्रकर्षेण फुल्लतीति प्रफुल्लस्तम् । लोध्रद्रुमं, द्रुः शाखास्यास्तीति द्रुमः, लोध्रस्य द्रुमो लोध्रद्रुमस्तम् ॥ २९ ॥

( वाच्यपरिवर्तनम् ) धनुर्धरेण तेन पाटलायां गवि तस्थिवान् केसरी धातुमय्यां अधित्यकायां सानुमतः प्रफुल्लः लोध्रद्रुमः इव ददृशे ॥ २९ ॥

( सरलार्थः ) धनुष्मान्दिलीपः रक्तवर्णायां गवि स्थितं सिंहं धातुमय्यां पर्वतभूमौ विकसितं लोध्रपुष्पमिव अवलोकयामास ॥२९॥

( भावार्थ ) फूले हुये लोध्र वृक्ष की समान, लाल गाय पर बैठे हुए सिंह को धनुर्धारी राजादिलीप ने देखा ॥ २९ ॥

ततो मृगेन्द्रस्य मृगेन्द्रगामी वधाय वध्यस्य शरं शरण्यः ।
जाताभिषङ्गो नृपतिर्निषङ्गादुद्धर्तुमैच्छत्प्रसभोद्धृतारिः ॥ ३० ॥

( अन्वयः ) ततः मृगेन्द्रगामी, शरण्यः, प्रसभोद्धृतारिः, नृपतिः, जाताभिषङ्गः सन्', वध्यस्य, मृगेन्द्रस्य, वधाय, निषङ्गात्, शरम्, उद्धर्तुम्, ऐच्छत् ॥ ३० ॥

( टीका ) ततः = मृगेन्द्रदर्शनानन्तरं, मृगेन्द्रगामी = सिंहगामी, शरण्यः = रक्षकः, "शरणं गृहरक्षित्रोः" इत्यमरः, प्रसभोद्धृतारिः = हठोन्मूलितशत्रुः, नृपतिः = राजा दिलीपः, जाताभिषङ्गः = जातपराभवःसन्, " अभिषङ्गः पराभवे " इत्यमरः, वध्यस्य = वधार्हस्य, मृगेन्द्रस्य = सिंहस्य, वधाय = मारणाय, निषङ्गात = तूणीरात, शरं = बाणम्, उद्धर्तुम् = निष्कासयितुम्, ऐच्छत = अभिलषितवान् ॥ ३० ॥

( समासः ) मृगाणामिन्द्रो मृगेन्द्रः, स इव गच्छतीति मृगेन्द्रगामी । प्रसभेन उद्धृता अरयो येन सः । पातीति पतिः, नृणां पतिरिति नृपतिः । जातोऽभिषङ्गो यस्यासौ जाताभिषङ्गः । वध्यस्य = वधं ( प्राणदण्डम् ) अर्हतीति वध्यस्तस्य । शरणे साधुः शरण्यः ॥ ३० ॥

( वाच्यपरिवर्तनम् ) ततः मृगेन्द्रगामिना शरण्येन जाताभिषङ्गेन प्रसभोद्धृतारिणा नृपतिना वध्यस्य मृगेन्द्रस्य वधाय निषङ्गात् शरः उद्धर्तुम् ऐष्यत ॥ ३० ॥

( सरलार्थः ) सिंहावलोकनानन्तरं सिंहगामी दिलीपः सिंहस्य वधं विधातुं निषङ्गात् शरमुद्धर्तुमैच्छत ॥ ३० ॥

( भावार्थ ) राजादिलीपने सिंहको मारने के लिये तरकस से बाण निकालने की इच्छाकी ॥ ३० ॥

वामेतरस्तस्य करः प्रहर्तुर्नखप्रभाभूषितकङ्कपत्रे ।
सक्ताङ्गुलिः सायकपुंख एव चित्रार्पितारम्भ इवावतस्थे ॥ ३१॥

( अन्वयः ) प्रहर्तुः, तस्य, वामेतरः, करः, नखप्रभाभूषितकङ्कपत्रे, सायकपुङ्खे, एव सक्ताङ्गुलिः 'सन्', चित्रार्पितारम्भः, इव, अवतस्थे ॥ ३१ ॥

( टीका ) प्रहर्तुः = प्रहारकस्य, तस्य = दिलीपस्य, वामेतरः = दक्षिणः, करः = हस्तः, "बलिहस्तांशवः कराः" इत्यमरः, नखप्रभा-† भूषितकङ्कपत्रे, = नखकान्तिभूषितकर्कटपत्रे, सायकपुङ्खे = शरमूलप्रदेशे, 'शरे खड्गे च सायकः' इत्यमरः, एव, सक्ताङ्गुलिः = आसक्तकरशाखः सन् "अङ्गुल्यः करशाखाः स्युः" इत्यमरः, चित्रार्पितारम्भः = चित्रगतशरोत्कर्षणोद्योग इव, अवतस्थे = स्थितः ॥ ३१ ॥

† कङ्कनामा कश्चन पक्षी, यः बकसदृशो दृश्यते ।

( समासः ) वामादितर इति वामेतरः, नखानां प्रभाः नखप्रभाः, ताभिर्भूषितानि कङ्कपत्राणि यस्य तस्मिन् । सायकस्य पुङ्खः सायकपुङ्खस्तस्मिन् सायकपुङ्खे । सक्ता अङ्गुलयो यस्यासौ सक्ताङ्गुलिः । चित्रे = चित्रपटे अर्पितः चित्रकरेण लिखितः आरम्भः = तादृशशरोद्धरणचेष्टा यस्य सः चित्रार्पितारम्भः ॥ ३१ ॥

( वाच्यपरिवर्तनम् ) प्रहर्तुः तस्य वामेतरेण करेण ........एव सक्ताङ्गुलिना सता चित्रार्पितारम्भेण इव अवतस्थे ॥ ३१ ॥

( सरलार्थः ) चित्रलिखितशरोद्धरणोद्योग इव प्रहारकस्य तस्य दक्षिणः करः बाणमूलप्रदेश एव निहिताङ्गुलिः सन्नवतस्थे ॥ ३१ ॥

( भावार्थ ) प्रहार करते हुए राजा दिलीपका दहिना हाथ नखोंकी कान्तिसे सुशोभित कंक पंखवाली बाणको पूंछहीमें चित्रमें लिखे हुए का समान लगा रहगया ॥ ३१ ॥

बाहुप्रतिष्टम्भविवृद्धमन्युरभ्यर्णमागस्कृतमस्पृशद्भिः ।
राजा स्वतेजोभिरदह्यतान्तर्भोगीव मन्त्रौषधिरुद्धवीर्यः ॥ ३२ ॥

( अन्वयः ) बाहुप्रतिष्टम्भविवृद्धमन्युः, राजा, अभ्यर्णम्, आगस्कृतम्, अस्पृशद्भिः, स्वतेजोभिः, मन्त्रौषधिरुद्धवीर्यः, भोगी, इव, अन्तः, अदह्यत ॥ ३२ ॥

( टीका ) बाहुप्रतिष्टम्भविवृद्धमन्युः = भुजप्रतिबन्धप्रवृद्धक्रोधः, "प्रतिबन्धः प्रतिष्टम्भः" इति एवं "मन्युर्दैन्ये क्रतौ क्रुधि" इति चामरः, राजा = दिलीपः, अभ्यर्णम् = उपकण्ठं, "समीपस्थितमित्यर्थः" आगस्कृतम् = अपराधिनम्, "आगोऽपराधो मन्तुश्च" इत्यमरः, अस्पृशद्भिः = अस्पर्शकरैः, स्वतेजोभिः = स्वपराक्रमैः, अन्तः = अभ्यन्तरम्, अदह्यत = दह्यतेस्म ॥ ३२ ॥

( समासः ) बाह्वोः प्रतिष्टम्भः, तेन विवृद्धो मन्युर्यस्यासौ बाहुप्रतिष्टम्भविवृद्धमन्युः । राजते = शोभते छत्रचामरादिभिरसौ राजा । न स्पृशन्ति तानि अस्पृशन्ति तैः । आगः करोतीतितम् ॥ ३२ ॥

( वाच्यपरिवर्तनम् ) बाहुप्रतिष्टम्भविवृद्धमन्युं राजानं मन्त्रौषधिरुद्धवीर्यं भोगिनम् इव अस्पृशन्ति स्वतेजांसि अदहन् ॥ ३२ ॥

( सरलार्थः ) भुजप्रतिरोधप्रवृद्धमन्युर्दिलीपः सम्मुखस्थितमपराधिनमाक्रमितुमसमर्थः, मंत्रेण ओषध्या वा प्रतिरुद्धपराक्रमः सर्प इव हृदि अदह्यत ॥ ३२ ॥

( भावार्थ ) हाथ के रुक जाने से बढे हुए क्रोधवाला राजा दिलीप सामने खड़े हुए दोषी को छूनेकी शक्ति न रखने वाले अपने तेजसे, मंत्रों वा जड़ी बूटियोंसे स्तम्भित पराक्रम वाले सर्प के समान भीतर ही भीतर जलने लगा ॥ ३२ ॥

तमार्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम्।
विस्मापयन्विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः ॥ ३३ ॥

( अन्वयः ) निगृहीतधेनुः, सिंहः, आर्यगृह्यं, मनुवंशकेतुं, सिंहोरुसत्त्वम्, आत्मवृत्तौ, विस्मितं, तं, मनुष्यवाचा विस्मापयन, निजगाद ॥ ३३ ॥

( टीका ) निगृहीतधेनुः = आक्रान्तधेनुः, सिंहः = मृगेन्द्रः, " सिंहो मृगेन्द्रः पञ्चास्यः " इत्यमरः, आर्यगृह्यं = सत्पक्षपातिनं, मनुवंशकेतुं = मनुकुलकेतुभूतं, सिंहोरुसत्त्वं = मृगेन्द्रसदृशपराक्रमम्, आत्मवृत्तौ = बाहुप्रतिष्टम्भव्यापारे, विस्मितम् = आश्चर्य्ययुक्तं, तं = दिलीपं, मनुष्यवाचा = मनुजवाण्या, विस्मापयन् = आश्चर्य्यम् प्रापयन्, निजगाद = उवाच ॥ ३३ ॥

( समासः ) निगृहीता धेनुर्येन सः निगृहीतधेनुः । अतुं योग्यः *आर्यस्तैः गृह्यते आश्रयत्वेन सेव्यत इति आर्यगृह्यस्तम् । मनोर्वंशो मनुवंशस्तस्य केतुं मनुवंशकेतुं । सिंहस्येव उरु सत्त्वं यस्य सः तम् । आत्मनो वृत्तिस्तस्मिन्नात्मवृत्तौ । मनुष्याणां वाक् मनुष्यवाक् तया । विस्मापयतीति विस्मापयन ॥ ३३ ॥

( वाच्यपरिवर्तनम् ) निगृहीतधेनुना सिंहेन आर्यगृह्यः मनुवंशकेतुः आत्मवृत्तौ विस्मितः सिंहोरुसत्त्वः सः मनुष्यवाचा विस्माययता निजगदे ॥ ३३ ॥

( व्या० ) वि-स्मि + णिच् + शतृ " नित्यं स्मयतेः " इति आत्वं पुगागमः । यद्यपि मनुष्यवाचेति करणादेवात्र स्मयः, अत आत्वं न प्राप्नोति तथापि मनुष्यवाक् प्रयोज्यकर्त्री विस्मापयते तया सिंहो विस्मापयन्निति ण्यन्तात् णिजिति समाधेयम्, विस्माययन्नित्येव पाठ इति सांप्रदायिकाः ॥ ३३ ॥

* आर्यलक्षणञ्च यथा :—
कर्तव्यमाचरन् काममकर्तव्यमनाचरन् ।
तिष्ठति प्रकृताचारे स तु आर्य्य इति स्मृतः ॥

( सरलार्थः ) धेनुमाक्रम्य स्थितः सिंहः, भुजस्तम्भरूपे व्यापारे विस्मयमापन्नं मनुकुलकेतुभूतं तं मनुष्यवाचा च समधिकमाश्चर्य्यम्प्रापयन्नुवाच ॥ ३३ ॥

( भावार्थ ) नन्दिनी पर आक्रमण किया हुआ सिंह, अपनी अवस्थापर चकित और बलवान उस राजा दिलीप को मनुष्य की बोली से और चकित कराता हुआ बोला ॥ ३३ ॥

अलं महीपाल तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ।
न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्च्छति मारुतस्य ॥३४॥

( अन्वयः ) हे महीपाल, तव, श्रमेण अलं, इतः, ("मयि") प्रयुक्तम्, अपि, अस्त्रं, वृथा स्यात् ' हि ' पादपोन्मूलनशक्ति, मारुतस्य, रंहः; शिलोच्चये, न, मूर्च्छति ॥ ३४ ॥

( टीका ) हे महीपाल ! हे राजन् ? तव = ते, श्रमेण = अस्त्रमोचनप्रयासेन, अलं = साध्यन्नास्ति, ' कुतः ' इतः = अस्मिन्मयि, प्रयुक्तमपि = निक्षिप्तमपि, अस्त्रम् = आयुधं, वृथा = व्यर्थमेव, स्यात् = भवेत्, हि = तथाहि, पादपोन्मूलनशक्ति = वृक्षोत्पाटनसमर्थं, "वृक्षो महीरुहः शाखी विटपी पादपस्तरुः" इत्यमरः, मारुतस्य = वायोः, रंहः = वेगः, शिलोच्चये = अद्रौ, न मूर्च्छति = न प्रसरति ॥ ३४ ॥

( समासः ) मह्यत इति मही ताम्पालयतीति तत्सम्बुद्धौ हे महीपाल ! पादपानामुन्मूलनं पादपोन्मूलनं तत्र शक्तिर्यस्य तत् । शिलाभिरुच्चीयत इति शिलोच्चयस्तस्मिन् ॥ ३४ ॥

( वाच्यपरिवर्तनम् ) हे महीपाल ! तव श्रमेण अलम् इतः प्रयुक्तेन अपि अस्त्रेण वृथा भूयेत पादपोन्मूलनशक्तिना मारुतस्य रंहसा शिलोच्चये न मूर्च्छ्यते ॥ ३४ ॥

( सरलार्थः ) हे राजन् ! यथा वायुवेगः वृक्षानेव उन्मूलयितुं शक्नोति न खलु पर्वतान्, तथैव भवानपि इतरान् विनाशयितुं शक्नोति न खलु मादृशान् रुद्रानुचरान्, अतो मय्यस्त्रप्रक्षेपणप्रयासो न विधेयः ॥ ३४ ॥

(भावार्थ) राजन् ! बस, बहुत परिश्रम न कर, मेरे ऊपर चलाया हुआ तेरा अस्त्र व्यर्थही होगा । पेड़को उखाड़नेवाला वायुका वेग पर्वतको नहीं उखाड़ सका ॥ ३४ ॥

कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम् ।
अवेहि मां किङ्करमष्टमूर्तेः कुम्भोदरं नाम निकुम्भमित्रम् ॥ ३५ ॥

( अन्वयः ) कैलासगौरं, वृषम्, आरुरुक्षोः, अष्टमूर्तेः, पादार्पणानुग्रहपूतपृष्ठं, निकुम्भमित्रं, कुम्भोदरं, नाम, मां, किङ्करम् अवेहि ॥३५॥

( टीका ) कैलासगौरं = कैलासवच्छुभ्रं, वृषं = वृषभं, " ऋषभो वृषभो वृषः" इत्यमरः, आरुरुक्षोः = आरोढुमिच्छोः, †अष्टमूर्तेः = शिवस्य, पादार्पणानुग्रहपूतपृष्ठं = चरणन्यासपवित्रपृष्ठभागं, " पादः पदङ्घ्रिश्चरणोऽस्त्रियाम् " इत्यमरः, निकुम्भमित्रं = निकुम्भसखं, "अथ मित्रं सखा सुहृत्" इत्यमरः, कुम्भोदरं नाम = कुम्भोदरसंज्ञकं, मां, किङ्करं = परिचारकं, " नियोज्यकिंकरप्रैष्यभुजिष्यपरिचारकाः " इत्यमरः, अवेहि = जानीहि ॥ ३५ ॥

( समासः ) कैलास इव गौर इति तं कैलासगौरम् । आरोढुमिच्छुः आरुरुक्षुस्तस्य । अष्टौ मूर्तयो यस्यासौ अष्टमूर्तिस्तस्य । पद्यते आभ्यामिति पादौ, तयोरर्पणं तदेव अनुग्रहस्तेन पूतं पृष्ठं यस्य सः तं । निकुम्भस्य मित्रं निकुम्भमित्रम् ॥ ३५ ॥

( सरलार्थः ) शुभ्रवृषभस्य उपरि आरोढुमिच्छतः शङ्करस्य पादन्यासानुकम्पनेन पवित्रपृष्ठभागं कुम्भोदरनामकं मां तस्य सेवकं जानीहि ॥ ३५ ॥

( भावार्थ ) कैलासपर्वतके तुल्य शुभ्र बैलपर चढ़नेवाले महादेवजीके चरण रखनेकी दयासे पवित्र पीठवाला मैं कुम्भोदर नाम का शंकरजीका सेवक हूँ ऐसा जानो ॥ ३५ ॥

अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन ।
यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः ॥३६॥

( अन्वयः ) पुरः, 'यम्' अमुं, देवदारुं, 'त्वं' पश्यसि, असौ, वृषभध्वजेन, पुत्रीकृतः, यः देवदारुः स्कन्दस्य, मातुः, हेमकुम्भस्तननिःसृतानां, पयसां, रसज्ञः, 'अस्ति' ॥ ३६ ॥

† "पृथिवी सलिलं तेजो वायुराकाशमेव च । सूर्याचन्द्रमसौ सोमयाजी चेत्यष्टमूर्तयः" इति यादवः ।

( टीका ) पुरः = अग्रे, 'यं' अमुं, देवदारुं = देवदारुवृक्षं 'त्वं' पश्यसि, असौ = देवदारुः, वृषभध्वजेन = शिवेन, पुत्रीकृतः-पुत्रवत्पालितः, यः = देवदारुः, स्कन्दस्य = कार्तिकेयस्य, मातुः = जनन्याः पार्वत्याः, "जनयित्री प्रसूर्माता जननी" इत्यमरः, हेमकुम्भस्तननिःसृततां = कनकघटरूपस्तननिर्गतानां, पयसां = क्षीराणां, "पयः क्षीरं पयोऽम्बु च" इत्यमरः, रसज्ञः स्वादज्ञः, अस्ति = वर्तते ॥ ३६ ॥

( समासः ) वृषभः ध्वजो यस्यासौ तेन वृषभध्वजेन । न पुत्रः अपुत्रः, अपुत्रः पुत्रः कृत इति पुत्रीकृतः । मान्यते = पूज्यते, माति गर्भोऽस्या वा तस्याः मातुः । हेम्नः कुम्भौ हेमकुम्भौ, तावेव स्तनौ ताभ्यां निःसृतास्तेषां । "स्कन्दपक्षे" हेमकुम्भाविव स्तनाविति विग्रहः" । रस्यत आस्वाद्यत इति रसस्तं जानातीति रसज्ञः ॥ ३६ ॥

( वाच्यपरिवर्तनम् ) यः, असौ देवदारुः त्वया दृश्यते अमुं वृषभध्वजः पुत्रीकृतवान् येन देवदारुणा स्कन्दस्य मातुः हेमकुम्भस्तननिःसृतानां पयसां रसज्ञेन भूयते ॥ ३६ ॥

( सरलार्थः ) त्वं पुरोवर्तिनं यं देवदारुवृक्षं पश्यसि असौ महादेवेन स्वसुतवत्पालितः, पार्वत्याश्च कनककलशनिर्गतपयसा परिवर्धितः, अतोऽसौ तयोः स्कन्दसमानप्रेमास्पदमिति भावः ॥ ३६ ॥

( भावार्थ ) तूँ जो देवदारु का पेड़ देख रहा है यह शंकरजीका कृत्रिम पुत्र है । यह स्वामी कार्तिककी माता पार्वतीके सोनेके घटरूपी स्तनोंसे निकले हुए पय ( दूध वा जल ) का स्वाद जाननेवाला है ॥ ३६ ॥

कण्डूयमानेन कटं कदाचिद्वन्यद्विपेनोन्मथिता त्वगस्य ।
अथैनमद्रेस्तनया शुशोच सेनान्यमालीढमिवासुरास्त्रैः ॥ ३७ ॥

( अन्वयः ) कदाचित् कटं, कण्डूयमानेन, वन्यद्विपेन, अस्य तरोः त्वक्, उन्मथिता अथ, अद्रेः, तनया, असुरास्त्रैः, आलीढं, सेनान्यम्, इव एनं, शुशोच ॥ ३७ ॥

( टीका ) कदाचित् = एकदा, कटं = कपोलं "गण्डस्थलमित्यर्थः" कण्डूयमानेन = कर्षता, वन्यद्विपेन = आरण्यगजेन, अस्य = देवदारोः, त्वक् = वल्कलं, उन्मथिता = उत्पाटिता, अथ = अनन्तरम्, अद्रेः = हिमाचलस्य, तनया = पार्वती, असुरास्त्रैः =

दैत्यप्रहरणैः, "आयुधन्तु प्रहरणं शस्त्रमस्त्रमथास्त्रियौ" इत्यमरः, आलीढं = क्षतं, सेनान्यं = कार्तिकेयम्, इव = यथा "व वा यथा तथैवैवं" इत्यमरः, एनं = देवदारुं, शुशोच = विललाप ॥ ३७ ॥

( समासः ) कण्डूय्यतेऽसौ कण्डूयमानस्तेन । वने भवो वन्यः, वन्यश्चासौ द्विपश्च वन्यद्विपस्तेन । अत्ति अद्यते वाद्रिस्तस्याद्रेः । अस्यन्त एभिरित्यस्त्राणि असुराणामस्त्राणीति तैरसुरास्त्रैः ॥ ३७ ॥

( वाच्यपरिवर्तनम् ) कदाचित् कटं कण्डूयमानः वन्यद्विपः अस्य त्वचम् उन्मथितवान्, अथ अद्रेः तनयया असुरास्त्रैः आलीढः सेनानीः इव एषः शुशुचे ॥ ३७ ॥

( सरलार्थः ) एकदाऽऽरण्यगजेनागत्य गण्डस्थलं कर्षताऽस्य तरोस्त्वगुन्मूलिता । ततः पार्वती स्वपुत्रे कार्तिकेये दानवास्त्रैः क्षतदेहे सति यथा विलपति तथा शोकार्त्ता सती विललाप ॥ ३७ ॥

( भावार्थ ) किसी समय कनपटी के रगड़ से किसी जंगली हाथीने इस पेड़की छाल छील डाली तब पार्वती दैत्योंके अस्त्रों से क्षतशरीर स्वामीकार्तिककी तरह इसका भी सोंच करने लगी ॥ ३७ ॥

तदाप्रभृत्येव वनद्विपानां त्रासार्थमस्मिन्नहमद्रिकुक्षौ ।
व्यापारितः शूलभृता विधाय सिंहत्वमङ्कागतसत्ववृत्ति ॥ ३८ ॥

( अन्वयः ) तदाप्रभृति, एव, वनद्विपानां, त्रासार्थं, शूलभृता, अङ्कागतसत्ववृत्ति, सिंहत्वं, विधाय, अहम्, अस्मिन्, अद्रिकुक्षौ, व्यापारितः ॥ ३८ ॥

( टीका ) तदाप्रभृति एव = तत्कालादारभ्य एव, वनद्विपानां = वनवासिनां गजानां, त्रासार्थं = भयार्थं, शूलभृता = शिवेन, अङ्कागतसत्ववृत्ति = समीपागतप्राणिजीविकं, सिंहत्वं = केसरित्वं, विधाय = कृत्वा, अहम्, अस्मिन् = एतस्मिन्, अद्रिकुक्षौ = गिरिगुहायां व्यापारितः = प्रेरितः ॥ ३८ ॥

( समासः ) द्वाभ्यां पिबन्तीति द्विपाः, वनानां द्विपास्तेषां । शूलं बिभर्तीति शूलभृत्तेन । अङ्कमागता अङ्कागताः, ते च ते सत्वाश्चाङ्कागतसत्वाः, अङ्कागतसत्वा वृत्तिर्यस्मिंस्तदङ्कागतसत्ववृत्ति । सिंहस्य भावः सिंहत्वं । अद्रेः कुक्षिरित्यद्रिकुक्षिस्तस्मिन्नद्रिकुक्षौ ॥ ३८ ॥

( वाच्यपरिवर्तनम् ) तदा प्रभृति.................................शूलभृत अस्मिन्.................................मां व्यापारितवान् ॥ ३८ ॥

( सरलार्थ ) ततः प्रभृति शिवेन वनवासिगजानां भयप्रदर्शनार्थमहमस्मिन् गह्वरे नियोजितः, अतोऽत्र मम समीपे ये जीवा आगच्छन्ति तान् भक्षित्वा, जीवामि ॥ ३८ ॥

( भावार्थ ) उसी दिन से जंगली हाथियों को डराने के लिये मुझे महादेवजीने † गोद में आये हुए पशु की वृत्तिवाली सिंहता देकर यहां नियुक्त किया है ॥ ३८ ॥

तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण ।
उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव ॥ ३९ ॥

( अन्वयः ) परमेश्वरेण, प्रदिष्टकाला, उपस्थिता, एषा, शोणितपारणा, सुरद्विषः, चान्द्रमसी, सुधा, इव, क्षुधितस्य, तस्य मे तृप्त्यै, अलम्, ' अस्ति ' ॥ ३९ ॥

( टीका ) परमेश्वरेण = भगवता, प्रदिष्टकाला = निर्दिष्टसमया, उपस्थिता = प्राप्ता, एषा = इयं, शोणितपारणा = रुधिरस्य व्रतान्तभोजनम्, सुरद्विषः = राहोः, चान्द्रमसी = चन्द्रसम्बन्धिनी, सुधा = अमृतं, " पीयूषममृतं सुधा " इत्यमरः, इव, क्षुधितस्य = बुभुक्षितस्य, तस्य = अङ्कागतसत्त्ववृत्तेः, मे = मम केसरिणः, तृप्त्यै = सन्तोषाय, अलं = पर्याप्तम्, " अलं भूषणपर्याप्तिशक्तिवारणवाचकम् " इत्यमरः, अस्ति ॥ ३९ ॥

( समासः ) ईशितुं शीलमस्येतीश्वरः, परमश्चासावीश्वरश्च परमेश्वरस्तेन । प्रदिष्टः कालो यस्याः सा प्रदिष्टकाला । शोणितस्य पारणा इति शोणितपारणा । सुरान् द्वेष्टीति सुरद्विट् तस्य । चन्द्रमसःइयं चान्द्रमसी । सुखेन धीयत इति सुधा । क्षुधा सञ्जाताऽस्यासौ क्षुधितस्तस्य ॥ ३९ ॥

( व्या० ) शोणितपारणेति धेनोर्विशेषणे शोणितेन ( मम ) पारणा यस्य । इति विग्रहः ॥ ३९ ॥

( वाच्यपरिवर्तनम् ) परमेश्वरेण प्रदिष्टकालया उपस्थितया शोणितपारणया एतया, चान्द्रमस्या सुधया सुरद्विषः इव,……… अलं ( भूयते ) ॥ ३९ ॥

† गोद में आये हुए पशु की वृत्ति से यह तात्पर्य्य है कि जो पशु अपने आप आजाय उसको भक्षण करना ढूढने कहीं न जाना ।

( सरलार्थः ) रुधिरपानार्थं परमेश्वरेण निर्दिष्टवेलायां प्रेषिता धेनुरियं राहोस्तृप्त्यर्थं चान्द्रमसी सुधेव बुभुक्षितस्य मे तृप्त्यै पर्य्याप्ता ॥ ३९ ॥

( भावार्थ ) उसी मुझ भूखे की तृप्ति के लिये राहू के तृप्ति के निमित्त चान्द्रमसी सुधा के समान यह काल की बांधी हुई लोहू की पारणा परमेश्वर ने भेजी है ॥ ३९ ॥

स त्वं निवर्तस्व विहाय लज्जां गुरोर्भवान्दर्शितशिष्यभक्तिः ।
शस्त्रेण रक्ष्यं यदशक्यरक्ष्यं न तद्यशः शस्त्रभृतां क्षिणोति ॥४०॥

( अन्वयः ) सः, त्वं, लज्जां, विहाय, निवर्तस्व, भवान्, गुरोः, दर्शितशिष्यभक्तिः, 'अस्ति' यत्, रक्ष्यं शस्त्रेण, अशक्यरक्षं, तत्, शस्त्रभृतां, यशः, न, क्षिणोति ॥ ४० ॥

( टीका ) सः = उपायशून्यः, त्वं, लज्जां, = त्रपां, विहाय = त्यक्त्वा, निवर्तस्व = परावृत्तीभव, भवान् = त्वं, गुरोः = वसिष्ठस्य, दर्शितशिष्यभक्तिः, = प्रकटितच्छात्रभक्तिः, अस्ति = विद्यते, यत्, रक्ष्यं = रक्षणीयं वस्तु, शस्त्रेण = आयुधेन, अशक्यरक्ष्यं = रक्षितुमशक्यं, तत् = रक्ष्यं, वस्तु, शस्त्रभृतां = आयुधधारिणां, यशः = कीर्तिं "यशः कीर्तिः समज्ञा च" इत्यमरः, न क्षिणोति = न हिनस्ति ॥ ४० ॥

( वाच्यपरिवर्तनम् ) तेन त्वया लज्जां विहाय निवृत्यताम् । भवता गुरोः दर्शितशिष्यभक्तिना ( भूयते ) येन शस्त्रेण रक्ष्येण अशक्यरक्षेण ( भूयते ) तेन न क्षीयते ॥ ४० ॥

( समासः ) गृणात्युपदिशतीति गुरुस्तस्य । दर्शिता शिष्यभक्तिर्येन सः । शस्यनेऽनेनेति शस्त्रं, तेन । अशक्या असाध्या रक्षा यस्य तत् । शस्त्राणि बिभ्रतीति शस्त्रभृतस्तेषां । रक्षितुं योग्यं रक्ष्यम् ॥ ४० ॥

( सरलार्थः ) उपायहीनः प्रकटितगुरुभक्तिस्त्वं लज्जां विहाय परावृत्तो भव, यतोऽशक्यार्थेष्वप्रतिविधानं न दोषायेति ॥ ४० ॥

( भावार्थ ) इसलिये गुरु में भक्ति देखानेवाला तूँ लज्जा छोड़ कर चला जा । जो वस्तु शस्त्रों से रक्षित न हो सके उसके नाश होने से शस्त्रधारियों का यश क्षीण नहीं होता है ॥ ४० ॥

इति प्रगल्भं पुरुषाधिराजो मृगाधिराजस्य वचो निशम्य ।
प्रत्याहतास्त्रो गिरिशप्रभावादात्मन्यवज्ञां शिथिलीचकार ॥ ४१ ॥

( अन्वयः ) पुरुषाधिराजः, मृगाधिराजस्य, इति प्रगल्भं वचः, निशम्य, "अहं" गिरिशप्रभावात्, प्रत्याहतास्त्रः, ( अस्मि, इति मत्वा ) आत्मनि, अवज्ञां, शिथिलीचकार ॥ ४१ ॥

( टीका ) पुरुषाधिराजः = नराधिपः, मृगाधिराजस्य = सिंहस्य, इति = इत्थं, प्रगल्भं = धृष्टं, वचः = वचनं, निशम्य = आकर्ण्य, 'अहं, गिरिशप्रभावात् = शिवसामर्थ्यात्, प्रत्याहतास्त्रः = कुण्ठितास्त्रः, " अस्मीति विचार्य ' आत्मनि = चित्ते " आत्मा कलेवरे यत्ने स्वभावे परमात्मनि । चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि च " इति धरणिः, अवज्ञां = अपमानं, शिथिलीचकार = तत्याज ॥४१॥

( समासः ) अधिराजत इत्यधिराजः, पुरुषाणामधिराजः पुरुषाधिराजः । मृगाणामधिराजस्तस्य । प्रगल्भत इति प्रगल्भं । गिरिरस्यास्तीति गिरिशस्तस्य प्रभावस्तस्मात् । प्रत्याहतम् अस्त्रं यस्य सः प्रत्याहतास्त्रः ॥ ४१ ॥

( वाच्यपरिवर्तनम् ) पुरुषाधिराजेन मृगा··················प्रत्याहतास्त्रेण ( भूयते ) आत्मनि अवज्ञा शिथिलीचक्रे ॥ ४१ ॥

( व्याकरण ) गिरौ शेत इति वाक्ये " गिरौ डश्छन्दसि " इति डप्रत्ययान्तो गिरिशशब्दश्छान्दस इत्यवगन्तव्यम् ॥ ४१ ॥

( सरलार्थः ) यदा दिलीपेनैतत्सर्वं वृत्तं श्रुतं तदा शिवप्रभावादस्त्रस्तम्भनेनावज्ञातोऽहं न खलु अनेनेति निर्वेदं न प्राप । यतः क्षत्रियाणां समानेष्वभिमानो न परमेश्वरम्प्रति ॥ ४१ ॥

( भावार्थः ) राजा दिलीप ने अपनी अस्त्र की गति महादेवजी के प्रभाव से रुकी हुई जान कर अपना विशेष अपमान नहीं समझा ॥४१॥

प्रत्यब्रवीच्चैनमिषुप्रयोगे तत्पूर्वभङ्गे वितथप्रयत्नः ।
जड़ीकृतस्त्र्यम्बकवीक्षणेन वज्रं मुमुक्षन्निव वज्रपाणिः ॥ ४२ ॥

( अन्वय ) तत्पूर्वभङ्गे, इषुप्रयोगे, वितथप्रयत्नः, ( अतएव ) त्र्यम्बकवीक्षणेन, जड़ीकृतः, वज्रं मुमुक्षन् वज्रपाणिः, इव, ( स्थितः,) ' सः राजा ' एनं, प्रत्यब्रवीत् ॥ ४२ ॥

( टीका ) तत्पूर्वभङ्गे = अभूतपूर्वव्याघाते, इषुप्रयोगे = बाणप्रयोगे, वितथप्रयत्नः = विफलायासः, त्र्यम्बकवीक्षणेन = शिवदृष्टिपातेन, * जड़ीकृतः = स्तब्धीकृतः, वज्रं = कुलिशं, "ह्लादिनी वज्रमस्त्री स्यात्कुलिशं भिदुरं पविः" इत्यमरः, मुमुक्षन् = मोक्तुमिच्छन्, वज्रपाणिः, वज्रहस्तः इन्द्र इव, एनं = सिंहं, प्रत्यब्रवीत् = प्रत्युवाच ॥ ४२ ॥

( समासः ) स एव पूर्वः भङ्गो यस्य सः । विशेषेण ईक्षणमिति वीक्षणं, त्रीणि अंबकानि यस्याऽसौ त्र्यंबकस्तस्य वीक्षणं तेन । न जडः अजडः, अजड़ः जड़ः सम्पद्यमानः कृत इति जड़ीकृतः । वज्रं पाणौ यस्य सः वज्रपाणिः ॥ ४२ ॥

( वाच्यपरिवर्तनम् ) ......... वितथप्रयत्नेन तेन एषः प्रत्यूच्येत । जड़ीकृतेन वज्रं मुमुक्षता वज्रपाणिना इव तस्थे ॥४२॥

( सरलार्थः ) बाणप्रयोगे विफलप्रयत्नः त्रिनेत्रवीक्षणेन निष्पन्दीकृतः शक्र इव स्थितः नृपः एनं सिंहं प्रत्यब्रवीत् ॥ ४२ ॥

( भावार्थ ) महादेवजी के देखने से ही रुद्धशक्ति होकर वज्रप्रहार करने की इच्छा करने वाले इन्द्र के समान स्थित होकर राजा दिलीप इससे बोला ॥ ४२ ॥

---

* अत्यत्र संक्षिप्तमैतिह्यम्:—

आसन् पुरा अन्तरीक्षे दानवानाम् आयसं, राजतं, सौवर्णञ्चेति त्रीणि पुराणि । इन्द्रः सर्वैरप्यायुधैः तानि भेत्तुं समर्थो न बभूव । अथ तत्रस्थितैरसुरैः सातिशयं प्रपीडिता इन्द्रप्रभृतयो देवाः त्रिपुरनाशार्थं भगवन्तं देवादिदेवं महादेवं शरणं ययुः । तैः प्रार्थितः स दयालुर्देवः त्रिपुरदहनाय भयङ्करस्वरूपं बाणवह्निम् असृजत् । ततस्तस्य बाणाग्निना युगपद् दह्यमानानि त्रीणि पुराणि सुराः समेत्य सन्ददृशुः । अस्मिन्नेव समये महाप्रभावा भगवती पार्वती अलौकिकमेकं शिशुम् अङ्के निधाय त्रिपुरसंहारावलोकनाय तत्राजगाम । आगत्य च सा देवानपृच्छत्—ब्रूत भवन्तः ? कोऽयमास्ते मदङ्के शिशुरिति । देवाश्च तस्य शिशोरप्रतिमं तेजः समीक्ष्य क्षणं स्तब्धा बभूवुः । परम् इन्द्रः असूयया तं वज्रेण प्रहर्तुं प्रययौ । ततो बालरूपधरः स शङ्करः शक्रस्य वज्रसहितं तं बाहुं स्तम्भयामास । अनन्तरं ब्रह्मणा महेन्द्रेण सकलेन देवमण्डलेन च कथमपि प्रसादिते बालरूपधरे तस्मिन् शङ्करे मघोनः बाहुः पुनः स्वप्रकृतिं यातः ।

श्रीमहाभारतम् ।

संरुद्धचेष्टस्य मृगेन्द्र कामं हास्यं वचस्तद्यदहं विवक्षुः ।
अन्तर्गतं प्राणभृतां हि वेद सर्वं भवान्भावमतोऽभिधास्ये ॥ ४३ ॥

( अन्वयः ) हे मृगेन्द्र ! यत्, 'वचः' अहं विवक्षुः, 'अस्मि' संरुद्धचेष्टस्य, मे तत्, वचः, कामं, हास्यं, 'वर्तते' हि, भवान्, प्राणभृताम्, अन्तर्गतं, सर्वं, भावं, वेद, अतः 'कारणात्' अहम्, अभिधास्ये ॥ ४३ ॥

( टीका ) हे मृगेन्द्र ! = हे सिंह ! "सिंहो मृगेन्द्रः पञ्चास्यः" इत्यमरः, यत् "वचः" अहं, विवक्षुः = जगदिषुः, "अस्मि" संरुद्धचेष्टस्य = प्रतिरुद्धव्यापारस्य, मे = मम तत् = वक्ष्यमाणं वचः = वाक्यं, कामं = यथेष्टं, हास्यं = परिहसनीयं, हि = यस्मात्कारणात्, भवान्, प्राणभृतां = प्राणिनाम्, अन्तर्गतं = हृन्मध्यगतं, "अन्तः स्वीकारमध्ययो" रिति मेदिनी, सर्वम् = अखिलं, भावम् = अभिप्रायं, वेद = जानाति, अतः = अस्मात्कारणात्, अभिधास्ये = वक्ष्यामि ॥ ४३ ॥

( समासः ) इन्दतीतीन्द्रः, मृगाणामिन्द्रो मृगेन्द्रस्तत्सम्बुद्धौ हे मृगेन्द्र ! वक्तुमिच्छुर्विवक्षुः । सम्यक् रुद्धा चेष्टा यस्य तस्य । हसितुं योग्यं हास्यं । प्राणन्ति जीवन्त्येभिरिति प्राणास्तान् बिभ्रतीति तेषां । अन्तः गतमित्यन्तर्गतम् ॥ ४३ ॥

( वाच्यपरिवर्तनम् ) मृगेन्द्र ! यत् "वचः" मया विवक्षुणा "भूयते" संरुद्धचेष्टस्य, मे तेन वचसा कामं हास्येन "भूयते" हि भवता प्राणभृतां अन्तर्गतः सर्वः भावः विद्यते अतः "मया" अभिधास्यते ॥ ४३ ॥

( सरलार्थः ) हे हरे ! यद्वचो वक्तुमभिलषामि तद्वचोऽवरुद्धव्यापारस्य मम, निर्भरं उपहासयोग्यं, तथापि भवानखिलप्राणिनां चित्ताभिप्रायं वेत्ति अतोऽभिधास्ये ॥ ४३ ॥

( भावार्थ ) हे सिंह, मेरा वचन यद्यपि अत्यन्त हंसी के योग्य है तो भी आप प्राणियों के हृदय के सब भावः जानते ही हैं इसलिये उसे कहता हूँ ॥ ४३ ॥

मान्यः स मे स्थावरजङ्गमानां सर्गस्थितिप्रत्यवहारहेतुः ।
गुरोरपीदं धनमाहिताग्नेर्नश्यत्पुरस्तादनुपेक्षणीयम् ॥ ४४ ॥

( अन्वयः ) स्थावरजङ्गमानां, सर्गस्थितिप्रत्यवहारहेतुः, सः, 'वृषभध्वजः, मे, मान्यः, 'अस्ति' आहिताग्नेः, गुरोः, अपि, इदं, 'गोरूपं' धनं, पुरस्तात्, नश्यत्, अनुपेक्षणीयम् ॥ ४४ ॥

( टीका ) स्थावरजंगमानां = तरुशैलमनुष्यादीनां, सर्गस्थितिप्रत्यवहारहेतुः = उत्पत्तिस्थितिविनाशकारणं, सः = वृषभध्वजः, मे = मम, मान्यः, पूज्यः, 'अस्ति' आहिताग्नेः = स्थापिताग्नेः, गुरोः = वशिष्ठस्यापि, इदं = गोरूपं, धनं, पुरस्तात् = अग्रे, नश्यत् = प्रणश्यत्, = अनुपेक्षणीयं = उपेक्षितुमयोग्यम् ॥ ४४ ॥

( समासः ) स्थातुं शीलमेषां ते स्थावराः, जङ्गम्यन्ते भृशं गच्छन्तीति जङ्गमाः, ते च जंगमाश्च स्थावरजंगमास्तेषां । सर्गश्च स्थितिश्च प्रत्यवहारश्च तेषां हेतुः । आहितोऽग्निर्येन सः तस्य ॥ ४४ ॥

( वाच्यपरिवर्तनम् ) स्थावरजङ्गमानां सर्गस्थितिप्रत्यवहारहेतुना तेन मे मान्येन "भूयते" आहिताग्नेः अनेन धनेन पुरस्तात् नश्यता अनुपेक्षणीयेन " भूयते " । ॥ ४४ ॥

( सरलार्थः ) चेतनाचेतनानामुत्पत्तिपालनसंहारहेतुः स शिवः मम मान्यः, आहिताग्नेर्गुरोर्वसिष्ठस्याऽपीदं गोरूपं धनमग्रे नश्यत् नोपेक्षणीयम् ॥ ४४ ॥

( भावार्थ ) उत्पत्ति, पालन, और नाशके करने वाले शिव मेरे पूजनीय हैं किन्तु सायं प्रातः अग्निकी आराधना करनेवाले गुरू का भी यह धन ( गौ ) सम्मुख नष्ट होता हुआ देखना अयोग्य है ॥ ४४ ॥

स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्तयितुं प्रसीद ।
दिनावसानोत्सुकबालवत्सा विसृज्यतां धेनुरियं महर्षेः ॥ ४५ ॥

( अन्वयः ) सः, त्वं, मदीयेन, देहेन, शरीरवृत्तिं, निर्वर्तयितुं, प्रसीद, दिनावसानोत्सुकबालवत्सा, इयं, महर्षेः, धेनुः, 'त्वया' विसृज्यताम् ॥ ॥ ४५ ॥

( टीका ) सः = अङ्कागतसत्त्ववृत्तिः, त्वं, मदीयेन = मत्सम्बन्धिना, देहेन = शरीरेण शरीरवृत्तिं = देहजीवनं, निर्वर्तयितुं = सम्पादयितुं प्रसीद = प्रसन्नो भव, दिनावसानोत्सुकबालवत्सा = सायंकालोत्कण्ठितशिशुवत्सा, इयम् = एषा, वशिष्ठस्य, धेनुः = नन्दिनी, त्वया = भवता, विसृज्यताम् = मुच्यताम् ॥ ४५ ॥

( समासः ) ममेदं मदीयं तेन । शृणाति शीर्यते वा शरीरं, तस्य वृत्तिस्तां । दिनस्यावसानं, दिनावसानं, तत्र उत्सुकः बालवत्सो यस्याः सा । महांश्चासौ ऋषिश्च महर्षिस्तस्य महर्षेः ॥ ४५ ॥

( वाच्यपरिवर्तनम् ) तेन त्वया मदी०………प्रसद्यताम् दिनावसानोत्सुकबालवत्सां इमां महर्षेः धेनुं विसृज ॥ ४५ ॥

( सरलार्थः ) समीपागतसत्त्ववृत्तिस्त्वं कृपया मदीयेन शरीरेण आहारं सम्पादय, सायङ्काले उत्कण्ठितबालवत्सां वसिष्ठधेनुमिमां परित्यज ॥ ४५ ॥

( भावार्थ ) हे सिंह ! तू मेरे देह से अपनी क्षुधा दूर करने के लिए प्रसन्न हो । और सन्ध्या समय अपने बछड़े को चाहने वाली इस महर्षि की गौ को छोड़ दे ॥ ४५ ॥

अथान्धकारं गिरिगह्वराणां दंष्ट्रामयूखैः शकलानि कुर्वन् ।
भूयः स भूतेश्वरपार्श्ववर्ती किञ्चिद्विहस्यार्थपतिं बभाषे ॥ ४६ ॥

( अन्वयः ) अथ, भूतेश्वरपार्श्ववर्ती, सः, "सिंहः" दंष्ट्रामयूखैः, गिरिगह्वराणां, अन्धकारं, शकलानि, कुर्वन्, किञ्चित्, विहस्य, भूयः, अर्थपतिं, बभाषे ॥ ४६ ॥

( टीका ) अथ = दिलीपोक्त्यनन्तरं, भूतेश्वरपार्श्ववर्ती = महादेवानुचरः, सः = सिंहः, दंष्ट्रामयूखैः = दन्तकिरणैः, गिरिगह्वराणां = पर्वतकन्दराणां, अन्धकारं = ध्वान्तं, "अन्धकारोऽस्त्रियां ध्वान्तम्" इत्यमरः, शकलानि = खण्डानि, "भित्तं शकलखण्डे वा" इत्यमरः, कुर्वन् = सम्पादयन्, किञ्चित् = ईषत्, विहस्य = हसित्वा, भूयः = पुनः, अर्थपतिं = धनाधिपं राजानं, बभाषे = उक्तवान् ।। ४६ ।।

( समासः ) ईशितुं शीलमस्येतीश्वरः, भूतानामीश्वरो भूतेश्वरस्तस्य पार्श्ववर्तीति । दंष्ट्राणां मयूखैः । गिरेर्गह्वराणि गिरिगह्वराणि तेषां । पातीति पतिः; अर्थानाम्पतिरित्यर्थपतिस्तम् ॥ ४६ ॥

( वाच्यपरिवर्तनम् ) अथ अनेन भूतेश्वरपार्श्ववर्तिना दंष्ट्रामयूखैः कुर्वता अर्थपतिः ॥ ४६ ॥

( सरलार्थः ) ततः शिवानुचरः, सिंहः पर्वतविलान्धकारं दन्तकान्तिभिर्निरस्यन् भूयो भूपमुवाच ।। ४६ ।।

( भावार्थ ) इसके उपरान्त महादेवजीके समीप रहने वाला वह सिंह अपने डाढें की कान्ति से पहाड़ की कन्दरा के अन्धकार को टुकड़े २ करता हुआ कुछ हँस कर बोला ॥ ४६ ॥

एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च ।
अल्पस्य हेतोर्बहु हातुमिच्छन् विचारमूढः प्रतिभासि मे त्वम् ॥४७॥

( अन्वयः ) एकातपत्रं, जगतः, प्रभुत्वं, नवं, वयः, इदं, कान्तं, वपुश्च, बहु, " एतत्सर्वं " अल्पस्य, हेतोः, "धेन्वर्थं" हातुम्, इच्छन्, त्वं, मे, विचारमूढः, प्रतिभासि ॥ ४७ ॥

( टीका ) एकातपत्रं = एकच्छत्रं, जगतः = भुवनस्य मर्त्यलोकस्य, प्रभुत्वं = स्वामित्वं, नवं = नूतनं, "प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः" इत्यमरः, वयः = यौवनम्, इदम् = एतत्, कान्तं = सुन्दरं, वपुः = शरीरं, च, ' एतत्सर्वं ' बहु = बहुलं" अदभ्रं बहुलं बहु " इत्यमरः अल्पस्य = स्तोकस्य, हेतोः = कारणात्, हेत्वर्थमित्यर्थः, हातुं त्यक्तुं, इच्छन्, त्वं, मे = मम, विचारमूढः, कार्य्याकार्य्यविमर्षशून्यः, प्रतिभासि = लक्ष्यसे ॥ ४७ ॥

( समासः ) आतपात्त्रायत इत्यातपत्रं, एकम्, आतपत्रं यस्मिंस्तत् । इच्छतीतीच्छन्, विचारे मूढो विचारमूढः ॥ ४७ ॥

( वाच्यपरिवर्तनम् ) एकातपत्रं............हातुं इच्छता त्वया विचारमूढेन प्रतिभायते ॥ ४७ ॥

( सरलार्थः ) हे राजन् यतस्त्वं एकच्छत्रं पृथिवीराज्यं, नवयौवनं, मनोहरमिदं वपुश्च इति सर्वम् अल्पस्य एकस्य गोर्हेतोस्त्यक्तुमिच्छसि, अतः कार्याकार्यविचारे मूर्खः, प्रतिभासि ॥ ४७ ॥

( भावार्थ ) हे राजन् ! चक्रवर्तित्व, जगत की प्रभुताई, जवानी का आनन्द और सुन्दर शरीर यह सब एक पशु के निमित्त छोड़ने की इच्छा करने वाला तू मुझे मूर्ख मालूम होता है ॥ ४७ ।

भूतानुकम्पा तव चेदियं गौरेका भवेत्स्वस्तिमती त्वदन्ते ।
जीवन्पुनः शश्वदुपप्लवेभ्यः प्रजाः प्रजानाथ पितेव पासि ॥ ४८ ॥

( अन्वयः ) तव, चेत् भूतानुकम्पा, ( अस्ति तदा ) त्वदन्ते, एका-( एव ) इयं, गौः, स्वस्तिमती, भवेत्, हे प्रजानाथ ! पुनः, (पक्षान्तरे) (त्वं) जीवन्, (सन्) शश्वत्, पिता, इव, उपप्लवेभ्यः, प्रजाः, पासि॥४८

( टीका ) तव = भवतः, चेत् = यदि, भूतानुकम्पा, भूतेषु अनुकम्पा भूतानुकम्पा = प्राणिदया " तर्हि " त्वदन्ते = त्वद्विनाशे, एका = एकाकिनी, 'एव, इयं = मदाक्रान्ता, गौः = धेनुः, स्वस्तिमती = कल्याणवती, भवेत् = स्यात् ' किन्तु ' हे प्रजानाथ ! = हे जनपते !, " प्रजा " स्यात्संततौ जने " इत्यमरः, ' त्वं ' 'पुनः = भूयः, जीवन् ' सन् ' = प्राणान्धारयन्, सन्, शश्वत् = निरन्तरं, पिता इव = जनक इव, उपप्लवेभ्यः = उपद्रवेभ्यः, प्रजाः = लोकान्, पासि = रक्षसि ॥ ४८ ॥

( समासः ) तव अन्तस्त्वदन्तस्तस्मिन् । स्वस्ति क्षेमम् अस्याः अस्तीति । प्रकर्षेण जायन्त इति प्रजास्तासां नाथस्तत्संबुद्धौ ॥ ४८ ॥

( वाच्यपरिवर्तनम् ) तव चेत् भूतानुकम्पया " भूयते " त्वदन्ते एकया अनया गवा स्वस्तिमत्या भूयते । हे प्रजानाथ! पुनः जीवता त्वया शश्वत् पित्रा इव उपप्लवेभ्यः प्रजाः पायन्ते ॥ ४८ ॥

( सरलार्थः ) यदि भवतः भूतेषु दया वर्तते तर्हि त्वद्विनाशे इयमेव एका गौः कल्याणिनी भविष्यति, किन्तु यदि त्वं मह्यं स्वशरीरं नार्पयसि तर्हि पितेव विघ्नेभ्यः प्रजाः चिरं पासि ॥ ४८ ॥

( भावार्थ ) जो तेरी प्राणियों पर दयाही है तो तेरे नाश होने पर केवल यही एक गौ सुखी होगी, हे नाथ ! और जो तूँ जीता रहा तो पिता के समान चिरकाल तक विघ्नों से प्रजा की रक्षा करेगा ॥ ४८ ॥

अथैकधेनोरपराधचण्डाद् गुरोः कृशानुप्रतिमाद्बिभेषि ।
शक्योऽस्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोध्नीः ॥४९॥

( अन्वयः ) अथ, एकधेनोः, अपराधचण्डात् कृशानुप्रतिमात्, गुरोः, ( त्वं ) बिभेषि ( तर्हि ) घटोध्नीः, कोटिशः गाः, स्पर्शयता, भवता, अस्य, ( गुरोः ) मन्युः, विनेतुं, शक्यः ॥ ४९ ॥

(टीका) अथ = यदि, एकधेनोः = केवलं नन्दिन्याः "कृते" अपराधचण्डात् = अपराधात्यन्तकोपनात् "चण्डस्त्वत्यन्तकोपनः" इत्यमरः, कृशानुप्रतिमात् = अग्निमूर्त्तेः, गुरोः = वशिष्ठात्, ' त्वं ' बिभेषि = भयम्प्राप्नोषि, ' तर्हि ' घटोध्नीः = कलशस्तनीः, कोटिशः = बहुकोटिपरिसंख्याकाः, गाः = धेनूः, स्पर्शयता = प्रतिपादयता,

भवता=त्वया, अस्य=गुरोर्वशिष्ठस्य, मन्युः=क्रोधः, विनेतुम्=अपनेतुं, शक्यः=पारणीयः ॥ ४९ ॥

( समासः ) एकैव धेनुर्यस्य सः तस्य । अपराधेन चण्डोऽपराधचण्डस्तस्मात् । कृश्यति=तनूकरोतीति कृशानुः, तस्येव प्रतिमा यस्य सः तस्मात् । घटा इव ऊधांसि यासान्ताः ॥ ४९ ॥

अथ एकधे०…………"त्वया" भीयते घटो०………स्पर्शयन् भवान् अस्य मन्युं विनेतुं शक्नुयात् ।

( सरलार्थः ) यदि धेन्वन्तराभावात् तद्विनाशनजनितापराधेनातिकुपितादनलतुल्याद् गुरोर्वसिष्ठाद्बिभेषि तर्हि अस्य क्रोधं, बहुशः पयस्विनीर्गा दत्त्वा दूरीकर्तुं त्वं समर्थोऽसि ॥ ४९ ॥

( भावार्थ ) यदि इसधेनु के नाशसे अत्यन्त कुपित अतएव साक्षादग्निस्वरूप गुरु वसिष्ठसे तूं डरता है तो घड़ोंके समान ऐन वाली करोड़ो गायें देकर तू उनका क्रोध दूर भी कर सक्ता है ॥४९॥

तद्रक्ष कल्याणपरम्पराणां भोक्तारमूर्जस्वलमात्मदेहम् ।
महीतलस्पर्शनमात्रभिन्नमृद्धं हि राज्यं पदमैन्द्रमाहुः ॥ ५० ॥

( अन्वयः ) तत्, कल्याणपरम्पराणां, भोक्तारम्, ऊर्जस्वलम्, आत्मदेहं, ( त्वं ) रक्ष, हि, ऋद्धं, राज्यं, महीतलस्पर्शनमात्रभिन्नम्, ऐन्द्रं, पदम्, आहुः ॥ ५० ॥

( टीका ) तत्=तस्मात्कारणात, कल्याणपरम्पराणां=मङ्गलसन्ततीनां, भोक्तारम्,=उपभोक्तारम्, ऊर्जस्वलं=महाबलम्, आत्मदेहं, स्वशरीरं, त्वं, रक्ष=गोपाय, हि=यस्मात्कारणात्, ऋद्धं=समृद्धं, राज्यं, महीतलस्पर्शनमात्रभिन्नं=भूतलसम्बन्धमात्रभिन्नं, ऐन्द्रं=इन्द्रसम्बन्धि, पदं=स्थानं, "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः, आहुः=प्राहुः, लोका वदन्तीति शेषः ॥ ५० ॥

( समासः ) कल्याणानां परम्परास्तासां । ऊर्जो विद्यते यस्य स तम् । आत्मनो देहमात्मदेहं । मह्यास्तलं महीतलं, महीतलस्पर्शनमेव महीतलस्पर्शनमात्रं तेन भिन्नमिति । इन्द्रस्येदमैन्द्रम् ॥ ५० ॥

( वाच्यपरिवर्तनम् ) तत् कल्याणपरम्पराणां भोक्ता ऊर्जस्वलः आत्मदेहः "त्वया" रक्ष्यताम्, हि…………"नरैः" उच्यते ।

( सरलार्थः ) तस्मात् उत्तरोत्तरमनेकश्रेयसामुपभोक्ता त्वं महाबलशालिनं निजशरीरं पालय । यतो विचक्षणाः समृद्धिपूर्णं भवदीयमिदं राज्यं भूतलसम्बन्धमात्रेण भिन्नं स्वर्गराज्यमाहुः ॥५०॥

( भावार्थ ) इस हेतु तूं अपने बलवान् शरीरकी रक्षा कर, समृद्धिशाली तेरा राज्य इन्द्रपदके समान है केवल पृथ्वीका सम्बन्ध होने के कारण उससे भिन्न है ॥ ५० ॥

एतावदुक्त्वा विरते मृगेन्द्रे प्रतिस्वनेनास्य गुहागतेन ।
शिलोच्चयोऽपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव ॥५१॥

( अन्वयः ) एतावत्, उक्त्वा, मृगेन्द्रे, विरते, ( सति ) शिलोच्चयः, अपि, अस्य, ( सिंहस्य ) गुहागतेन, प्रतिस्वनेन, क्षितिपालं प्रीत्या, तम्, एव, अर्थम्, उच्चैः, अभाषत, इव ॥ ५१ ॥

( टीका ) एतावत्=एतावत्पर्यन्तं, उक्त्वा=कथयित्वा, मृगेन्द्रे =सिंहे, "सिंहो मृगेन्द्रः पञ्चास्यः" इत्यमरः, विरते=मौनीभूते सति, शिलोच्चयः=शैलोऽपि अस्य=पुरोवर्तिनः सिंहस्य, गुहागतेन=कन्दरगतेन, प्रतिस्वनेन=प्रतिध्वनिना, उच्चैः=उच्चस्वरेण, क्षितिपालं=भूमिपं दिलीपं प्रीत्या=प्रेम्णा, तमेव अर्थं=सिंहोक्तवाक्यम्, अभाषत इव=अवोचतेव ॥ ५१ ॥

( समासः ) मृगाणामिन्द्रो मृगेन्द्रस्तस्मिन् । गुहां गतो गुहागतस्तेन । क्षितिम्पालयतीति । शिलाभिरुच्चीयत इति शिलोच्चयः ॥ ५१ ॥

( वाच्यपरिवर्तनम् ) एतावत्……शिलोच्चयेन अपि……क्षितिपालः………तम् अर्थम् अभाष्यत इव ॥ ५१ ॥

( सरलार्थः ) एतावत्कथयित्वा सिंहे तूष्णींभूते सति कन्दराश्रितेनाऽस्य सिंहस्य प्रतिशब्देन पर्वतोऽपि दिलीपमुच्चैः तदेव वचनं कथितवानेव ॥ ५१ ॥

( भावार्थ ) इतना कह कर मृगेन्द्रके चुप होने पर पर्वतने भी कन्दरामें उठे हुए प्रतिशब्दसे प्रीतिपूर्वक मानो राजासे यही बात कही ॥ ५१ ॥

निशम्य देवानुचरस्य वाचं मनुष्यदेवः पुनरप्युवाच ।
धेन्वा तदध्यासितकातराक्ष्या निरीक्ष्यमाणः सुतरां दयालुः ॥५२॥

( अन्वयः ) मनुष्यदेवः, देवानुचरस्य, वाचं, निशम्य, तदध्यासितकातराक्ष्या, धेन्वा, निरीक्ष्यमाणः, ( अतः ) सुतरां, दयालुः, पुनः, अपि, उवाच ॥ ५२ ॥

( टीका ) मनुष्यदेवः = राजा दिलीपः, देवानुचरस्य = शम्भुकिङ्करस्य सिंहस्य, वाचं = वाणीं "गीर्वाग्वाणी सरस्वती" इत्यमरः, निशम्य = श्रुत्वा, तदध्यासितकातराक्ष्या = सिंहाक्रमणभयचकितदृष्ट्या नन्दिन्या, निरीक्ष्यमाणः = अवलोक्यमानः, दिलीपः, सुतरां = अत्यन्तं, दयालुः, कृपालुः 'सन्' पुनरपि = भूयोऽपि, उवाच = जगाद ॥ ५२ ॥

( समासः ) मनुष्याणां देवो मनुष्यदेवः । अनुचरतीत्यनुचरः, देवस्यानुचरो देवानुचरस्तस्य । तेनाध्यासितं तदध्यासितं तेन कातरे अक्षिणी यस्याः सा तया । दयाशीलो दयालुः ॥ ५२ ॥

( वाच्यपरिवर्तन ) मनुष्यदेवेन.......... निरीक्ष्यमाणेन........ ... दयालुना पुनः अपि ऊचे ॥ ५२ ॥

( सरलार्थः ) शिवानुचरस्य सिंहस्य वाचमाकर्ण्य तदाक्रमेणेन कातरनेत्रया धेन्वाऽवलोक्यमानः नृपः पुनरप्यवादीत् ॥ ५२ ॥

( भावार्थ ) राजा दिलीप महादेवजी के सेवक का यह वचन सुनकर उसके आक्रमण से डरे हुए आखोंवाली धेनुको देखता हुआ फिरभी बोला ॥ ५२ ॥

क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः ।
राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥ ५३ ॥

( अनवयः ) क्षतात्, त्रायते, इति, उदग्रः, क्षत्रस्य, शब्दः, भवनेषु, रूढः, ( अस्ति ) तद्विपरीतवृत्तेः, ( क्षत्रस्य मम ) राज्येन किं, वा, उपक्रोशमलीमसैः, प्राणैः, 'किम्' (अस्ति) किल ॥ ५३ ॥

( टीका ) क्षतात् = नाशात्, त्रायते = रक्षति, इति = हेतोः, उदग्रः = उन्नतः, क्षत्रस्य = क्षत्रवर्णस्य, शब्दः = वाचकः "शास्त्रे शब्दस्तु वाचकः" इत्यमरः, भुवनेषु = लोकेषु, रूढः = प्रसिद्धः, 'अस्ति', तद्विपरीतवृत्तेः = क्षत्रशब्दविरुद्धव्यापारस्य 'क्षत्रस्य मम' राज्येन, किं अस्ति. मम राज्येन किमपि प्रयोजनं नास्तीत्यर्थः, वा = अथवा, उपक्रोशमलीमसैः = निन्दाभलिनैः " उपक्रोशो जुगुप्सा

च कुत्सा निन्दा च गर्हणे " इत्यमरः, प्राणैः, = असुभिः, किम् = किमपि प्रयोजनं नास्ति ॥ ५३ ॥

( समासः ) तस्य क्षत्रशब्दस्य विपरीता विरोधिनी तद्विपरीता, तद्विपरीता वृत्तिर्यस्य सः तस्य । उपक्रोशेन मलीमसैः उपक्रोशमलीमसैः ॥ ५३ ॥

( वाच्यपरिवर्तनम् ) क्षतात्............इति उदग्रेण क्षत्रस्य शब्देन......रुढ़ेन..................अभूयत ॥ ५३ ॥

( सरलार्थः ) क्षतात् त्रायत इति व्युत्पत्त्या क्षत्रशब्दः लोकेषु प्रसिद्धिङ्गतस्तस्मात्क्षत्रशब्दविरुद्धव्यापारस्य क्षत्रस्य मे राज्यादिना गर्हितजीवनेन च किमपि प्रयोजनं नास्तीति भावः ॥ ५३ ॥

( भावार्थ ) क्षत्रिय शब्द का शब्दार्थ "आपत्ति से रक्षा करने वाला" ऐसा संसार में प्रसिद्ध है, इसलिये क्षत्रिय होकर मैं इसके विरुद्ध आचरण कर इस राज्यसे अथवा अपकीर्तिसे मलिन हुए प्राणोंसे भी कोइ लाभ नहीं समझता ॥ ५३ ॥

कथं नु शक्योऽनुनयो महर्षेर्विश्राणनाच्चान्यपयस्विनीनाम् ।
इमामनूनां सुरभेरवेहि रुद्रौजसा तु प्रहृतं त्वयास्याम् ॥ ५४ ॥

( अन्वयः ) अन्यपयस्विनीनां विश्राणनात्, च, महर्षेः, अनुनयः, कथं, नु, शक्यः, ( अस्ति ) ( हि ) इमां, ( धेनुं ) सुरभेः, अनूनाम्, अवेहि त्वया, तु, अस्यां, रुद्रौजसा, प्रहृतम् ॥ ५४ ॥

( टीका ) अन्यपयस्विनीनां = अन्यधेनूनां, विश्राणनात् = दानात्, महर्षेः = वशिष्ठस्य, अनुनयः = क्रोधापनयः, कथं नु = केन प्रकारेण वा, शक्यः = पारणीयः, ' अस्ति ' ' यतः ' इमां = नन्दिनीं, सुरभेः = कामधेनोः, अनूनां, अन्यूनाम्, अवेहि = विद्धि, त्वया = भवता, "तु" अस्यां = धेनौ, रुद्रौजसा = महेश्वरतेजसा, " ओजो दीप्तौ बले स्रोते इन्द्रिये निम्नगारये । तेजः प्रभावदीप्तौ च " इत्यमरः, प्रहृतं = प्रहारः कृतः, न तु स्वतेजसा ॥ ५४ ॥

( वाच्यपरिवर्तनम् ) अन्य०..................अनुनयेन कथं शक्येन "भूयेत" प्रहृतेन अभूयत ॥

( सरलार्थः ) एषा नन्दिनी कामधेनुतुल्या वर्ततेऽन्यपयस्विनीनान्दानाद्वशिष्ठर्षेः प्रसादः कथं कर्तुं शक्यः ? त्वयात्वस्यामाक्रमणं केवलं महेश्वरसामर्थ्येन कृतम् ॥ ५४

( भावार्थ ) यह नन्दिनीं कामधेनु के समान है इसलिये अन्य गउओंके देनेसे मुनि वशिष्ठका क्रोध किस प्रकार शान्त होसका है ? इस पर तेरा आक्रमण शिवजीकेही प्रतापसे हुआ है ॥ ५४ ॥

सेयं स्वदेहार्पणनिष्क्रयेण न्याय्या मया मोचयितुं भवत्तः ।
न पारणा स्याद्विहता तवैवं भवेदलुप्तश्च मुनेः क्रियार्थः ॥ ५५ ॥

( अन्वयः ) मया, स्वदेहार्पणनिष्क्रयेण, सा इयं, ( गौः ) भवत्तः, मोचयितुं, न्याय्या, ( अस्ति ) एवं, तव, पारणा, विहता, न स्यात्, मुनेः, क्रियार्थः, च, अलुप्तः, भवेत् ॥ ५५ ॥

( टीका ) मया, स्वदेहार्पणनिष्क्रयेण = स्वशरीरसमर्पणमूल्येन सा = पूर्वोक्ता, इयं = पुरोवर्तिनी गौः, भवत्तः = त्वत्तः, मोचयितुं = त्याजयितुं, न्याय्या = उचिता, अस्ति, एवम् = अनेनोक्तप्रकारेण, तव = ते, पारणा = उपवासभोजनं, विहता = नष्टा, न स्यात् = न भवेत्, मुनेः = वशिष्ठस्य, क्रियार्थः होमादिप्रयोजनं, च, अलुप्तः = अप्रतिहतः, भवेत् ॥ ५५ ॥

( समासः ) निष्क्रीयते = प्रत्याह्रियतेऽनेनेति निष्क्रयः, स्वस्य देहः स्वदेहस्तस्यार्पणं स्वदेहार्पणं, तदेव निष्क्रयस्तेन । न्यायादनपेता न्याय्या । क्रियैवार्थः क्रियार्थः । न लुप्त इत्यलुप्तः ॥ ५५ ॥

( वाच्यपरिवर्तनम् )………तया अनया न्याय्यया "भूयते" एवं तव पारणया विहतया नभूयेत मुनेः क्रियार्थेन च अलुप्तेन भूयेत॥५५॥

( सरलार्थः ) सेयं धेनुर्मया निजशरीरदानविनिमयेन त्वत्तो मोचयितव्या, एवमनुष्ठिते सति भवतः पारणा नष्टा न स्यान्मुनेः होमादिप्रयोजनञ्चाविहतम्भवेत् ॥ ५५ ॥

( भावार्थ ) अपने शरीर को देकर इस नन्दिनी की आप से रक्षा करना हमें उचित है ऐसा करने से आपका व्रतान्त भोजन ( पारण ) और मुनि वसिष्ठका कर्म ये दोनों ही लुप्त नहीं हो सकेगा ॥ ५५ ॥

भवानपीदं परवानवैति महान् हि यत्नस्तव देवदारौ ।
स्थातुं नियोक्तुर्नहि शक्यमग्रे विनाश्य रक्ष्यं स्वयमक्षतेन ॥ ५६ ॥

( अन्वयः ) हि, देवदारौ, तव महान् यत्नः ( अतः ) परवान् भवान्, अपि, इदम्, अवैति, ( यत् ) रक्ष्यं, विनाश्य, स्वयं, अक्षतेन ( सता ) नियोक्तुः, अग्रे, स्थातुं, न, हि शक्यम् ॥ ५६ ॥

( टीका ) हि = यस्मात्कारणात्, देवदारौ = देवदारुरक्षणे, तव = ते महान् अधिकः, यत्नः = प्रयत्नः, 'अस्मात्कारणात्' परवान् = पराधीनः, " परतन्त्रः पराधीनः परवान्नाथवानपि " इत्यमरः, भवानपि, इदं = वक्ष्यमाणं वचनम्, अवैति = जानाति, 'यत्' रक्ष्यं = रक्षणीयं वस्तु, विनाश्य = विनाशं प्रापय्य, स्वयम्, अक्षतेन = अव्रणेन 'सता' नियोक्तुः = नियोजकस्य स्वामिनः, अग्रे = सम्मुखे, स्थातुं = स्थितिं कर्तुं, नहि शक्यम् = पारणीयं नहि ॥ ५६ ॥

( समासः ) रक्षितुं योग्यं, रक्ष्यं । नियोजयतीति नियोक्ता तस्य॥५१॥

( वाच्यपरिवर्तनम् ) महता यत्नेन " भूयते " परवता भवता अवेयते, स्वयं अक्षतः ( कश्चिदपि न ) स्थातुं शक्नोति ॥ ५६ ॥

( सरलार्थः ) किमन्यत्, स्वाम्यधीनो भवानपीदं जानात्येव, अतएव भवतोऽपि अस्य तरोः रक्षणे महान्प्रयत्नः प्रतिभाति, स्वयमक्षतदेहेन सता रक्ष्यं वस्तु विनाश्य स्वामिनोऽग्रेऽवस्थानमतीवानुचितमिति ॥ ५६ ॥

( भावार्थ ) सेवक को अपने, शरीरकी रक्षाकर मालिककी वस्तु, नष्ट कर मालिकके सामने उपस्थित होना अत्यन्त अनुचित है ॥५६॥

किमप्यहिंस्यस्तव चेन्मतोऽहं यशःशरीरे भव मे दयालुः ।
एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु ॥५७॥

( अन्वयः ) किम्, अपि, अहं, चेत्; तव, अहिंस्यः, मतः, ( अस्मि ), ( तर्हि ) ( त्वं ) मे, यशःशरीरे, दयालुः, भव, ( कुतः ) एकान्तविध्वंसिषु, भौतिकेषु पिण्डेषु, मद्विधानाम्, अनास्था, खलु, ॥

( टीका ) किमपि = किंवा, अहं चेत् = यदि, तव = ते, अहिंस्यः अवध्यः, मतः = ईप्सितः 'अस्मि' तर्हि, त्वं, मे = मम, यशः शरीरे कीर्तिरूपवपुषि, दयालुः = कृपालुः, भव, 'यतः' एकान्तविध्वंसिषु = अवश्यविनाशिषु, भौतिकेषु = पृथिव्यादिपञ्चभूतविकारेषु, पिण्डेषु = शरीरेषु, मद्विधानाम् = मादृशानाम्, अनास्था = अनपेक्षा (भवति) खलु ॥ ५७ ॥

( समासः ) हिंसितुं योग्यो हिंस्यः, न हिंस्योऽहिंस्यः । यशः एव शरीरं यशःशरीरं, तस्मिन् । एकान्तं विध्वंसिन एकान्तविध्वंसिनस्तेषु ॥ ५७ ॥

( वाच्यपरिवर्तनम् ) किम् अपि मया चेत् तव अहिंस्येन मतेन " भूयते " " त्वया " मे यशःशरीरे दयालुना भूयताम्,............ अनास्थया भूयते ॥ ५७ ॥

( सरलार्थः ) यदिनाम केनाऽपि हेतुना तवाहं दयनीयः स्यां तदा त्वं मे कीर्तिदेहे दयालुर्भूत्वा देहभक्षणेन, मे यशो रक्ष ॥ ५७ ॥

( भावार्थ ) यदि तू मुझे अवध्य समझता हो तो इस शरीर पर दयाकर। एक दिन इस शरीर का विनाश होनेही वाला है ॥ ५७ ॥

संबन्धमाभाषणपूर्वमाहुर्वृत्तः स नौ संगतयोर्वनान्ते।
तद्भूतनाथानुग नार्हसि त्वं संबन्धिनो मे प्रणयं विहन्तुम् ॥५८॥

( अन्वयः ) ( जनाः ) आभाषणपूर्वं, संबन्धम्, आहुः, सः, ( संबन्धः ) वनान्ते, संगतयोः, नौ, ( आवयोः ) वृत्तः, तत्, ( संबन्धित्वात् ) हे भूतनाथानुग, त्वं, संबन्धिनः, मे, प्रणयं विहन्तुं, न, अर्हसि ॥ ५८ ॥

( टीका ) ( जनाः ) संबन्धं = सख्यं, आभाषणपूर्वं = आलापपूर्वकारणम्, आहुः = कथयामासुः, सः = संबन्धः, वनान्ते = अरण्यमध्ये, सङ्गतयोः = मिलितयोः, नौ = आवयोः, वृत्तः = सञ्जातः, तत् = तस्मात्कारणात्, हे भूतनाथानुग ! हे शिवानुचर, त्वं, मे = मम, सम्बन्धिनः = प्रणयिनः, प्रणयं = याञ्चां, विहन्तुं नाशयितुं, नार्हसि = न योग्योऽसि ॥ ५८ ॥

( समासः ) आभाषणं पूर्वं यस्मात् सः तं। वनस्य अन्तो वनान्तस्तस्मिन्। भूतनाथमनुगच्छतीति भूतनाथानुगस्तत्सम्बुद्धौ ॥ ५८ ॥

( वाच्यपरिवर्तनम् ) आभाषणपूर्वः सम्बन्धः जनैः उच्यते तेन ......वृत्तम्, तत् हे भूतनाथानुग ! त्वया मे सम्बन्धिनः प्रणयः विहन्तुं न अर्ह्यते ॥ ५८ ॥

( सरलार्थः ) आलापमात्रेण सख्यं संजायते तथाविधं सख्यम् आवयोर्वनमध्ये निष्पन्नम् अतः हे ईश्वरकिङ्कर ! मित्रस्य मे प्रार्थनां विहन्तुं त्वं न योग्योऽसि ॥ ५८ ॥

( भावार्थ ) सम्बन्ध बातचीत के द्वारा ही हुआ करता है, वह हम दोनों का बन में हो चुका है इसलिए आपको मुझ सम्बन्धी की प्रार्थना उल्लंघन करना उचित नहीं है ॥ ५८ ॥

तथेति गामुक्तवते दिलीपः सद्यः प्रतिष्टम्भविमुक्तबाहुः ।
सन्यस्तशस्त्रो हरये स्वदेहमुपानयत्पिण्डमिवामिषस्य ॥ ५९ ॥

( अन्वयः ) सद्यः, प्रतिष्टम्भविमुक्तबाहुः, सः, दिलीपः, तथा, इति, गाम्, उक्तवते, हरये, न्यस्तशस्त्रः, ( सन् ) आमिषस्य, पिण्डम्, इव, स्वदेहम्, उपानयत् ॥ ५९ ॥

( टीका ) सद्यः=सपदि, प्रतिष्टम्भविमुक्तबाहुः=प्रतिबन्धविमुक्तभुजः, " भुजबाहू प्रवेष्टो दोः " इत्यमरः, सः=पूर्वोक्तः, दिलीपः=दिलीपनामको भूमिपः, तथा इति=तथास्तु इति, " अङ्गीकारसूचिकां " गां=वाणीं, उक्तवते=कथितवते, हरये =सिंहाय, न्यस्तशस्त्रः=विमुक्तायुधः, 'सन्' " आयुधं तु प्रहरणं शस्त्रमस्त्रमथास्त्रियौ " इत्यमरः, आमिषस्य=मांसस्य, "पिशितं तरसं मांसं पललं क्रव्यमामिषम्" इत्यमरः, पिण्डमिव =ग्रासमिव, स्वदेहं=निजशरीरम्, उपानयत्=समर्पितवान् ॥ ५९ ॥

( समासः ) प्रतिष्टम्भात् विमुक्तो बाहुर्यस्य सः । न्यस्तानि शस्त्राणि येन सः । स्वस्यात्मनो देहः स्वदेहस्तम् ॥ ५९ ॥

( वाच्यपरिवर्तनम् ) सद्यः प्रतिष्टम्भविमुक्तबाहुना तेन दिलीपेन " तथा इति " गाम् उक्तवते हरये न्यस्तशस्त्रेण " सता " आमिषस्य पिण्डः इव स्वदेहः उपानीयत ॥ ५९ ॥

( सरलार्थः ) तथास्त्विति कथितवते सिंहाय दिलीपः त्यक्तायुधः सन् निजदेहं मांसपिण्डमिव तस्मै समर्पितवान् ॥ ५९ ॥

( भावार्थ ) ऐसाही हो इस प्रकार वचन कहते हुए सिंहके निमित्त बन्धनसे खुली बांहवाले और शस्त्र त्यागे हुए राजा दिलीपने अपना शरीर उसी समय मांसके पिण्डकी समान अर्पण कर दिया ॥ ५९ ॥

तस्मिन्क्षणे पालयितुः प्रजानामुत्पश्यतः सिंहनिपातमुग्रम् ।
अवाङ्मुखस्योपरि पुष्पवृष्टिः पपात विद्याधरहस्तमुक्ता ॥ ६० ॥

( अन्वयः ) तस्मिन्, क्षणे, उग्रं, सिंहनिपातम्, उत्पश्यतः, अवाङ्मुखस्य, प्रजानाम्, पालयितुः, उपरि, विद्याधरहस्तमुक्ता पुष्पवृष्टिः, पपात ॥ ६० ॥

( टीका ) तस्मिन् क्षणे = तस्मिन्नवसरे, " सिंहपतनाऽवसरे " उग्रं = भयंकरं, सिंहनिपातं = केसरिपतनम्, उत्पश्यतः = उत्प्रेक्षमाणस्य, अवाङ्मुखस्य = अधोमुखस्य, " स्यादवाङप्यधोमुखः " इत्यमरः, प्रजानां = जनानां, पालयितुः = संरक्षकस्य राज्ञो दिलीपस्य, उपरि = ऊर्ध्वं, विद्याधरहस्तमुक्ता = विद्याधरकरत्यक्ता, पुष्पवृष्टिः = कुसुमवृष्टिः, पपात = पतिता ॥ ६० ॥

( समासः ) सिंहस्य निपातः सिंहनिपातस्तम्। उत्पश्यतीत्युत्पश्यन् तस्य। अवाङ् मुखं यस्य सः तस्य। प्रकर्षेण जायन्त इति प्रजास्तासां। विद्याधराणां हस्तैर्मुक्ता। पुष्पाणां वृष्टिः पुष्पवृष्टिः ॥६०॥

( वाच्यपरिवर्तनम् ) विद्याधरहस्तमुक्तया पुष्पवृष्ट्या पेते ॥ ६० ॥

( सरलार्थः ) तत्र सिंहपतनाऽवसरे उत्कटं सिंहपतनं तर्कयतो दिलीपस्य उपरि देवयोनिविशेषविमुक्ता पुष्पवृष्टिरपतत् ॥ ६० ॥

( भावार्थ ) सिंहके झपटने की प्रतीक्षा करते हुए सिर झुकाए दिलीप के ऊपर उसी समय विद्याधरों ने फूलोंकी वर्षाकी ॥ ६० ॥

उत्तिष्ठ वत्सेत्यमृतायमानं वचो निशम्योत्थितमुत्थितः सन्।
ददर्श राजा जननीमिव स्वां गामग्रतः प्रस्रविणीं न सिंहम् ॥६१॥

( अन्वयः ) ( हे ) वत्स ! उत्तिष्ठ, इति, अमृतायमानम्, उत्थितं वचः, निशम्य, उत्थितः, ( सन् ) राजा, अग्रतः, स्वां, जननीम्, इव प्रस्रविणीं, गां, ददर्श, सिंहं न ( ददर्श ) ॥ ६१ ॥

( टीका ) हे वत्स ! = हे पुत्र, उत्तिष्ठ = उत्थितो भव, इति = एवंभूतम्, अमृततुल्यम् उत्थितम् = उच्चरितं, वचः = वचनं, "वचनं वचः" इत्यमरः, निशम्य = आकर्ण्य, उत्थितः 'सन्' = ऊर्द्ध्वः सन्, उत्तिष्ठमान इतिवा, राजा = दिलीपः, अग्रतः = अग्रे, स्वां = स्वीयां, जननीमिव = मातरमिव प्रस्रविणीं = क्षीरस्राविणीं, गां = धेनुं, ददर्श = अवलोकितवान्, सिंहं = केसरिणं, न ददर्श ॥ ६१ ॥

( समासः ) अमृतमिवाचरतीति अमृतायमानं। प्रकृष्टः स्रवः प्रस्रवः प्रस्रवोऽस्त्यस्याः सा तां ॥ ६१ ॥

( वाच्यपरिवर्तनम् ) हे वत्स !.........उत्थितेन " सता " राज्ञा स्वा जननी इव प्रस्रविणी गौः ददृशे, सिंहः न ॥ ६१ ॥

( सरलार्थः ) राजा दिलीपः, हे पुत्र ? उत्तिष्ठ इत्यमृतरसपूरित-वचनमाकर्ण्य उत्थाय यावत् पश्यति तावदग्रे स्वकीयां मातरमिव कामदुघां नन्दिनीं ददर्श सिंहं न ददर्श ॥ ६१ ॥

( भावार्थ ) हे पुत्र उठो ऐसा अमृतमय वचन सुनकर उठतेहीं राजा दिलीपने नन्दिनी को देखा सिंहको नहीं देखा ॥ ६१ ॥

तं विस्मितं धेनुरुवाच साधो मायां मयोद्भाव्य परीक्षितोऽसि ।
ऋषिप्रभावान्मयि नान्तकोऽपि प्रभुः प्रहर्तुं किमुतान्यहिंस्राः ॥६२ ॥

( अन्वयः ) धेनुः, विस्मितं, तम्, उवाच, साधो, मया, मायाम्, उद्भाव्य, ( त्वं ) परीक्षितः, असि, ऋषिप्रभावात्, मयि, अन्तकः, अपि, प्रहर्तुं, प्रभुः, न, ( अस्ति ) अन्यहिंस्राः, किमुत, (स्युः) ॥ ६२ ॥

( टीका ) धेनुः = नन्दिनी, विस्मितं = आश्चर्ययुक्तं, "विस्मयस्तु केसरिणोऽदर्शनात्" तं = नृपं, उवाच = उक्तवती, साधो ! मया मायां = शाम्बरीं, "कपटमित्यर्थः" ( इन्द्रजाल ) "स्यान्माया शाम्बरी, मायाकारस्तु प्रतिहारकः" इत्यमरः, उद्भाव्य = रचयित्वा, "उत्पाद्य" त्वं, परीक्षितोऽसि = कृतपरीक्षोऽसि, ऋषिप्रभावात् = वशिष्ठर्षिप्रतापात्, "स प्रभावः प्रतापश्च" इत्यमरः, मयि = ममोपरि, अन्तकोऽपि = यमोऽपि, प्रहर्तुं = प्रहारं कर्त्तुं, प्रभुः = समर्थः, नास्ति, अन्यहिंस्राः = अन्यघातुकाः सिंहादयः, किमुत ॥ ६२ ॥

( समासः ) ऋषेः प्रभावस्तस्मात् । अन्ये च ते हिंस्राश्च ॥६२॥

( वाच्यपरिवर्तनम् ) धेन्वा विस्मितः सः ऊचे, हे साधो ! अहं त्वां परीक्षितवती······अन्तकेनापि प्रभुणा न "भूयते" ।

( सरलार्थः ) स्वदेहोपरि निपतितुमुद्यतस्य सिंहस्याऽनवलोकनाद् अत्याश्चर्यान्वितं दिलीपं सा नन्दिनी उवाच यत् हे साधो ! मया मायामुद्भाव्य कृतपरीक्षोऽसि वसिष्ठर्षिसामर्थ्यात् यमोऽपि मयि प्रहर्तुं न समर्थः अन्यहिंस्राः किं स्युः ॥ ६२ ॥

( भावार्थ ) आश्चर्य में आये हुए राजा को नन्दिनीने कहा "हे साधो ! मैंने माया रचकर तेरी परीक्षा ली है मुनिके प्रताप से मुझमें प्रहार करनेको यम भी समर्थ नहीं है फिर और हिंसकों की क्या शक्ति है कि वे आक्रमण करें ॥ ६२ ॥

भक्त्या गुरौ मय्यनुकम्पया च प्रीतास्मि ते पुत्र वरं वृणीष्व ।
न केवलानां पयसां प्रसूतिमवेहि मां कामदुघां प्रसन्नाम् ॥ ६३ ॥

( अन्वयः ) हे पुत्र ! गुरौ, भक्त्या, मयि, अनुकम्पया, च, ( अहम् ) ते, प्रीता, अस्मि, ( त्वम् ) वरं, वृणीष्व, ( त्वम् ) मां, केवलानां, पयसां, प्रसूतिं, न, अवेहि, ( किन्तु ) प्रसन्नां ( मां ) कामदुघां, ( अवेहि ) ॥ ६३ ॥

( टीका ) हे पुत्र = सुत ? गुरौ = गुरुविषये भक्त्या = अनुरागेण, मयि = मद्विषये, अनुकम्पया = कृपया, च, "कृपा दयानुकम्पा स्यात्" इत्यमरः, अहं, ते = तवोपरि, प्रीतास्मि = प्रसन्नाऽस्मि, त्वं, वरं = वरणीयमर्थं, "पुत्ररूपमित्यर्थः" वृणीष्व = प्रार्थयस्व, "गो पयोदाने सामर्थ्यं न तु वरदान इत्याशङ्क्याह" मां, केवलानां, पयसां = दुग्धानां, प्रसूतिं = उत्पादयित्रीं, नावेहि = न जानीहि, किन्तु, प्रसन्नां = सन्तुष्टां, मां, कामदुघां = मनोरथपूरयित्रीम् अवेहीति शेषः ॥ ६३ ॥

( समासः ) कामान् दोग्धीति कामदुघा तां कामदुघां ॥ ६३ ॥

( वाच्यपरिवर्तनम् ) हे पुत्र !······प्रीतया " भूयते " त्वया वरः व्रियतां "त्वया" अहं केवलानां पयसां प्रसूतिः न अवेयै किन्तु प्रसन्ना अहं कामदुघा अवेयै ॥ ६३ ॥

( सरलार्थः ) पुत्र ! गुरौ ( वशिष्ठर्षिविषये ) भक्त्या, मयि दयया च तेऽहं प्रीताऽस्मि अतस्त्वं वरणीयमर्थं वृणीष्व, वरं देवा एव ददति नतु गावस्तेषां केवलं पयोदान एव सामर्थ्यमिति न आशङ्कनीयम् अहं सन्तुष्टा सती भक्तानां सकलमपि मनोरथं पूरयितुं शक्नोमि ॥ ६३ ॥

( भावार्थ, ) गुरुमें भक्ति देखकर और मुझमें दया करनेसे मैं तुझपर प्रसन्न हूँ, इसलिये हे पुत्र ! तू वर मांग, मुझे निरी दूध देनेवाली न समझ किन्तु प्रसन्न होनेपर मैं मनोरथको भी पूरा करनेवाली हूँ ॥ ६३ ॥

ततः समानीय स मानितार्थी हस्तौ स्वहस्तार्जितवीरशब्दः ।
वंशस्य कर्तारमनन्तकीर्तिं सुदक्षिणायां तनयं ययाचे ॥ ६४ ॥

( अन्वयः ) ततः, मानितार्थी, स्वहस्तार्जितवीरशब्दः, सः, ( राजा ) हस्तौ, समानीय, वंशस्य, कर्तारम्, अनन्तकीर्तिं, तनयं, सुदक्षिणायां, ययाचे ॥ ६४ ॥

( टीका ) ततः = तदनन्तरं, मानितार्थी = सम्मानितयाचकः, स्वहस्तार्जितवीरशब्दः = निजभुजबलोपार्जितवीरख्यातिः, सः = दिलीपः हस्तौ = करौ, "बलिहस्तांशवः कराः" इत्यमरः, समानीय = सन्धाय, "अञ्जलिं बद्ध्वा" वंशस्य = अन्ववायस्य, "वंशोऽन्ववायः सन्तानः" इत्यमरः, † कर्तारम् = प्रवर्तयितारम् अनन्तकीर्तिं = विपुलयशसं, तनयं = पुत्रं, सुदक्षिणायां = सुदक्षिणाभिधायां निजाङ्गनायां, ययाचे = प्रार्थयामास ॥ ६४ ॥

( समासः ) मानिता अर्थिनो येन सः । स्वहस्ताभ्याम् अर्जितो वीर इति शब्दो येन सः । अनन्ता कीर्तिर्यस्य सः तमनन्तकीर्तिम् ॥६४॥

( वाच्यपरिवर्तनम् ) ततः मानितार्थिना स्वहस्तार्जितवीरशब्देन तेन हस्तौ समानीय वंशस्य कर्ता अनन्तकीर्तिः तनयः सुदक्षिणायां ययाचे ॥६४ ॥

( सरलार्थः ) ततः पराक्रमाल्लब्धवीरशब्दो दिलीपोऽञ्जलिं बद्ध्वा कुलप्रवर्तयितारमनन्तकीर्तिशालिनं सुतं तस्या गर्भे प्रार्थितवान् ॥६४॥

( भावार्थ ) तब राजा दिलीप ने वंश चलाने वाला अनन्तकीर्ति पुत्र मांगा ॥ ६४ ॥

संतानकामाय तथेति कामं राज्ञे प्रतिश्रुत्य पयस्विनी सा ।
दुग्ध्वा पयः पत्रपुटे मदीयं पुत्रोपभुङ्क्ष्वेति तमादिदेश ॥ ६५ ॥

( अन्वयः ) सा, पयस्विनी, ( गौः ) संतानकामाय, राज्ञे, कामं, तथा, इति, प्रतिश्रुत्य, हे पुत्र ! मदीयं, पयः, पत्रपुटे, दुग्ध्वा, ( त्वम् ) उपभुङ्क्ष्व, इति, तं, ( दिलीपम् ) आदिदेश ॥ ६५ ॥

( टीका ) सा = पूर्वोक्ता, पयस्विनी = नन्दिनी, सन्तानकामाय = पुत्रकामाय, राज्ञे = भूपाय दिलीपाय, कामं = वरं, तथा इति = तथास्त्विति, प्रतिश्रुत्य = प्रतिज्ञाय, हे पुत्र ! मदीयं = मत्सम्बन्धि, पयः = दुग्धं, पत्रपुटे = पलाशनिर्मितपात्रे, दुग्ध्वा, उपभुङ्क्ष्व = पिब, इति = एवं, तं = दिलीपं, आदिदेश = आज्ञापयामास ॥ ६५ ॥

( समासः ) पयो विद्यते यस्याः सा । सन्तानङ्कामयत इति सन्तानकामस्तस्मै । काम्यत इति कामस्तं । मम इदं मदीयम् ॥६५॥

† येन नाम्ना दिलीपस्य वंशः प्रचलिष्यति । अतएव दिलीपपुत्रस्य रघोः नाम्ना सकल एव सूर्यवंश इति जगति विश्रूयते, काव्यञ्च इदं रघुवंशम् इत्युच्यते ।

( वाच्यपरिवर्तनम् ) तया पयस्विन्या " त्वया उपभुज्यताम् " इति सः आदिदिशे ॥ ६५ ॥

( सरलार्थः ) सा नन्दिनी राज्ञे दिलीपाय तथास्त्विति प्रतिश्रुत्य हे पुत्र ! मदीयं पयः पलाशनिर्मितपात्रे दुग्ध्वा पिबेत्यादिदेश ॥ ६५ ॥

( भावार्थ ) पुत्र को चाहने वाले राजा दिलीप को " वरदान " देकर " हे पुत्र मेरे दूधको पत्तेके दोने में दुहकर पीलो " ऐसी आज्ञा उस नन्दिनी ने उसको दी ॥ ६५ ॥

वत्सस्य होमार्थविधेश्च शेषमृषेरनुज्ञामधिगम्य मातः ।
औधस्यमिच्छामि तवोपभोक्तुं षष्ठांशमुर्व्या इव रक्षितायाः ॥६६॥

( अन्वयः ) मातः, वत्सस्य होमार्थविधेः, च, शेषम्, तव, औधस्यम्, ऋषेः, अनुज्ञाम्, अधिगम्य, रक्षितायाः, उर्व्याः, षष्ठांशम्, इव, उपभोक्तुम्, इच्छामि ॥ ६६ ॥

( टीका ) हे मातः, वत्सस्य = वत्सपानस्य, होमार्थविधेः = अग्निहोत्रानुष्ठानस्य, च, शेषम् = अवशिष्टं, तव = ते, औधस्यं, क्षीरं, " दुग्धमिति यावत् " रक्षितायाः = परिपालितायाः, उर्व्याः = वसुन्धरायाः, षष्ठांशं = षष्ठभागम्, इव = यथा, " राजा हि फलमाप्नोति रक्षितायाः क्षितेरपि " इति मनुः, ऋषेः = वशिष्ठस्य, अनुज्ञाम् = आज्ञाम्, " आदेशमिति यावत् " अधिगम्य = प्राप्य, उपभोक्तुं = पातुं, इच्छामि = वाञ्छामि ॥ ६६ ॥

( समासः ) होम एवार्थो होमार्थस्तस्य विधिस्तस्य । ऊधसि भवमौधस्यम् ॥ ६६ ॥

( वाच्यपरिवर्तनम् ) हे मातः " मया "...... इष्यते ॥ ६६ ॥

( सरलार्थः ) दिलीपः कथयतिस्म, हे मातः वत्सपीतादऽवशिष्टं, अग्निहोत्रावशिष्टञ्च ते क्षीरं पृथिव्याः षष्ठभागरूपं करमिव गुरोर्वसिष्ठर्षेराज्ञामधिगम्य पातुमभिलषामि ॥ ६६ ॥

( भावार्थ ) हे मा ! मैं रक्षा किये हुए पृथ्वी के छठे भाग के समान बछड़े से और हवनक्रिया से बचे तेरे दूधको ऋषिकी आज्ञा लेकर ग्रहण करना चाहता हूँ ॥ ६६ ॥

इत्थं क्षितीशेन वशिष्ठधेनुर्विज्ञापिता प्रीततरा बभूव ।
तदन्विता हैमवताच्च कुक्षेः प्रत्याययावाश्रममश्रमेण ॥ ॥ ६७ ॥

( अन्वयः ) क्षितीशेन इत्थं' विज्ञापिता, वसिष्ठधेनुः, प्रीततरा बभूव, तदन्विता, (सती) हैमवतात्, कुक्षेः, अश्रमेण, आश्रमं, च,प्रत्याययौ ६७

( टीका ) क्षितीशेन = भूमिपालेन, इत्थं, = अनेनोक्तप्रकारेण विज्ञापिता = निवेदिता वसिष्ठधेनुः = वसिष्ठनन्दिनी प्रीततरा = अति सन्तुष्टा, बभूव = जाता, तदन्विता = दिलीपयुक्ता, ' सती ' हैमवतात् = हिमवत्सम्बन्धिनः, कुक्षेः = कन्दरात्, अश्रमेण = विना प्रयासेन आश्रमं = निवासस्थानं, च प्रत्याययौ = आजगाम ॥ ६७ ॥

( समास; ) क्षितेरीशः क्षितीशस्तेन । वसिष्ठस्य धेनुरिति । तेन अन्विता । हिमवतोऽयं हैमवतस्तस्मात् । न श्रमोऽश्रमस्तेन ॥ ६७ ॥

( वाच्यपरिवर्तनम् ) क्षितीशेन इत्थं विज्ञापितया वसिष्ठधेन्वा प्रीततरया बभूवे, तदन्वितया हैमवतात् कुक्षेः अश्रमेण आश्रमः प्रत्याययै ॥ ६७ ॥

( सरलार्थः ) एवं दिलीपप्रार्थिता नन्दिनी पूर्वापेक्षयाधिकतरं सन्तुष्टा बभूव पश्चाच्च तेनाऽनुगम्यमाना नगेन्द्रगव्हरात्सुखेन निजाश्रममाजगाम ॥ ६७ ॥

( भावार्थ ) इस प्रकार राजा की प्रार्थना से अति प्रसन्न मुनि वसिष्ठ की धेनु दिलीप के साथ ही हिमालय की कन्दरा से आश्रम के प्रति लौटी ॥ ६७ ॥

तस्याः प्रसन्नेन्दुमुखः प्रसादं गुरुर्नृपाणां गुरवे निवेद्य ।
प्रहर्षचिन्हानुमितं प्रियायै शशंस वाचा पुनरुक्तयेव ॥ ६८ ॥

( अन्वयः ) प्रसन्नेन्दुमुखः, नृपाणां, गुरुः, ( दिलीपः ), प्रहर्षचिन्हानुमितं, तस्याः, प्रसादं, पुनरुक्तया, इव, वाचा, गुरवे, निवेद्य, प्रियायै, शशंस ॥ ६८ ॥

( टीका ) प्रसन्नेन्दुमुखः = निर्मलचन्द्राननः, नृपाणां = राज्ञां, गुरुः = श्रेष्ठो दिलीपः, प्रहर्षचिन्हानुमितं = आनन्दलक्ष्मलक्षितं, तस्याः = नन्दिन्याः, प्रसादं = प्रसन्नतां अनुग्रहं वा, पुनरुक्तयेव = भूयः कथितयेव, वाचा = वाण्या, गुरवे = पूज्याय वशिष्ठाय, निवेद्य = विज्ञाप्य, प्रियायै = सुदक्षिणायै, शशंस = कथयामास ॥ ६८ ॥

( समासः ) प्रसन्नश्चासाविन्दुश्च प्रसन्नेन्दुः, स इव मुखं यस्य सः। प्रहर्षस्य चिन्हानि प्रहर्षचिन्हानि तैरनुमितं। प्रीणातीति प्रिया तस्यै ॥ ६८ ॥

( वाच्यपरिवर्तनम् ) प्रसन्नेन्दुमुखेन नृपाणां गुरुणा............ शशंसे ॥ ६८ ॥

( सरलार्थः ) धराधिपानां गुरुर्दिलीपः यदा वसिष्ठसमीपमागतस्तदा धेनोरनुग्रहस्वरूपो वरस्तेन प्रागेव ज्ञात आसीत्। तथापि राजा गुरवे विज्ञाप्य सुदक्षिणायै इतिवृत्तं कथितवान् ॥ ६८ ॥

( भावार्थ ) राजा दिलीप ने हर्ष के चिन्हों से अनुमान होने वाली उसकी प्रसन्नता गुरु वशिष्ठ को निवेदन कर अपनी प्रिया से कही ॥ ६८ ॥

स नन्दिनीस्तन्यमनिन्दितात्मा सद्वत्सलो वत्सहुतावशेषम्।
पपौ वसिष्ठेन कृताभ्यनुज्ञः शुभ्रं यशो मूर्तमिवातितृष्णः ॥ ६९ ॥

( अन्वयः ) अनिन्दितात्मा, सद्वत्सलः, सः ( भूपतिः ), वसिष्ठेन, कृताभ्यनुज्ञः, अतितृष्णः ( इव ) वत्सहुतावशेषम्, नन्दिनीस्तन्यं, मूर्तं, शुभ्रं, यशः, इव, पपौ ॥ ६९ ॥

( टीका ) अनिन्दितात्मा = अगर्हितात्मा अतिपरिपूतस्वभाव इत्यर्थः, सद्वत्सलः = साधुप्रेमी, सः = भूपतिः, वसिष्ठेन = गुरुणा, कृताभ्यनुज्ञः = विहिताज्ञः, अतितृष्ण इव = अतिपिपास इव, " तृष्णे स्पृहापिपासे द्वे " इत्यमरः, वत्सहुतावशेषं = वत्सपानहवनावशिष्टं, नन्दिनीस्तन्यं = धेनुक्षीरं, मूर्तं = मूर्तिमत, शुभ्रं = धवलं, यश इव = कीर्तिरिव, पपौ = पीतवान् ॥ ६९ ॥

( समासः ) न निन्दितोऽनिन्दितः, अनिन्दितः दोषस्पर्शशून्य आत्मा यस्य सः अनिन्दितात्मा। सत्सु वत्सलः सद्वत्सलः। कृता अभ्यनुज्ञा येन सः। वत्सश्च हुतश्च वत्सहुतौ, तयोः अवशेषं वत्सहुतावशेषम्। स्तने भवं स्तन्यं, नन्दिन्याः स्तन्यं नन्दिनीस्तन्यम्। अतिशयिता तृष्णा = आस्था यस्य सः ॥ ६९ ॥

( वाच्यपरिवर्तनम् ) अनिन्दितात्मना सद्वत्सलेन तेन वशिष्ठेन कृताभ्यनुज्ञेन अतितृष्णेन " इव "..........पपे ॥ ६९ ॥

( सरलार्थः ) दिलीपः वसिष्ठस्यादेशम्प्राप्य हवनस्य वत्सपीतस्य चावशिष्टं मूर्तिमद्धवलं यश इव धेनोर्दुग्धं सतृष्णः सन् पपौ ॥ ६९ ॥

( भावार्थ ) राजा दिलीप ने गुरु वशिष्ठ की आज्ञा ग्रहण कर बछड़े के पीने से और हवन से बचे हुए नन्दिनी के दूध को मूर्तिमान उज्ज्वल यश के समान पीया ॥ ६९ ॥

प्रातर्यथोक्तव्रतपारणान्ते प्रास्थानिकं स्वस्त्ययनं प्रयुज्य ।
तौ दम्पती स्वां प्रति राजधानीं प्रस्थापयामास वशी वसिष्ठः ॥७०॥

( अन्वयः ) वशी, वसिष्ठः, प्रातः, यथोक्तव्रतपारणान्ते, प्रास्थानिकं, स्वस्त्ययनं, प्रयुज्य, तौ, दम्पती, स्वां, राजधानीं, प्रति, प्रस्थापयामास ॥ ७० ॥

( टीका ) वशी=संयमी, " जितेन्द्रियः " वसिष्ठः=वसिष्ठर्षिः, प्रातः=प्रभाते, यथोक्तव्रतपारणान्ते=पूर्वोक्तगोसेवारूपव्रतान्त-भोजनान्ते, प्रास्थानिकं=प्रस्थानकालोचितं, स्वस्त्ययनं=आशीर्वचन, " मङ्गलाशिषं " प्रयुज्य=विधाय, तौ, दम्पती=सुदक्षिणादिलीपौ, स्वां=स्वीयां, राजधानीम्प्रति=अयोध्याम्प्रति, प्रस्थापयामास= संप्रेषयामास ॥ ७० ॥

( समासः ) यथोक्तं च तत् व्रतं च यथोक्तव्रतं तस्य पारणा यथोक्तव्रतपारणा, तस्य अन्तस्तस्मिन् । प्रस्थाने भवं प्रास्थानिकम् । ईयते=प्राप्यते ऽनेनेत्ययनं, स्वस्ति=शुभास्यायनमिति स्वस्त्ययनम् । जायाच पतिश्च दम्पती । धीयन्तेऽस्यामिती धानी, राज्ञां धानी राजधानी ताम् ॥ ७० ॥

( वाच्यपरिवर्तनम् ) वशिना वसिष्ठेन प्रातः.........प्रस्थापयाञ्चक्राते ॥ ७० ॥

( सरलार्थः ) जितेन्द्रियो वसिष्ठर्षिः प्रभाते पूर्वोक्तगोसेवारूप-व्रतपारणान्ते प्रस्थानकालोचितम्मङ्गलाशीर्वचनं दत्त्वा सुदक्षिणा-दिलीपौ स्वां राजधानीं संप्रेषयामास ॥ ७० ॥

( भावार्थ ) जितेन्द्रिय गुरु वसिष्ठजीने प्रातःकाल विधिपूर्वक व्रत समाप्त करनेके अनन्तर यात्रा के समय मंगलमय आशीर्वाद देकर राजा और रानीको राजधानी की ओर भेजा ॥ ७० ॥

प्रदक्षिणीकृत्य हुतं हुताशमनन्तरं भर्तुररुन्धतीं च ।
धेनुं सवत्सां च नृपः प्रतस्थे सन्मङ्गलोदग्रतरप्रभावः ॥ ७१ ॥

( अन्वयः ) नृपः, हुतं, हुताशं, भर्तुः, अनन्तरम्, अरुन्धतीञ्च, सवत्सां, धेनुं च, प्रदक्षिणीकृत्य, सन्मङ्गलोदग्रतरप्रभावः, सन् प्रतस्थे ॥ ७१ ॥

( टीका ) नृपः=राजा दिलीपः, हुतं="प्रणीतं" हुताशम्=अग्निं, भर्तुः=स्वामिनो मुनेः, अनन्तरम्, अरुन्धतीञ्च=गुरुपत्नीञ्च, सवत्सां=वत्ससहितां, धेनुञ्च=नन्दिनीञ्च, प्रदक्षिणीकृत्य=परिक्रम्य, सन्मङ्गलोदग्रतरप्रभावः=उत्तममङ्गलाचारातिप्रवर्द्धमानतेजाः 'सन्' प्रतस्थे=प्रस्थितः ॥ ७१ ॥

( समासः ) हुतमश्नातीति हुताशस्तं। भरतीति भर्ता तस्य। वत्सेन सहिता सवत्सा तां। प्रगतो दक्षिणं प्रदक्षिणम्, अप्रदक्षिणं प्रदक्षिणं सम्पद्यमानं कृत्वेति प्रदक्षिणीकृत्य। सच्चासौ मंगलश्च सन्मङ्गलं तेन उदग्रतरः प्रभावो यस्य सः ॥ ७१ ॥

( वाच्यपरिवर्तनम् ) नृपेण.............सन्मङ्गलोदग्रतरप्रभावेण "सता" प्रतस्थे ॥ ७१ ॥

( सरलार्थः ) दिलीपः तं हुताग्निं गुरुवसिष्ठर्षिपरिक्रमानन्तरं मुनिपत्नीमरुन्धतीं तथा वत्ससहितां गाञ्च प्रदक्षिणीकृत्य स्वस्तिवाचनादिमङ्गलाचारैः समधिकऽप्रभावः सन्निजराजधानीञ्जगाम ॥७१॥

( भावार्थ ) राजा दिलीप आहुति दिये हुए अग्नि, गुरुवसिष्ठ, तथा उनकी पत्नी अरुन्धती और सवत्सा नन्दिनी की प्रदक्षिणा कर प्रस्थान करता हुआ ॥ ७१ ॥

श्रोत्राभिरामध्वनिना रथेन स धर्मपत्नीसहितः सहिष्णुः।
ययावनुद्घातसुखेन मार्गं स्वेनेव पूर्णेन मनोरथेन ॥ ७२ ॥

( अन्वयः ) धर्मपत्नीसहितः, सहिष्णुः, सः, ( भूमिपः ) श्रोत्राभिरामध्वनिना, अनुद्घातसुखेन, रथेन, स्वेन, पूर्णेन, मनोरथेन, इव, मार्गं, ययौ ॥ ७२ ॥

( टीका ) धर्मपत्नीसहितः=सुदक्षिणासमन्वितः, सहिष्णुः=सहनशीलः, सः=राजादिलीपः, श्रोत्राभिरामध्वनिना=श्रवणाह्लादकरशब्देन, अनुद्घातसुखेन=पाषाणकण्टकादिप्रतिघातरहितत्वात् सुखकरेण, रथेन=स्यन्दनेन स्वेन=स्वकीयेन, पूर्णेन=सिद्धेन, मनोरथेन इव=अभीप्सितेन इव, मार्गम्,=अयोध्यापुरपथं, ययौ=यातः ॥ ७२ ॥

( समासः ) धर्मपत्न्या सहितः । श्रोत्रयोरभिरामः ध्वनिर्यस्य सः तेन । अनुद्धातः अत एव सुखयतीति सुखस्तेन ॥ ७२ ॥

( वाच्यपरिवर्तनम् ) धर्मपत्नीसहितेन सहिष्णुना तेन............ मार्गः यये ॥ ७२ ॥

( सरलार्थः ) जायासहितो दिलीपः निम्नोन्नतपाषाणादिप्रतिघातशून्येनानन्दजनकेन रथेन स्वकीयेन सफलमनोरथेनेव मार्गमलङ्घयत् ॥

( भावार्थ ) व्रतादिदुःखोंको सहन करने वाला राजा दिलीप रानी सुदक्षिणाके सहित रथपर पूर्ण मनोरथ प्राप्तकिये हुए की तरह चला ॥ ७२ ॥

तमाहितौत्सुक्यमदर्शनेन प्रजाः प्रजार्थव्रतकर्शिताङ्गम् ।
नेत्रैः पपुस्तृप्तिमनाप्नुवद्भिर्नवोदयं नाथमिवौषधीनाम् ॥ ७३ ॥

( अन्वयः ) प्रजाः, अदर्शनेन आहितौत्सुक्यं, प्रजार्थव्रतकर्शिताङ्गं, तं, तृप्तिम्, अनाप्नुवद्भिः, नेत्रैः, नवोदयम्, औषधीनां, नाथम्, इव, पपुः ॥ ७३ ॥

( टीका ) प्रजाः = नागरिकाः जनाः, अदर्शनेन = प्रवासहेतुकानवलोकनेन अहितौत्सुक्यं = "दर्शनोत्कण्ठाविषयभूतं" प्रजार्थव्रतकर्शिताङ्गं = सन्तानार्थव्रतपालनेन कृशीकृतशरीरं, तं = राजानं दिलीपं, तृप्तिं = सन्तोषम्, अनाप्नुवद्भिः = अप्राप्नुवद्भिः, नेत्रैः = नयनैः, नवोदयं = नवीनाभ्युदयं, ओषधीनां = सोमलतादीनां, नाथमिव = पतिश्चन्द्रमिव, पपुः = पीतवत्यः ॥ ७३ ॥

( समासः ) उत्सुकस्य भावः औत्सुक्यं, आहितमौत्सुक्यं येन सः तम् । प्रजार्थं व्रतं प्रजार्थव्रतं तेन, कर्षितमङ्गं यस्य सः तं । न आप्नुवन्ति तैः । नव उदयो यस्य सः तम् ॥ ७३ ॥

( सरलार्थः ) प्रवासहेतुकबहुकालावलोकनाभावेन जनितदर्शनोत्कण्ठं, पुत्रार्थेन व्रतेन शोषितशरीरं तं दिलीपं, जनाः तृषितैर्नयनैरोषधीनां नाथं चन्द्रमिव सादरमवलोकयामासुः ॥ ७३ ॥

( भावार्थ ) चिरकाल के अनन्तर देखने के कारण उत्कण्ठा युक्त प्रजाजनोंने सन्तानके लिये व्रत करनेसे दुर्बल शरीरवाले राजा दिलीपको नवीन उदय हुए चन्द्रमाकी समान बड़े आदरसे वअलोन किया ॥ ७३ ॥

पुरन्दरश्रीः पुरमुत्पताकं प्रविश्य पौरैरभिनन्द्यमानः ।
भुजे भुजङ्गेन्द्रसमानसारे भूयः स भूमेर्धुरमाससञ्ज ॥ ७४ ॥

( अन्वयः ) पुरन्दरश्रीः, सः, पौरैः, अभिनन्द्यमानः, " सन् " उत्पताकं पुरं, प्रविश्य, भुजंगेन्द्रसमानसारे, भुजे, भूमेः, धुरं, भूयः, आससञ्ज ॥ ७४ ॥

( टीका ) पुरन्दरश्रीः = इन्द्रतुल्यलक्ष्मीकः, पौरैः = पुरनिवासिभिर्लोकैः, अभिनन्द्यमानः = संस्तूयमानः, सः = नृपः, उत्पताकम् = उड्डीनवैजयन्तीकं "पताका वैजयन्ती स्यात्" इत्यमरः, पुरं = नगरं, प्रविश्य = प्रवेशङ्कृत्वा, भुजङ्गेन्द्रसमानसारे = सर्पराजतुल्यबले, भुजे = बाहौ, भूमेः = पृथिव्याः, धुरं = भारं, भूयः = पुनः, आससञ्ज = धृतवान् ॥ ७४ ॥

( समासः ) पुराणि दारयतीति पुरन्दरस्तस्य श्रीरिव श्रीर्यस्य सः । पुरे भवाः पौरास्तैः । अभिनन्द्यतेऽसावभिनन्द्यमानः । उत् उड्डीना पताका यस्मिन् तत् । भुजाभ्यां गच्छन्तीति भुजङ्गास्तेषामिन्द्रो भुजङ्गेन्द्रस्तेन समानः सारो यस्य तस्मिन् ॥ ७४ ॥

( सरलार्थः ) इन्द्रतुल्यो दिलीपः पुरवासिभिर्जनैः प्रशस्यमानः सन् समुच्छ्रितपताकं नगरं प्रविश्य पुनः पृथिव्याः भारं धृतवान्॥७४॥

( भावार्थः ) इन्द्रके समान ऐश्वर्यवाला राजा दिलीप नगरनिवासियों से सत्कृत हो नगरमें प्रवेश कर सर्पराज के समान बलवाली भुजाओंपर फिरसे पृथ्वीका भार धारण करता हुआ ॥ ७४ ॥

मालिनी वृत्त-

अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः
सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम् ।
नरपतिकुलभूत्यै गर्भमाधत्त राज्ञी
गुरुभिरभिनिविष्टं लोकपालानुभावैः ॥ ७५ ॥

( अन्वयः ) अथ, अत्रेः, नयनसमुत्थं, ज्योतिः, द्यौः इव, वह्निनिष्ठयूतम् , ऐशम् , तेजः. सुरसरित् , इव, राज्ञी, नरपतिकुलभूत्यै, गुरुभिः, लोकपालानुभावैः, अभिनिविष्टं, गर्भम् , आधत्त ॥ ५५ ॥

( टीका ) अथ = अनन्तरं, *अत्रेः = अत्रिमुनेः, नयनसमुत्थं = नेत्रोत्पन्नं, ज्योतिः = चन्द्रमित्यर्थः, द्यौरिव = आकाशमिव, वन्हिनिष्ठ्यूतं = अग्निप्रक्षिप्तं = महेशसम्बन्धि, तेजः = स्कन्दः, सुरसरिदिव

*पिता सोमस्य भो विप्रा जज्ञेऽत्रिर्भगवानृषिः ।
ब्रह्मणो मानसात्पूर्वं प्रजासर्गं विधित्सतः ॥ १ ॥
अनुत्तरं नाम तपो येन तप्तं महत्पुरा ।
त्रीणि वर्षसहस्राणि दिव्यानीतिहि नः श्रुतम् ॥ २ ॥
ऊर्ध्वमाचक्रमे रेतस्ततः सोमत्वमीयिवत् ।
नेत्राभ्यां वारि सुस्राव दशधा द्योतयन्दिशः ॥ ३ ॥
तं गर्भं विधिना हृष्टा दश देव्यो दधुस्ततः ।
समेत्य धारयामासुर्नच ताः समशक्नुवन् ॥ ४ ॥
यदा न धारणे शक्तास्ता गर्भस्य दिशो दश ।
ततस्ताभिः सहैवाशु निपपात वसुन्धराम् ॥ ५ ॥
पतितं सोममालोक्य ब्रह्मा लोकपितामहः ।
रथमारोपयामास लोकानां हितकाम्यया ॥ ६ ॥
तस्मिन्निपतिते देवाः पुत्रेऽत्रेः सुमहात्मनः ।
तुष्टुवुर्ब्रह्मणः पुत्रास्तथाऽन्ये मुनिसत्तमाः ॥ ७ ॥
तस्य संस्तूयमानस्य तेजः सोमस्य भास्वतः ।
आप्यायनाय लोकानां भावयामास सर्वतः ॥ ८ ॥
स तेन रथमुख्येन सागरान्तां वसुन्धराम् ।
त्रिःसप्तकृत्वोऽतियशाश्चकाराभिप्रदक्षिणाम् ॥ ९ ॥
तस्य यत्स्रुवितं तेजः पृथिवी समपद्यत ।
ओषध्यस्ताः समुद्भूता याभिः सन्धार्यते जगत् ॥ १० ॥
सलब्धतेजा भगवान् संस्तवैस्तैश्च कर्मभिः ।
तपस्तेपे महाभागः पद्मानां दशतीर्दश ॥ ११ ॥
ततस्तस्मै ददौ राज्यं ब्रह्मा ब्रह्मविदां वरः ।
बीजौषधीनां विप्राणामपाञ्च मुनिसत्तमाः ॥ १२ ॥
स तत्प्राप्य महाराज्यं सोमः सौम्यवतां वरः ।
समाज ह्रे राजसूयं सहस्रशतदक्षिणम् ॥ १३ ॥
दक्षिणामददात्सोमस्त्रींल्लोकानिति नः श्रुतम् ।
तेभ्यो ब्रह्मर्षिमुख्येभ्यः सदस्येभ्यश्च भो द्विजाः ॥ १४ ॥
हिरण्यगर्भो ब्रह्माऽग्निर्भृगुश्च ऋत्विजोऽभवत् ।
सदस्योऽभूद्धरिस्तत्र मुनिभिर्बहुभिर्वृतः ॥ १५ ॥
सिनीवाली कुहूश्चैव द्युतिः पुष्टिः प्रभावसुः ।
कीर्तिर्धृतिश्च लक्ष्मीश्च नवदेव्यः सिषेविरे ॥ १६ ॥
प्राप्यावभृथमव्यग्रः सर्वदेवर्षिपूजितः ।
विरराजाधिराजेन्द्रो दशधा भासयन्दिशः ॥ १७ ॥

=मन्दाकिनीव, राज्ञी=सुदक्षिणाऽपि, नरपतिकुलभूत्यै=दिलीपकुलप्रतिष्ठायै, गुरुभिः=महद्भिः, लोकपालानुभावैः=अष्टलोकपालतेजोभिः, मात्राभिरंशैर्वा,अभिनिविष्टम्=अनुप्रविष्टं, गर्भम्, आधत्त धृतवती, "इन्द्रात्प्रभुत्वं तपनात्प्रतापं क्रोधं यमाद्वैश्रवणाच्च वित्तं आह्लादकत्वञ्च निशाधिनाथादादाय राज्ञः क्रियते शरीरम्" ॥ ७४ ॥

( समासः ) नयति घटपटादिकं प्रापयतीति नयनं तस्मात् समुत्थं । वन्हिना निष्ठ्यूतं । ईशस्येदमैशं । नराणाम्पतिरिति नरपतिस्तस्य कुलं नरपतिकुलं, तस्य भूत्यै । लोकान्पालयन्तीति लोकपालास्तेषामनुभावैरिति ॥ ७५ ॥

( सरलार्थः ) यथाऽकाशमत्रिमुनेर्नयनोत्पन्नमिन्दुं धारयति, यथा भागीरथी पावकप्रक्षिप्तं स्कन्दोत्पादकं शिवसम्बन्धि तेजः दधार, तथैव राज्ञी सुदक्षिणाऽपि दिलीपकुलप्रतिष्ठायै महद्भिरष्टलोकपालानां तेजोभिरनुप्रविष्टं गर्भं धृतवती ॥ ७५ ॥

( भावार्थ ) जैसे अत्रि मुनि के नेत्र से निकली हुई ज्योति ( चन्द्रमा ) को आकाश ने धारण किया, अग्नि से फेंके हुए रुद्र तेज ( स्वामी कार्तिक ) को गंगाजी ने धारण किया, वैसेही लोकपालों के प्रतापों से भरे हुए गर्भको रानी सुदक्षिणा ने कुलकी प्रतिष्ठा के हेतु धारण किया ॥ ७५ ॥

श्रीकालिदासकविवर्य्यविनिर्मितेऽस्मिन्
काव्ये वरे हि रघुवंशमिति प्रसिद्धे ।
नाम्ना नृपाय मुनिधेनुवरप्रदानः
सर्गः समाप्तिमगमद्रुचिरो द्वितीयः ॥ २ ॥

इति श्री स्मार्तकर्मानुष्ठाननिष्ठ-कश्यपवंशावतंस-स्वधर्मधुरन्धर-पाठकोपाव्ह जयकृष्णशर्मतनुजनुषा श्रीगौरीनाथशर्मणा विरचितया सरलार्थया सुबोधिनीसमाख्यया व्याख्यया प्राकृतभाषया च संवलितो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये नन्दिनीवरप्रदानो नाम द्वितीयः सर्गः ॥ २ ॥

# तृतीयः सर्गः ।

- वंशस्थ -

अथेप्सितं भर्तुरुपस्थितोदयं सखीजनोद्वीक्षणकौमुदीमुखम् ।
निदानमिक्ष्वाकुकुलस्य संततेः सुदक्षिणा दौहृदलक्षणं दधौ ॥१॥

( अन्वयः ) अथ, सुदक्षिणा, भर्तुः, ईप्सितम् उपस्थितोदयं, सखीजनोद्वीक्षणकौमुदीमुखम्, इक्ष्वाकुकुलस्य, सन्ततेः, निदानं, दौहृदलक्षणं, दधौ ॥ १ ॥

( टीका ) अथ = गर्भधारणानन्तरं, सुदक्षिणा = दिलीपपत्नी, भर्तुः = स्वामिनोदिलीपस्य, ईप्सितं = अभिलषितं उपस्थितोदयं = प्राप्तोदयं, सखीजनोद्वीक्षणकौमुदीमुखं, = सखीजननयनचन्द्रिकामुखं " चन्द्रिका कौमुदी ज्योत्स्ना " इति एवं "मुखमाद्ये प्रधाने च" इत्यमरः, इक्ष्वाकुकुलस्य = इक्ष्वाकुवंशस्य, सन्ततेः = सन्तानस्य, निदानम् = आदिकारणं, " निदानन्त्वादिकारणम् " इत्यमरः * दौहृदलक्षणं = गर्भचिह्नं, दधौ = धृतवती ॥ १ ॥

( समासः ) उद्वीक्ष्यत एभिरिति उद्वीक्षणानि, कौमुद्या मुखमिति कौमुदीमुखं, सख्य एव जनाः सखीजनास्तेषामुद्वीक्षणानां, कौमुदी मुखमिति सखीजनोद्वीक्षणकौमुदीमुखं, । उपस्थितः उदयो यस्य तत् । इक्ष्वाकोः कुलं इक्ष्वाकुकुलं तस्य । दुर्हृदः कर्म भावो वा दौर्हृदं, दौर्हृदस्य लक्षणमिति ॥ १ ॥

( वाच्यपरिवर्तनम् ) अथ सुदक्षिणया.......दधे ॥ १ ॥

( सरलार्थः ) गर्भधारणानन्तरं सुदक्षिणा स्वामिनो मनोभिलषितं प्राप्तकालं सखीजननयनानां चन्द्रिकाप्रादुर्भावमिवेक्ष्वाकुवंशस्य सन्तानस्यादिकारणं गर्भचिह्नं धृतवती ॥ १ ॥

---

* तद्यथाः—स्तनयोः कृष्णमुखता रोमराज्युद्गमस्तथा ।
अक्षिपक्ष्माणि चाप्यस्याः सम्मील्यन्ते विशेषतः ॥
अकामतश्छर्दयति गन्धादुद्विजते शुभात् ।
प्रसेकः सदनं चापि गर्भिण्या लिङ्गमुच्यते ॥
"तस्माच्चतुर्थे गर्भस्तु नानावस्तूनि वाञ्छति ।
तत्र द्विहृदया यत्स्यान्नारी दौहृदिनी मता ॥" इति सुश्रुतः ।

( भावार्थ ) रानी सुदक्षिणा ने इक्ष्वाकुवंश की संतति के आदि कारणगर्भचिह्न को धारण किया ॥ १ ॥

शरीरसादादसमग्रभूषणा मुखेन साऽलक्ष्यत लोध्रपाण्डुना।
तनुप्रकाशेन विचेयतारका प्रभातकल्पा शशिनेव शर्वरी ॥ २ ॥

( अन्वयः ) ( जनैः ) शरीरसादात् असमग्रभूषणा, लोध्रपाण्डुना, मुखेन, "उपलक्षिता" सा ( सुदक्षिणा ) तनुप्रकाशेन, शशिना, विचेयतारका, प्रभातकल्पा, शर्वरी, इव, अलक्ष्यत ॥ २ ॥

( टीका ) शरीरसादात् = देहकार्श्यात्, असमग्रभूषणा = परिमितालङ्कारा, "अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम्" इत्यमरः, लोध्रपाण्डुना = लोध्रकुसुमसमानपाण्डुवर्णेन, मुखेन = आननेन, "वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्" इत्यमरः, "उपलक्षिता" सा = सुदक्षिणा, तनुप्रकाशेन = क्षीणप्रभेण, शशिना = चन्द्रेण, "उपलक्षिता" विचेयतारका = मृग्यनक्षत्रा, प्रभातकल्पा = असमाप्तप्रभाता, शर्वरीव = रात्रीरिव, अलक्ष्यत = अदृश्यत ॥ २ ॥

( समासः ) शृणाति शीर्यते वा शरीरं तस्य सादस्तस्मात्। न समग्राण्यसमग्राणि, असमग्राणि भूषणानि यस्याः सा। लोध्रवत्पाण्डु लोध्रपाण्डु, तेन। प्रकाशते प्रकाशनं वा प्रकाशः, तनुः प्रकाशो यस्य सः तेन। विचेयास्तारकाः यस्यां सा। प्रभातादीषदूनेति प्रभातकल्पा ॥ २ ॥

( वाच्यपरिवर्तनम् ) जनाः "...... असमग्रभूषणां तां प्रभातकल्पां विचेयतारकां शर्वरीम् इव अलक्षयन् ॥ २ ॥

( सरलार्थः ) यथा अरुणोदयात् प्राक् रात्रिः क्षीणप्रभेण चन्द्रेण सहिता विरलनक्षत्रा च भवति तथैव पाण्डुवर्णं मुखं दधती सुदक्षिणापि शरीरकार्श्यात् परिमितभूषणा बभूव ॥ २ ॥

( सरलार्थ हिन्दी ) शरीर की दुर्बलता से थोड़े से गहने पहिरनेवाली सुदक्षिणा चन्द्रमा के थोड़े प्रकाश से अल्प तारोंवाली प्रातःकाल की रात्रि के समान देखी गई ॥ २ ॥

तदाननं मृत्सुरभि क्षितीश्वरो रहस्युपाघ्राय न तृप्तिमाययौ।
करीव सिक्तं पृषतैः पयोमुचां शुचिव्यपाये वनराजिपल्वलम् ॥३॥

( अन्वयः ) क्षितीश्वरः, रहसि, मृत्सुरभि, तदाननं, उपाघ्राय, शुचिव्यपाये, पयोमुचां, पृषतैः, सिक्तं, वनराजिपल्वलं, करी इव, तृप्तिं, न, आययौ ॥ ३ ॥

( टीका ) क्षितीश्वरः = भूमिपः, रहसि = एकान्ते, मृत्सुरभि, मृद्गन्धि, तदाननं = सुदक्षिणामुखम्, उपाघ्राय = समाघ्राय, शुचिव्यपाये = ग्रीष्मावसाने, "शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोः सिते। ग्रीष्मे हुतवहेऽपि स्यादुपधा शुद्धमन्त्रिणि" इति विश्वः, पयोमुचां = जलमुचां, पृषतैः = विन्दुभिः, "पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम्" इत्यमरः, सिक्तं = आर्द्रीकृतं, वनराजिपल्वलं = वनभूम्यल्पजलाशयं, "वेशन्तः पल्वलं चाल्पसरः" इत्यमरः, करीव = गज इव, तृप्तिं = सन्तोषं, न आययौ = न प्राप ॥ ३ ॥

( समासः ) क्षियतीति क्षितिस्तस्या ईश्वरः, मृदा सुरभीति मृत्सुरभि । तस्या आननमिति तदाननम् । शुचेः व्यपायः शुचिव्यपायस्तस्मिन् । पयांसि मुञ्चन्तीति तेषां । वनराज्याः पल्वलमिति ॥ ३ ॥

( वाच्यपरिवर्तनम् ) क्षितीश्वरेण······करिणा इव, तृप्तिः न आयये ॥ ३ ॥

( सरलार्थः ) गजो यथा ग्रीष्मान्ते मेघबिन्दुभिः सिक्तं अल्पसरोवरं आघ्रायापि तृप्तिं नाधिगच्छति तथैव दिलीपोऽप्येकान्ते मृद्गन्धयुतं सुदक्षिणाननं आघ्रायाऽपि सन्तोषं न लेभे ॥ ३ ॥

( सरलार्थ हिन्दी ) जंगलके छोटे छोटे जलाशयों द्वारा जैसे हाथी सन्तोष को प्राप्त नहीं होता उसी प्रकार दिलीप मिट्टी से सुगन्धित उसके मुख को चूमकर सन्तोष को प्राप्त नहीं हुआ ॥ ३ ॥

दिवं मरुत्वानिव भोक्ष्यते भुवं दिगन्तविश्रान्तरथो हि तत्सुतः ।
अतोऽभिलाषे प्रथमं तथाविधे मनो बबन्धान्यरसान्विलङ्घ्य सा ॥४॥

( अन्वयः ) हि, ( यस्मात् ) दिगन्तविश्रान्तरथः, तत्सुतः, मरुत्वान्, दिवम्, इव, भुवं, भोक्ष्यते, अतः, सा, ( सुदक्षिणा ) अन्यरसान्, विलङ्घ्य, प्रथमं, तथाविधे, अभिलाषे, मनः, बबन्ध ॥ ४ ॥

( टीका ) हि = यस्मात् कारणात्, दिगन्तविश्रान्तरथः = सर्वदिग्गतरथः, तत्सुतः = सुदक्षिणापुत्रः, मरुत्वान् = इन्द्रः, दिवमिव = स्वर्गमिव, भुवं = पृथिवीं, भोक्ष्यते = उपभोक्ष्यते, अतः = अस्मात्

कारणात्, 'एव' सा = सुदक्षिणा, † अन्यरसान् = मधुराद्यन्यरसयुक्तभक्ष्याणि, विलंघ्य = विहाय, प्रथमं = आदौ, तथाविधे = मृद्भक्षणरूपे अभिलाषे = इच्छायां, मनः = मानसं, " स्वान्तं हृन्मानसं मनः" इत्यमरः, बबन्ध = चकार ॥ ४ ॥

( समासः ) दिशामन्ता दिगन्तास्तेषु विश्रान्तः रथो यस्य सः । तस्याः सुतस्तत्सुतः । मरुतो देवताः सन्त्यस्येति । अन्ये च ते रसाश्चान्यरसास्तान् ॥ ४ ॥

( वाच्यपरिवर्तनम् ) दिगन्तविश्रान्तरथेन तत्सुतेन मरुत्वता द्यौः इव भूः भोक्ष्यते, अतः तया...... बबन्धे ॥ ४ ॥

( सरलार्थः ) यथा इन्द्रः स्वर्गं भुङ्क्ते तथैव सुदक्षिणायाः पुत्रोऽपि सम्पूर्णां भुवं भोक्ता अतएव सा सुदक्षिणा अन्यरसान् विहाय प्रथमं तथाविधे मृद्भक्षणरूपाभिलाषे मनो निदधौ ॥ ४ ॥

( सरलार्थ हिन्दी ) जैसे इन्द्र स्वर्ग को भोगता है वैसेही सुदक्षिणा का पुत्र भी सम्पूर्ण पृथ्वीको भोगेगा इसी कारण मानों रानी सुदक्षिणा और २ रसों को छोड़कर प्रथम मट्टीखाने के ही अभिलाषा में मन देती हुई ॥ ४ ॥

न मे ह्रिया शंसति किञ्चिदीप्सितं स्पृहावती वस्तुषु केषु मागधी ।
इति स्म पृच्छत्यनुवेलमादृतः प्रियासखीरुत्तरकोशलेश्वरः ॥ ५ ॥

( अन्वयः ) मागधी, ह्रिया, मे, किंचित्, ( अपि ) ईप्सितं, न, शंसति, ( सा ) केषु, वस्तुषु, स्पृहावती, ( अस्ति ) इति, उत्तरकोशलेश्वरः, आदृतः, ( सन् ) अनुवेलं, प्रियासखीः, पृच्छतिस्म ॥ ५ ॥

( टीक ) मागधी = सुदक्षिणा, ह्रिया = लज्जया, " मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा सापत्रपान्यतः " इत्यमरः, मे = मह्यं, किञ्चिदपि = ईषदपि, " किञ्चिदीषन्मनागल्पे " इत्यमरः, ईप्सितं = मनोरथं, न शंसति = न कथयति ' सा ' केषु = किम्भूतेषु, वस्तुषु = पदार्थेषु, स्पृहावती = इच्छावती, ' अस्ति ', इति = एवम्भूतं, उत्तरकोशलेश्वरः = उत्तरकोशलाधिपो दिलीपः, आदृतः ' सन् ' = सयत्नः सन्, = प्रतिक्षणं, प्रियासखीः = सुदक्षिणासहचरीः, पृच्छतिस्म = पप्रच्छ ॥ ५ ॥

† मधुराम्ललवणकटुकषायतिक्तभेदाद्रसः षड्विधो ज्ञेयः ।

( समासः ) मगधस्यापत्यं स्त्री मागधी । स्पृहा विद्यते यस्याः सा । ईशितुं शीलमस्येतीश्वरः, उत्तरकोशलानामीश्वरः । वेलायां वेलायामित्यनुवेलं । प्रीणातीति प्रिया, तस्याः सख्यः ताः ॥ ५ ॥

( वाच्यपरिवर्तनम् ) मागध्या ह्रिया मे किञ्चित् न शस्यते, "तया" केषु वस्तुषु स्पृहावत्या "भूयते" इति उत्तरकोसलेश्वरेण आदृतेन "सता" अनुवेलं प्रियासख्यः पृच्छयन्तेस्म ॥

( सरलार्थः ) सुदक्षिणा लज्जया किञ्चिदपि मनोरथं मे न कथयति, न जाने केषु वस्तुषु तस्या इच्छा वर्तते, इत्थं उत्तरकोशलेश्वरो दिलीपः प्रियायाः इष्टजनाम् सादरं भूयोभूयः पृच्छतिस्म ॥ ५ ॥

( सरलार्थ हिन्दी ) रानी सुदक्षिणा लज्जा के कारण मुझसे कुछ भी नहीं कहती, वह किन वस्तुओं को चाहती है इस प्रकार उत्तरकोशलका राजा दिलीप उसके सखियों से प्रतिक्षण पूछा करता था ॥ ५ ॥

उपेत्य सा दोहददुःखशीलतां यदेव वव्रे तदपश्यदाहृतम् ।
नहीष्टमस्य त्रिदिवेऽपि भूपतेरभूदनासाद्यमधिज्यधन्वनः ॥ ६ ॥

( अन्वयः ) सा, ( सुदक्षिणा ) दोहददुःखशीलताम्, उपेत्य, यद् एव, वव्रे, तत्, ( एव ) आहृतम्, अपश्यत्, हि ( यतः ) अधिज्यधन्वनः, अस्य, भूपतेः, त्रिदिवे, अपि, इष्टं ( वस्तु ) अनासाद्यं, न, अभूत् ॥ ६ ॥

( टीका ) सा = सुदक्षिणा, † दोहददुःखशीलतां = गर्भिणीमनो-

---

† दोहशब्दो इच्छामात्रवाच्यपि विशेषेण गर्भिणीच्छायां प्रयुज्यते " दोहदो गर्भलक्षणे अभिलाषे तथा गर्भे" इति हैमः,
गर्भिण्यास्तत्तदिच्छायां विशेषेण प्रयुज्यते,
सुश्रुतस्तु गर्भिण्याः दोहदमुद्दिश्य स्वसंहितायामेवमवोचत्:—
"इन्द्रियार्थांस्तु यान् यान् सा भोक्तुमिच्छति गर्भिणी ।
गर्भाबाधभयात्तांस्तान् भिषगाहृत्य दापयेत् ॥
सा प्राप्तदौर्हृदा पुत्रं जनयेत गुणान्वितम् ।
अलब्धदौर्हृदा गर्भे लभेतात्मनि वा भयम् ॥
येषु येष्विन्द्रियार्थेषु दौहृदे वै विमानना ।
प्रजायेत सुतस्यार्तिस्तस्मिंस्तस्मिंस्तथेन्द्रिये ॥

रथदुःखस्वभावतां, उपेत्य = प्राप्य, यदेव = यत्किञ्चिदपि, वव्रे = आचकाङ्क्ष, तदेव = तत्सर्वमपि, आहृतं = आनीतं, अपश्यत् = अवलोकितवती, हि = यस्मात्कारणात्, अधिज्यधन्वनः = आरोपितकार्मुकस्य, अस्य = भूपतेः = राज्ञः दिलीपस्य, त्रिदिवेऽपि = स्वर्गेऽपि, "स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः, इत्यमरः, इष्टं = अभिलषितं वस्तु, अनासाद्यं = अप्राप्यं, न अभूत् = नासीत् ॥ ६ ॥

( समासः ) दुःखशीलस्य भावो दुःखशीलता, दोहमाकर्षं ददातीति दोहदः, तस्य दुःखशीलता तां दोहददुःखशीलताम् । ज्यामधिगतमधिज्यं, अधिज्यन्धनुर्यस्य सः तस्य । भुवः पतिरिति भूपतिस्तस्य । त्रयः ब्रह्मविष्णुरुद्रा दीव्यन्त्यत्रेति त्रिदिवस्तस्मिन्न त्रिदिवे । आसादयितुं शक्यमासाद्यं न आसाद्यमित्यनासाद्यम् ॥ ६ ॥

( वाच्यपरिवर्तनम् ) तया ······ ······ आहृतं अदृश्यत, हि······ ······इष्टेन अनासाद्येन न अभावि ॥

---

राजसन्दर्शने यस्या दौहृदं जायते स्त्रियाः ।
अर्थवन्तं महाभागं कुमारं सा प्रसूयते ॥
दुकूलपट्टकौशेयभूषणादिषु सौहृदात् ।
अलङ्कारैषिणं पुत्रं ललितं सा प्रसूयते ॥
आश्रमे संयतात्मानं धर्मशीलं प्रसूयते ।
देवताप्रतिमायां तु प्रसूते पार्षदोपमम् ॥
दर्शने व्यालजातीनां हिंसाशीलं प्रसूयते ।
गोधामांसाशने पुत्रं सुषुप्सुं धारणात्मकम् ॥
गवां मांसे तु बलिनं सर्वक्लेशसहं तथा ।
माहिषे दौहृदाच्छूरं रक्ताक्षं लोमसंयुतम् ॥
वाराहमांसात् स्वप्नालुं शूरं सञ्जनयेत्सुतम् ।
मार्गाद्विक्रान्तजङ्घालं सदा वनचरं सुतम् ॥
सुमराद्विग्नमनसं नित्यभीतं च तैत्तिरात् ।
अतोऽनुक्तेषु या नारी समभिध्याति दौहृदम् ॥
शरीराचारशीलैः सा समानं जनयिष्यति ॥"

तदकरणे दोषः । तथा चः—
दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ।
देयमप्यहितं तस्यै हिताय हितकल्पकम् ॥
श्रद्धाविघाते गर्भस्य विकृतिश्च्युतिरेव च ।

इत्यर्थचिन्तामणिः

( सरलार्थः ) गर्भावस्थायां नानारसास्वादनलालसा राज्ञी सुदक्षिणा यत्किञ्चिदपि स्वाभिलषितं वस्तुसखीमुखेन प्रकाशितवती स्वर्लोकलभ्यमपि तत्सर्वं दिलीपप्रभावात्तत्क्षणादेवानीतं ददर्श ॥ ६ ॥

( सरलार्थ हिन्दी ) रानी सुदक्षिणा कठिन गर्भावस्थाको प्राप्त होकर जिन जिन वस्तुओं को चाहती थी उन सब वस्तुओं को तत्काल आया हुआ देखती थी । क्योंकि धनुषधारी राजा दिलीप के लिये, अभिलषित वस्तु स्वर्ग में भी दुर्लभ नहीं थी ॥ ६ ॥

**क्रमेण निस्तीर्य च दोहदव्यथां प्रचीयमानावयवा रराज सा ।**
**पुराणपत्रापगमादनन्तरं लतेव संनद्धमनोज्ञपल्लवा ॥ ७ ॥**

( अन्वयः ) सा, ( सुदक्षिणा ) क्रमेण, दोहदव्यथां, निस्तीर्य, च, प्रचीयमानावयवा, ( सती ) पुराणपत्रापगमात्, अनन्तरं, सन्नद्धमनोज्ञपल्लवा, लता इव, रराज ॥ ७ ॥

( टीका ) सा = सुदक्षिणा, क्रमेण = क्रमशः, दोहदव्यथां = दोहददुःखं, निस्तीर्य = अतिक्रम्य, च, प्रचीयमानावयवा = सुपुष्यमाणाङ्गा, " अङ्गं प्रतीकोऽवयवः " इत्यमरः, " सती " पुराणपत्रापगमात् = जीर्णपर्णप्रणाशात्, " पत्रं पलाशं छदनं दलं पर्णं छदः पुमान् " इत्यमरः, अनन्तरं = पश्चात्, सन्नद्धमनोज्ञपल्लवा = सञ्जातसुन्दरनवकिसलया, " पल्लवोऽस्त्री किसलयम् " इत्यमरः, लतेव = वल्लीव, "वल्ली तु व्रततिर्लता" इत्यमरः, रराज = शुशुभे ॥ ७ ॥

( समासः ) दोहदस्य व्यथा तां । प्रचीयतेऽसौ प्रचीयमाना, प्रचीयमाना अवयवा अस्याः सा । पुराणानि च तानि पत्राणि पुराणपत्राणि तेषामपगमस्तस्मात् । सन्नद्धानि मनोज्ञानि सन्नद्धमनोज्ञानि, सन्नद्धमनोज्ञानि पल्लवानि यस्याः सा सन्नद्धमनोज्ञपल्लवा ॥ ७ ॥

( वाच्यपरिवर्तनम् ) तया·········प्रचीयमानावयवया "सत्या" ···············पल्लवया लतया इव रेजे ॥

( सरलार्थः ) यथा वसन्तसमये वल्ली पक्वपर्णानि विहाय नवकसिलयैः परिशोभते तथैव राज्ञी सुदक्षिणाऽपि क्रमशः कष्टकरीं तां गर्भावस्थामतिक्रम्य अभूतपूर्वां पुष्टिमापद्यमानैः अवयवैः दिदीपे ॥ ७ ॥

( सरलार्थ हिन्दी ) पुराने पत्तों के गिरजाने पर नवीन पर्णवाली सुन्दर लताके समान रानी सुदक्षिणाभी गर्भके दुःखको बिताकर अपने पुष्ट अंगोंसे सुशोभित हुई ॥ ७ ॥

दिनेषु गच्छत्सु नितान्तपीवरं तदीयमानीलमुखं स्तनद्वयम् ।
तिरश्चकार भ्रमराभिलीनयोः सुजातयोः पङ्कजकोशयोः श्रियम् ॥८॥

( अन्वयः ) दिनेषु गच्छत्सु, नितान्तपीवरम्, आनीलमुखं, तदीयं, स्तनद्वयं, भ्रमराभिलीनयोः, सुजातयोः, पङ्कजकोशयोः; श्रियं, तिरश्चकार ॥ ८ ॥

( टीका ) दिनेषु = दिवसेषु, गच्छत्सु = व्यतिक्रामत्सु, " सत्सु " नितान्तपीवरं = अत्यन्तस्थूलं " वड्रोरुविपुलं पीनपीव्नी तु स्थूलपीवरे " इत्यमरः, आनीलमुखं = कृष्णवर्णचूचुकं, " कुचाग्रमित्यर्थः " तदीयं = सुदक्षिणासम्बन्धि, स्तनद्वयं = कुचद्वयं, " पिचण्डकुक्षी जठरोदरं तुन्दं स्तनौ कुचौ " इत्यमरः, भ्रमराभिलीनयोः, = भृङ्गाभिव्याप्तयोः, " द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः " इत्यमरः, सुजातयोः = मनोहरयोः, पङ्कजकोशयोः = कमलमुकुलयोः श्रियं = शोभां, तिरश्चकार = तत्याज ॥ ८ ॥

( समासः ) नितान्तं पीवरमिति नितान्तपीवरम् । आसमन्तान्नीलं मुखं यस्य तदानीलमुखं । तस्या इदं तदीयम् । स्तनयोर्द्वयमिति स्तनद्वयम् । भ्रमरैरभिलीनौ भ्रमराभिलीनौ तयोः भ्रमराभिलीनयोः । पङ्कजस्य कोशौ पङ्कजकोशौ तयोः ॥ ८ ॥

( वाच्यपरिवर्तनम् )... ...नितान्तपीवरेण आनीलमुखेन तदीयेन स्तनद्वयेन......... श्रीः तिरश्चक्रे ।

( सरलार्थः ) मनोहरे कमलमुकुलद्वये कृष्णवर्णभ्रमरसंयोगात् यादृशी शोभा भवति तथैवाऽस्याः सुदक्षिणायाः स्थूलोन्नतस्तनद्वयेऽपि कृष्णचूचुकोदयादनिर्वचनीया शोभाऽजायत ॥ ८ ॥

( सरलार्थ हिन्दी ) कुछ दिन व्यतीत होने पर उसके पुष्ट और नीले मुखवाले दोनों स्तन, काले काले नीले भौंरों से व्याप्त कमलके कलियों की शोभा को लज्जित करते हुए ॥ ८ ॥

निधानगर्भामिव सागराम्बरां शमीमिवाभ्यन्तरलीनपावकाम् ।
नदीमिवान्तःसलिलां सरस्वतीं नृपः ससत्त्वां महिषीममन्यत ॥९॥

( अन्वयः ) नृपः, निधानगर्भां, सागराम्बराम्, इव, अभ्यन्तरलीनपावकां, शमीम्, इव अन्तःसलिलां, सरस्वतीं, नदीम्, इव, महिषीं, ससत्त्वाम् अमन्यत ॥ ९ ॥

( टीका ) नृपः = राजा दिलीपः, निधानगर्भां = निधिगर्भां, सागराम्बरां = समुद्रवसनां, इव, "पृथ्वीमिवेत्यर्थः" अभ्यन्तरलीनपावकां = अन्तःप्रलीनवह्निं, शमीमिव = शमीवृक्षमिव, अन्तःसलिलां, = अन्तस्थितजलां सरस्वतीं = सरस्वतीनाम्नीं नदीमिव, महिषीं = पट्टराज्ञीं सुदक्षिणां, ससत्वां = जीवरत्नसहितां, अमन्यत = मन्यते स्म ॥ ९ ॥

( समासः ) निधानं गर्भे यस्याः सा तां । सागर एवाम्बरं यस्यास्तां सागराम्बराम् । अभ्यन्तरे लीनः पावको यस्यास्ताम् । अन्तः सलिलं यस्याः सा तां । सत्वेन सहिता ससत्वा तां ससत्त्वाम् ॥ ९ ॥

( वाच्यपरिवर्तनम् ) निधानगर्भा सागराम्बरा इव, अभ्यन्तरलीनपावका शमी इव, अन्तःसलिला सरस्वती नदी इव, महिषी नृपेण ससत्त्वा अमन्यत ।

( सरलार्थः ) राजा दिलीपः, भूगर्भस्थितममूल्यं रत्नमिव, शमीवृक्षान्तरस्थितमग्निमिव, सरस्वतीगर्भनिहितममलजलमिव, राज्ञीगर्भनिहितं सुतममन्यत ॥ ९ ॥

( सरलार्थ हिन्दी ) गर्भ में रत्न रखनेवाली पृथ्वीके समान, भीतर अग्नि और जल रखनेवाले शमीवृक्ष एवं सरस्वती नदी के समान, राजा दिलीप रानी को पुत्ररत्न गर्भवाली मानता हुआ ॥ ९ ॥

प्रियानुरागस्य मनःसमुन्नतेर्भुजार्जितानां च दिगन्तसम्पदाम् ।
यथाक्रमं पुंसवनादिकाः क्रिया धृतेश्च धीरः सदृशीर्व्यधत्त सः॥१०॥

( अन्वयः ) धीरः सः, ( प्रजेश्वरः ) प्रियानुरागस्य, मनःसमुन्नतेः, भुजार्जितानां, दिगन्तसम्पदां, च, धृतेः, च, सदृशीः पुंसवनादिकाः क्रियाः, यथाक्रमम्, व्यधत्त ॥ १० ॥

( टीका ) धीरः = पण्डितः, " धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः " इत्यमरः, सः = राजादिलीपः, प्रियानुरागस्य = सुदक्षिणास्नेहस्य, मनःसमुन्नतेः = हृदौदार्य्यस्य, भुजार्जितानां =

भुजबलसम्पादितानां, दिगन्तसम्पदां = दिगन्तव्याप्यैश्वर्याणां, च, धृतेः = पुत्रो मे भविष्यतीति सन्तोषस्य च, सदृशीः = अनुरूपाः, [1]पुंसवनादिकाः = पुंसवनप्रभृतीः, क्रियाः = संस्कारान्, यथाक्रमं = अनुक्रमेण, व्यधत्त = कृतवान् ॥ १० ॥

( समासः ) प्रीणातीति प्रिया तस्यामनुरागस्तस्य । मनसः समुन्नतिरिति मनःसमुन्नतिस्तस्याः । भुजाभ्याम् अर्जिता भुजार्जिताः तासाम् । दिशोऽन्ता यासां ता दिगन्ताः, दिगन्ताश्च ताः सम्पदश्च दिगन्तसम्पदस्तासां । पुमान् सूयतेऽनेनेति पुंसवनं, तदादिर्यासान्ताः पुंसवनादिकाः । क्रमनतिक्रम्येति यथाक्रमम् ॥ १० ॥

( वाच्यपरिवर्तनम् ) धीरेण तेन............सदृश्यः............ व्यधीयन्त ॥ १० ॥

( सरलार्थः ) दिलीपस्य सुदक्षिणायां यावान् स्नेहः मनसश्च यावदौदार्य्यं, दिग्विजयप्राप्तैश्वर्य्याणां यावत्प्राचुर्य्यमियता कालेन पुत्रमुखं पश्यामीत्याशया यावानानन्दश्च तावतैव प्रेम्णा, औदार्य्येण, विभवेनानन्देन च दिलीपस्तस्याः पुंसवनादिगर्भसंस्काराश्चकार ॥ १० ॥

( सरलार्थ हिन्दी ) राजा दिलीप का सुदक्षिणा में जितना प्रेम था, उसमें जितनी उदारता थी, अपने बाहुबल से जितनी सम्पत्ति प्राप्त की थी, उन सभों के अनुसार बड़े धूमधाम से पुंसवनादि संस्कार करता हुआ ॥ १० ॥

सुरेन्द्रमात्राश्रितगर्भगौरवात् प्रयत्नमुक्तासनया गृहागतः ।
तयोपचाराञ्जलिखिन्नहस्तया ननन्द पारिप्लवनेत्रया नृपः ॥११॥

( टीका ) गृहागतः, नृपः, सुरेन्द्रमात्राश्रितगर्भगौरवात, प्रयत्नमुक्तासनया उपचाराञ्जलिखिन्नहस्तया, पारिप्लवनेत्रया, तया, ( सुदक्षिणया ) ननन्द ॥ ११ ॥

( टीका ) गृहागतः = गेहप्राप्तः, " गृहं गेहोदवसितं " इत्यमरः,

---

१ "व्यक्ते गर्भे तृतीये तु मासे पुंसवनं भवेत । गर्भेऽव्यक्ते तृतीयेच्चेच्चतुर्थे मासि वा भवेत्" इति शौनकः ॥

नृपः = राजा दिलीपः, *सुरेन्द्रमात्राश्रितगर्भगौरवात् = लोकपालांशानुप्रविष्टगर्भभारात्, प्रयत्नमुक्तासनया = प्रयासत्यक्तासनया, उपचाराञ्जलिखिन्नहस्तया = अभिवादनाञ्जलिशिथिलकरया, "बलिहस्तांशवः कराः" इत्यमरः, पारिप्लवनेत्रया = चञ्चलनयनया, "चञ्चलं तरलं चैव पारिप्लवपरिप्लवे" इति चामरः, तया = सुदक्षिणया, ननन्द = आनन्दम्प्राप ॥ ११ ॥

( समासः ) गृहमागत इति गृहागतः । सुराणामिन्द्राः सुरेन्द्रास्तेषां मात्राभिराश्रित इति सुरेन्द्रमात्राश्रितः, स चासौ गर्भश्च सुरेन्द्रमात्राश्रितगर्भस्तस्य गौरवं तस्मात् । प्रयत्नेन मुक्तं आसनं यया सा तया । उपचारार्थः योऽञ्जलिस्तस्मिन् खिन्नौ हस्तौ यस्याः साः तया । परिप्लवे नेत्रे यस्याः साः ॥ ११ ॥

( वाच्यपरिवर्तनम् ) गृहागतेन नृपेण·········· ननन्दे ॥ ११ ॥

( सरलार्थ ) लोकपालप्रभावविशिष्टः सः गर्भः क्रमशस्तथा भारवाञ्जातः, यथा गृहागतस्य राज्ञो दिलीपस्य स्वागतार्थं शय्यातः उत्थानेऽपि सा कथमपि अलम्बभूव । तत्प्रणामा मञ्जलिबन्धनेऽपि तस्या हस्तौ शिथिलौ बभूवतुः, एवम्भूतं तस्या भावं दृष्ट्वा दिलीपो ननन्द ॥ ११ ॥

( सरलार्थ हिन्दी ) गर्भ के भार से स्वागत करने के निमित्त बड़े यत्न से आसन छोड़ती हुई तथा प्रणाम करने के लिये अञ्जलि बांधने में शिथिल हाथ वाली रानी सुदक्षिणा को देख राजा दिलीप अति प्रसन्न हुआ ॥ ११ ॥

कुमारभृत्याकुशलैरनुष्ठिते भिषग्भिराप्तैरथ गर्भभर्मणि ।
पतिः प्रतीतः प्रसवोन्मुखीं प्रियां ददर्श काले दिवमभ्रितामिव ॥१२॥

( अन्वयः ) कुमारभृत्याकुशलैः, आप्तैः, भिषग्भिः, गर्भभर्मणि, अनुष्ठिते, प्रतीतः, पतिः, काले, प्रसवोन्मुखीं, प्रियाम्, अभ्रितां, दिवम्, इव, ददर्श ॥ १२ ॥

* राजगर्भः लोकपालानां सुरेन्द्राणामंशेन निर्मितो भवति अतएव स सातिशयं गौरवमावहति तथा च :—

अष्टाभिर्लोकपालानां मात्राभिर्निर्मितो नृपः ।

( टीका ) कुमारभृत्याकुशलैः = शिशुचिकित्साप्रवीणैः, आप्तैः = प्रत्ययितैः, " विश्वस्तैरित्यर्थः " " आप्तप्रत्ययितौ समौ " इत्यमरः, भिषग्भिः = वैद्यैः, " भिषग्वैद्यौ चिकित्सके " इत्यमरः, [1]गर्भभर्मणि = गर्भपोषणे, " भरणे पोषणे भर्म " इति हैमः, अनुष्ठिते = कृते, ' सति ' प्रतीतः = हृष्टः, " प्रसन्न इत्यर्थः " पतिः = दिलीपः, काले = दशमे मासि, प्रसवोन्मुखीं = आसन्नप्रसवां, प्रियां = भार्याम् अभ्रितां = मेघमेदुरितां, दिवं = आकाशम् इव, ददर्श = अवलोकयामास ॥ १२ ॥

( समासः ) भ्रियन्ते कर्मकरा अनयेति भृत्या, कुमारयन्तीति कुमारास्तेषां भृत्येति कुमारभृत्या, तस्यां कुशलैः । गर्भस्य भर्म गर्भभर्म, तस्मिन् । उत् मुखं यस्याः सा उन्मुखी, प्रसवस्य उन्मुखीति प्रसवोन्मुखी तां । प्रीणातीति प्रिया ताम् । अभ्राण्यस्याः सञ्जातान्यभ्रिता ताम् ॥ १२ ॥

( वाच्यपरिवर्तनम् ) अथ.................प्रतीतेन पत्या काले प्रसवोन्मुखी प्रिया अभ्रिता द्यौः इव ददृशे ॥ १२ ॥

( सरलार्थः ) नियुक्तैः बालचिकित्साचतुरैः सद्वैद्यैः गर्भं पुष्टतामापादयन् दिलीपः शीघ्रसुतप्रसवां, राज्ञीं सुदक्षिणां वर्षणोन्मुखीम् आकाशस्थलीमिव ददर्श ॥ १२ ॥

( सरलार्थ हिन्दी ) दिलीप बालचिकित्सा में कुशल वैद्यों से गर्भको पुष्ट कराता हुआ शीघ्र पुत्रको जनने वाली रानी सुदक्षिणाको शीघ्रही बरसनेवाले मेघ सहित आकाश की समान देखता हुआ ॥१२॥

ग्रहैस्ततः पञ्चभिरुच्चसंश्रयैरसूर्यगैः सूचितभाग्यसंपदम् ।
असूत पुत्रं समये शचीसमा त्रिसाधना शक्तिरिवार्थमक्षयम् ॥१३॥

( अन्वयः ) ततः, शचीसमा, ( सुदक्षिणा ) समये, उच्चसंश्रयैः, असूर्यगैः, पंचभिः, ग्रहैः, सूचितभाग्यसम्पदं, पुत्रं, त्रिसाधना, शक्तिः अक्षयम्, अर्थम्, इव, असूत ॥ १३ ॥

---

[1] "अजातेऽपि कुमारे कुमारभृत्याप्रयोगो न दोषाय । कुमारभृत्या गर्भकर्मणि प्रजने च क्रियते" इति कौटिल्येनोक्तत्वात् ।

( टीका ) ततः = तदनन्तरं, शचीसमा = इन्द्राणीतुल्या, " सुदक्षिणा " समये = प्रसवकाले, [1]उच्चसंश्रयैः = उच्चस्थानस्थितैः, असूर्यगैः = अनस्तमितैः, पञ्चभिः = पञ्चसंख्याकैः, ग्रहैः = सूर्यादिभिः, सूचितभाग्यसंपदं = बोधितदैवसम्पदं, "दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः " इत्यमरः, पुत्रं = सुतं; त्रिसाधना = प्रभावमन्त्रोत्साहोत्पादिता, शक्तिः = राजशक्तिः, अक्षयम् = अविनश्वरम्, अर्थम् = ऐश्वर्यम्, इव = यथा, असूत = प्रासोष्ट ॥ १३ ॥

( समासः ) शच्या समा शचीसमा । उच्चः संश्रयो येषान्तैः । न सूर्यं गच्छन्तीत्यसूर्यगास्तैः । भाग्यस्य सम्पदिति भाग्यसम्पत्, सूचिता भाग्यसम्पद्यस्य तं । त्रीणि साधनानि यस्याः सा त्रिसाधना । न क्षयतीत्यक्षयम् ॥ १३ ॥

( वाच्यपरिवर्तनम् ) ततः शचीसमया ..........सूचितभाग्यसम्पत् पुत्रः, त्रिसाधनया शक्त्या अक्षयः अर्थः इव, असुयत ॥ १३ ॥

( सरलार्थः ) यथा प्रभावोत्साहमन्त्रजा शक्तिः राज्ञोऽविनश्वरं वैभवमुत्पादयति तथैव इन्द्राणीसदृशी दिलीपपत्नी सुदक्षिणाऽपि यशसा सम्पन्नं सुतमसूत, तस्मिन् समये उच्चस्थानस्थिताः प्राप्तोदयाः पञ्च ग्रहास्तस्य सौभाग्यं सूचयामासुः ॥ १३ ॥

( सरलार्थ हिन्दी ) जैसे प्रभाव, उत्साह, मन्त्र स्वरूप त्रिसाधना शक्ति राजाकी नाश न होनेवाली सम्पत्तिको उत्पन्न करती है वैसे ही इन्द्राणी की समान रानी सुदक्षिणा ने उच्चस्थान स्थित पांच ग्रहोंद्वारा अलौकिक भाग्य सम्पत्ति दिखानेवाले पुत्रको उत्पन्न किया ॥ १३ ॥

दिशः प्रसेदुर्मरुतो ववुः सुखाः प्रदक्षिणार्चिर्हविरग्निराददे ।
बभूव सर्वं शुभशंसि तत्क्षणं भवो हि लोकाभ्युदयाय तादृशाम् ॥१४॥

( अन्वयः ) दिशः प्रसेदुः, सुखाः, मरुतः, ववुः, अग्निः, प्रदक्षिणार्चिः, ( सन् ) हविः, आददे, ( इत्थम् ) सर्वं, तत्क्षणं, शुभशंसि बभूव, हि ( यतः ) तादृशां, भवः, लोकाभ्युदयाय भवति ॥ १४ ॥

---

१ टि० ग्रहाणां द्विविधमुच्चत्वं राशिकृतं भागकृतञ्च तत्र प्रथमराशौ सूर्यस्योच्चता दशभागेषु । वृषे शीतगोस्त्रिषु भागेषु हरौ कुजस्याष्टाविंशेषु । कन्यायां बुधस्य पञ्चदशसु भागेषु । कर्के गुरोः पञ्चसु भागेषु । मीने शुक्रस्य सप्तविंशतिभागेषु । तुलायां शनेर्विंशति भागेषु । इति ज्योतिःशास्त्रम् ।

( टीका ) दिशः = आशाः, प्रसेदुः = प्रसन्ना बभूवुः, सुखाः = सुखकराः, मरुतः = वाताः, ववुः = वान्तिस्म, अग्निः = वन्हिः, प्रदक्षिणार्चिः = प्रदक्षिणज्वालः, " सन् " हविः = हवनीयम्, आददे = स्वीचकार, इत्थम् = अनेन प्रकारेण, सर्वम् = अखिलं, तत्क्षणं = तस्मिन्क्षणे "जन्मसमय इत्यर्थः" शुभशंसि = शुभसूचकं, बभूव = अभूत्, हि = यस्मात्कारणात्, तादृशां = रघुसदृशानां, भवः, = जन्म लोकाभ्युदयाय = लोकमङ्गलाय भवतीति शेषः ॥ १४ ॥

( समासः ) सुखयन्तीति सुखाः । प्रदक्षिणा अर्चिर्यस्य सः । शुभानि शंसत इति शुभशंसि । लोकानामभ्युदयो लोकाभ्युदयस्तस्मै ॥ १४ ॥

( वाच्यपरिवर्तनम् ) दिग्भिः प्रसेदे, मरुद्भिः सुखैः ववे, अग्निना प्रदक्षिणार्चिषा ( सता ) हविः आददे, सर्वेण तत्क्षणं शुभशंसिना बभूवे, हि तादृशां भवेन लोकाभ्युदयाय " भूयते " ॥ १४ ॥

( सरलार्थः ) तदा सर्वा अपि दिशः प्रसन्नाः सञ्जाताः, आनन्दजनकाः वायवः ववुः, हवनाग्निः प्रदक्षिणज्वालः सन् घृताहुतिं स्वीचकार, तस्मिन् काले जगत् मङ्गललक्षणलक्षितं प्रबभूव किमन्यद् एवं विधा महापुरुषा जगदानन्दायैवोत्पद्यन्ते ॥ १४ ॥

( सरलार्थ हिन्दी ) पुत्र प्रसवके समय सम्पूर्ण दिशायें निर्मल हुईं, मन्द २ पवन चलने लगी, उस समय सभी बातें शुभसूचक हुईं, क्योंकि ऐसोंका जन्म जगत के मंगल के लिये ही होता है ॥ १४ ॥

अरिष्टशय्यां परितो विसारिणा सुजन्मनस्तस्य निजेन तेजसा ।
निशीथदीपाः सहसा हतत्विषो बभूवुरालेख्यसमर्पिता इव ॥ १५ ॥

( अन्वयः ) सुजन्मनः, तस्य, ( बालकस्य ) अरिष्टशय्यां, परितः, विसारिणा, निजेन, तेजसा, सहसा, निशीथदीपाः, हतत्विषः, (सन्तः) आलेख्यसमर्पिताः, इव, बभूवुः ॥ १५ ॥

( टीका ) सुजन्मनः = शोभनजन्मनः, तस्य = कुमारस्य रघोः, अरिष्टशय्यां = सूतिकागृहतल्पं, " अरिष्टं सूतिकागृहम् " इत्यमरः, परितः = समन्ततः, " समन्ततस्तु परितः सर्वतो विश्वगित्यपि " इत्यमरः, विसारिणा = प्रसारिणा, " विसृत्वरो विसृमरः प्रसारी च विसारिणि " इत्यमरः, निजेन = स्वीयेन, तेजसा = दीप्त्या, सहसा =

झटिति, निशीथदीपाः = अर्द्धरात्रप्रदीपाः, " अर्द्धरात्रनिशीथौ द्वौ " इत्यमरः, हतत्विषः = नष्टकान्तयः, " सन्तः " आलेख्यसमर्पिता इव = चित्रलिखिता इव, बभूवुः = आसन् ॥ १५ ॥

( समासः ) शोभनं जन्म यस्य सः सुजन्मा तस्य । अरिष्टे शय्या अरिष्टशय्या तां । विशेषेण सरतीति विसारि तेन । निशीथे दीपा इति निशीथदीपाः । हता त्विट् येषां ते । आलेख्ये समर्पिताः ॥ १५ ॥

( वाच्यपरिवर्तनम् ) सुजन्मनः.........निशीथदीपैः हतत्विड्भिः " सद्भिः " आलेख्यसमर्पितैः इव, बभूवे ॥ १५ ॥

( सरलार्थः ) तस्मिन् क्षणे उत्पन्नस्य तस्य बालकस्य दीप्तिमता शरीरकान्तिमण्डलेन सूतिकागृहसंस्थिताः प्रदीपाः, निष्प्रभाः सन्तः चित्रलिखिता इव जाताः ॥ १५ ॥

( सरलार्थ हिन्दी ) उस समय सुन्दर जन्मवाले उस बालक के तेज से सूतिका गृह के चहुंओर रक्खे हुए अर्द्धरात्रि के प्रदीप चित्र में रक्खे हुए की समान मन्द प्रकाश हो गये ॥ १५ ॥

जनाय शुद्धान्तचराय शंसते कुमारजन्मामृतसंमिताक्षरम् ।
अदेयमासीत्त्रयमेव भूपतेः शशिप्रभं छत्रमुभे च चामरे ॥ १६ ॥

( अन्वयः ) अमृतसंमिताक्षरं, कुमारजन्म, शंसते, शुद्धान्तचराय, जनाय, भूपतेः, त्रयम्, एव, अदेयम्, आसीत्, शशिप्रभं, छत्रं, ( अदेयमासीत् ) उभे, चामरे, च, ( अदेये आस्ताम् ) ॥ १६ ॥

( टीका ) अमृतसम्मिताक्षरं, = सुधासमानाक्षरं, कुमारजन्म = कुमारजननं, "जनुर्जननजन्मानि" इत्यमरः, शंसते = कथयते, शुद्धान्तचराय = अन्तःपुरपरिचारकाय, " स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् । शुद्धान्तश्चावरोधश्च " इत्यमरः । जनाय = मनुष्याय भूपतेः = राज्ञो दिलीपस्य, त्रयं = त्रिसंख्याकमेव वस्तु, अदेयं = दातुमनर्हम्, आसीत् = अभूत्, शशिप्रभं = चन्द्रधवलं, छत्रम् = आतपत्रं, " हैमं छत्रन्त्वातपत्रम् " इत्यमरः, उभे = द्वे, चामरे च ॥ १६ ॥

( समासः ) कुमारस्य जन्म इति कुमारजन्म । अमृतेन सम्मितान्यक्षराणि यस्मिंस्तत् । शुद्धाः कामोपरता रक्षका अन्ते यस्य स शुद्धान्तः, चरतीति चरः, शुद्धान्ते चरः शुद्धान्तचरस्तस्मै । पातीति

पतिः, भुवः पतिरिति भूपतिस्तस्य। दातुं योग्यं देयं, न देयमित्यदेयं। शशिनः प्रभेव प्रभा यस्य तत्। छादयत्यनेनेति च्छत्रम् ॥ १६ ॥

( वाच्यपरिवर्तनम् ) कुमारजन्म............ त्रयेण एव अदेयेन अभूयत, शशिप्रभेण छत्रेण उभाभ्यां चामराभ्याञ्च ॥ १६ ॥

( सरलार्थः ) यदा कश्चन अन्तःपुरचारी परिजनः राज्ञः समीपमागत्य सुधासमानाक्षरां कुमारजन्मवार्ताम् अश्रावयत् तदा राजा अमृतरसपूरितमिव तद्वचनमाकर्ण्य अत्युज्ज्वलं चन्द्रप्रभाभासुरं राजच्छत्रं चामरद्वयञ्च वर्जयित्वा तत्कालोपस्थितं वसनभूषणादिकं सर्वमेव तस्मै प्रादात् ॥ १६ ॥

( सरलार्थ हिन्दी ) जिस समय राजा दिलीप के समीप आकर विश्वासपात्र राजदूतने "कुमारका जन्म हुआ" ऐसे अमृत अक्षर सुनाये उस समय राजा तीन वस्तुओं को अर्थात् चन्द्रमा की समान कान्तिवाला छत्र ( राजच्छत्र ) तथा दोनों चामरों को छोड़कर अपने शरीर पर धारण किये हुए सभी आभूषणों को देता हुआ ॥ १६ ॥

निवातपद्मस्तिमितेन चक्षुषा नृपस्य कान्तं पिबतः सुताननम्। महोदधेः पूर इवेन्दुदर्शनाद्गुरुः प्रहर्षः प्रबभूव नात्मनि ॥ १७ ॥

( अन्वयः ) निवातपद्मस्तिमितेन, चक्षुषा, कान्तं, सुताननं, पिबतः, नृपस्य, गुरुः, प्रहर्षः, इन्दुदर्शनात्, महोदधेः, पूरः, इव, आत्मनि, न प्रबभूव ॥ १७ ॥

( टीका ) निवातपद्मस्तिमितेन = वातरहितकमलवन्निश्चलेन, चक्षुषा = नयनेन, कान्तं = मनोरमं, "कान्तं मनोरमं रुच्यम्" इत्यमरः, सुताननं = पुत्रमुखं, पिबतः = अवलोकयतः, नृपस्य = राज्ञो दिलीपस्य, गुरुः = महान्, प्रहर्षः = आनन्दः, इन्दुदर्शनात् = चन्द्रावलोकनात्, महोदधेः = महासागरस्य, पूरः = ओघः, इव = यथा, आत्मनि = देहे, न प्रबभूव = न मातिस्म ॥ १७ ॥

( समासः ) वातस्याभावो निवातं निवाते यत्पद्मं तत् निवातपद्मं, तद्वत्स्तिमितं तेन। सुतस्याननमिति सुताननं। पिबतीति पिबन् तस्य। इन्दोः दर्शनमितीन्दुदर्शनं तस्मात्। उदकानि

धीयन्तेऽत्र इत्युदधिः, महांश्चासावुदधिश्च महोदधिस्तस्य ॥ १७ ॥

( वाच्यपरिवर्तनम् ) निवात०……गुरुप्रहर्षेण, इन्दुदर्शनात् महोदधेः पूरेण इव, न प्रबभूवे ॥ १७ ॥

( सरलार्थः ) राजा दिलीपः सुविशालमात्मनो नयनयुगलं स्थिरीकृत्य यदा पुत्रमुखं चिरम् अवलोकयामासतदा तस्य मुख-दर्शनजनितानन्दोच्छ्वासः चन्द्रदर्शनात् समुद्रस्य जलराशिरिव तच्छरीरे पर्य्याप्तं स्थानं न लेभे ॥ १७ ॥

( सरलार्थ हिन्दी ) पूर्ण चन्द्र के दर्शन से जैसे समुद्र का पूर अपने में नहीं समाता उसी प्रकार निश्चल नेत्रों से पुत्र का मुख अवलोकन करते हुए राजा दिलीप का आनन्द उसके अन्तःकरण में न समाया ॥ १७ ॥

स जातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोधसा कृते ।
दिलीपसूनुर्मणिराकरोद्भवः प्रयुक्तसंस्कार इवाधिकं बभौ ॥ १८ ॥

( अन्वयः ) सः, दिलीपसूनुः, तपस्विना, पुरोधसा, तपोवनात्, एत्य, अखिले, जातकर्मणि, कृते, ( सति ) आकरोद्भवः, प्रयुक्तसंस्कारः, मणिः, इव, अधिकं, बभौ ॥ १८ ॥

( टीका: ) सः = पूर्वोक्तः, दिलीपसूनुः = दिलीपपुत्रः, " रघुः " तपस्विना = कठिनानुष्ठानवता, पुरोधसा = पुरोहितेन, "वशिष्ठेन" " पुरोधास्तु पुरोहितः " इत्यमरः, तपोवनात् = अनुष्ठानाऽरण्यात्, एत्य = आगत्य, अखिले = सम्पूर्णे, [1]जातकर्म्मणि = जातकर्म्माख्य-संस्कारे, कृते = अनुष्ठिते, "सति" प्रयुक्तसंस्कारः = शाणोल्लेखनादि-भिः संस्कृतः, आकरोद्भवः = खनिप्रभवः, "खनिः स्त्रियामाकरः स्यात्" इत्यमरः, मणिः = हीरकादिमणिः, इव = यथा, अधिकं = अत्यन्तं बभौ = शुशुभे ॥ १८ ॥

---

१ जातस्य कुमारस्याच्छिन्नायां नाड्यां मेधाजननायुष्ये करोतीति पारस्करः । अत्र वसिष्ठः—
" श्रुत्वा जातं पिता पुत्रं सचैलं स्नानमाचरेत् । "
जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि ।
दैवादतीतकालश्चेदतीते सूतके भवेत् ॥
इति च हेमाद्रिः ।

( समासः ) दिलीपस्य सूनुरिति दिलीपसूनुः । तपनं तप्यते वा तपः, तदस्यास्तीति तपस्वी, तेन । पुरोऽग्रे धीयते पूज्यत्वेनेति पुरोधाः तेन । तपसो वनं तपोवनं तस्मात् । जातस्य कर्म्म इति जातकर्म्म तस्मिन् । प्रयुक्तः संस्कारो यस्य सः । आकरादुद्भवो यस्य सः ॥ १८ ॥

( वाच्यपरिवर्तनम् ) तेन दिलीपसूनुना..........आकरोद्भवेन प्रयुक्तसंस्कारेण मणिना इव, अधिकं बभे ॥ १८ ॥

(सरलार्थः) यथा आकरात् निष्कासितो हीरकमणिः शाणशोधितः सन् अतितरां कान्तिं लभते तथा स्वभावसुन्दरः स राजपुत्रः पुरोहितेन वसिष्ठेन जातकर्मनामकसंस्कारेण संस्कृतः सन् सौन्दर्य्यातिशयं लेभे ॥ १८ ॥

( सरलार्थ हिन्दी ) जैसे खान से निकाला हुआ मणि ( हीरा-आदि ) सान पर चढ़ाकर साफ करने से अधिक शोभाको प्राप्त होता है उसी प्रकार वह राजकुमार भी तपोवन से आये हुए पुरोहित वसिष्ठजी से संस्कार किये जाने पर अत्यन्त अधिक शोभा ( सैान्दर्य ) के। प्राप्त हुआ ॥ १८ ॥

सुखश्रवा मङ्गलतूर्यनिस्वनाः प्रमोदनृत्यैः सह वारयोषिताम् ।
न केवलं सद्मनि मागधीपतेः पथि व्यजृम्भन्त दिवौकसामपि ॥१९॥

( अन्वयः ) सुखश्रवाः मङ्गलतूर्यनिस्वनाः वारयोषितां प्रमोदनृत्यैः, सह, केवलं, मागधीपतेः, ( दिलीपस्य ) सद्मनि, न ( किन्तु ) दिवैाकसाम् अपि, पथि, व्यजृम्भन्त ॥ १९ ॥

( टीका ) सुखश्रवाः = श्रवणसुखकराः, मङ्गलतूर्यनिस्वनाः = मङ्गलवाद्यध्वनयः, वारयोषितां = गणिकानां, "वारस्त्री गणिका वेश्या रूपाजीवा" इत्यमरः, प्रमोदनृत्यैः = हर्षनर्तनैः, 'सह, मागधीपतेः = सुदक्षिणाभर्तुः, ( दिलीपस्य ) सद्मनि = गृहे, एव, केवलं, न व्यजृम्भन्त = न विस्तारमलभन्त, किन्तु दिवैाकसाम् = देवानां, पथि = आकाशेऽपि, व्यजृम्भन्त = व्यलसन् ॥ १९ ॥

( समासः ) सुखः श्रवो येषान्ते सुखश्रवाः । मङ्गलार्थानि तूर्याणि मङ्गलतूर्याणि तेषां निस्वनाः । वारस्य योषितः वारयोषितस्तासां ।

प्रमोदस्य नृत्यानि ( चतुः प्रकारस्य [1]अभिनयस्य आविष्करणानि ) तैः । मगधस्य राज्ञोऽपत्यं स्त्री मागधी तस्याः पतिः तस्य । द्यौरोको येषान्ते दिवौकसः तेषाम् 'पृषोदरादित्वात्साधुः' ॥ १९ ॥

( वाच्यपरिवर्तनम् ) सुखश्रव्यैः मङ्गलतूर्यनिस्वनैः व्यजृम्भ्यत ॥१९॥

( सरलार्थः ) तस्य जन्ममहोत्सवसमये न केवलं राजभवने नृत्यगीतवाद्यानि समभूवन् किन्तु आकाशेऽपि गन्धर्वा वादित्राणि वादयन्तिस्म अप्सरसश्च आनन्दातिशयेन नृत्यन्तिस्म ॥ १९ ॥

( सरलार्थ हिन्दी ) कुमार के जन्ममहोत्सव में केवल राजा दिलीपके राजभवनमें ही नाचना गाना बजाना आदि आनन्द का स्रोत नहीं उमड़ा हुआ था किन्तु स्वर्ग में भी अप्सराओंका समूह एक अपूर्व आनन्दमें मग्न हुआ था ॥ १९ ॥

न संयतस्तस्य बभूव रक्षितुर्विसर्जयेद्यं सुतजन्महर्षितः ।
ऋणाभिधानात्स्वयमेव केवलं तदा पितॄणां मुमुचे स बन्धनात् ॥२०॥

( अन्वयः ) रक्षितुः, तस्य ( दिलीपस्य ) संयतः, न, बभूव, यं सुतजन्महर्षितः ( सन् ) ( सः ) विसर्जयेत्, केवलं, सः, स्वयम्, एव, पितॄणां, ऋणाभिधानात, बन्धनात, तदा, मुमुचे ॥ २० ॥

( टीका ) रक्षितुः = पालकस्य, तस्य = दिलीपस्य, संयतः = बद्धः, कारागारे निरुद्ध इत्यर्थः "कश्चन" न बभूव = नासीत्, सुतजन्महर्षितः = पुत्रोत्पत्तिप्रहृष्टः, 'सन्' (सः) यं = बन्दीकृतजनं; विसर्जयेत् = [2]मोचयेत्, "किन्तु" केवलं, सः = राजा दिलीपः, स्वयमेव, पितॄणां = पूर्वपुरुषाणां, [3]ऋणाभिधानात्, = ऋणनामधेयात् बन्धनात्, तदा तस्मिन् काले, मुमुचे = मुक्तवान् ॥ २० ॥

( समासः ) रक्षतीति रक्षिता, तस्य । सुतस्य जन्म सुतजन्म

---

१ अभिनयस्य चतुष्प्रकारकत्वं च "आङ्गिको वाचिकश्चैव आहार्यः सात्विकस्तथा" इत्यादिनोक्तम् ।

२ "युवराजाभिषेके च परचक्रावमर्दने । पुत्रजन्मनि वा मोक्षो बद्धस्य हि विधीयते ।

३ "जाते पुत्रे तु जनकः पितॄणां मुच्यते ऋणात्" इत्यागमः "एष वा अनृणो यः पुत्री" इति श्रुतिः ।

तेन हर्षितः । अभिधीयतेऽनेन इत्यभिधानं ऋणमभिधानं यस्य तत् ऋणाभिधानं, तस्मात् ॥ २० ॥

( वाच्यपरिवर्तनम् ) रक्षितुः तस्य संयतेन न बभूवे ( तेन ) सुतजन्महर्षितेन " सता " विसृज्येत, तेन.......॥ २० ॥

( सरलार्थः ) तद्देशे चौराभावात् कश्चिदपि काराबद्धो नासीत् यमसौ पुत्रजन्महृष्टः सन् मोचयेत् परन्तु स आत्मानमेव पितॄणाम् ऋणरूपाद्बन्धनान्मोचयामास ॥ २० ॥

( सरलार्थ हिन्दी ) राजाके उत्तम प्रबन्धसे राज्यमें चोरोंके तथा अन्य दुष्टोंके न रहनेके कारण कोई कैदी न था, जिसे पुत्र जन्म के महोत्सवमें छोड़ता ऐसी दशामें राजा दिलीप ही स्वयं पितृऋण के बन्धनसे मुक्त हुआ ॥ २० ॥

श्रुतस्य यायादयमन्तमर्भकस्तथा परेषां युधि चेति पार्थिवः ।
अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभवम् ॥२१॥

( अन्वयः ) अयम् , अर्भकः, श्रुतस्य, अन्तं, यायात् , तथा, युधि, परेषां च, ( अन्तं यायात् ) इति, अर्थवित्, पार्थिवः, धातोः, गमनार्थम् , अवेक्ष्य, आत्मसंभवं, नाम्ना, रघुं, चकार ॥ २१ ॥

( टीका ) अयम् = एषः, अर्भकः = शिशुः " पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः " इत्यमरः, श्रुतस्य = शास्त्रस्य, अन्तं = पारं, यायात् = गच्छेत् , तथा, युधि = रणे, परेषां = शत्रूणां, च, " अन्तं यायात् " इति = हेतोः, अर्थवित् = अर्थज्ञः, पार्थिवः = भूमिपः, धातोः = लघिधातोः, गमनार्थं = गमनरूपमर्थम् , अवेक्ष्य = आलोच्य, आत्मसंभवं = आत्मजं सुतं, नाम्ना = अभिधया, रघुं, चकार = रघुरिति नाम्नाऽऽख्यातवान् ॥ २१ ॥

( व्याकरण ) कवि वकि " रघि लघि गत्यर्था इति लघि धातोरिदित्वात् नुमि लंघिवंह्योर्नलोपश्च" इति कुप्रत्यये नलोपश्च बालंमूललघ्वलमङ्गुलीनां वा लोरत्वमापद्यते" लस्थाने रः ॥ २१ ॥

( समासः ) अर्थं वेत्तीत्यर्थवित् । गमनमेवार्थस्तम् । सम्भवतीति सम्भवः आत्मनः सम्भव आत्मसम्भवस्तम् ॥ २१ ॥

( वाच्यपरिवर्तनम् ) अनेन अर्भकेण श्रुतस्य अन्तः यायेत, तथा युधि परेषां च " अन्तः यायेत " इति अर्थविदा पार्थिवेन............ आत्मसम्भवः नाम्ना रघुः चक्रे ॥ २१ ॥

( सरलार्थः ) अयं मे पुत्रः समस्तशास्त्रसागरस्य पारं गमिष्यति सकलसपत्नसैन्यसमूहव्यूहं च छित्वा निर्गमिष्यति, इत्थं तस्य गमनशीलत्वं निर्णीय राजा दिलीपः तस्य रघुरिति नामधेयञ्चकार ॥ २१ ॥

( सरलार्थ हिन्दी ) यह मेरा पुत्र सम्पूर्ण शास्त्रको पार करेगा ( अशेष शास्त्र पढ़ेगा ) और रण में शत्रुओं के अन्त को प्राप्त होगा ( शत्रुओं का नाश करेगा ) ऐसा समझ कर रघिधातु को गमनार्थक जान कर उसका " रघु " ऐसा नाम करण किया ॥ २१ ॥

पितुः प्रयत्नात्स समग्रसम्पदः शुभैः शरीरावयवैर्दिने दिने ।
पुपोष वृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः ॥ २२ ॥

( अन्वयः ) सः, (रघुः) समग्रसम्पदः, पितुः, प्रयत्नात्, हरिदश्वदीधितेः, अनुप्रवेशात्, बालचन्द्रमाः, इव, शुभैः शरीरावयवैः, दिने, दिने वृद्धिं, पुपोष ॥ २२ ॥

( टीका ) सः=रघुः, समग्रसंपदः=पूर्णलक्ष्मीकस्य, पितुः=दिलीपस्य, प्रयत्नात्=पालनादिनियमात्, हरिदश्वदीधितेः=सूर्यकिरणस्य " भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः " इति तथा " किरणोस्रमयूखांशुगभस्तिघृणिधृष्णयः । भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम् " इत्यमरः, अनुप्रवेशात्=अन्तःप्रवेशात्, [1]बालचन्द्रमा इव=बालेन्दुरिव, शुभैः=मनोहरैः, शरीरावयवैः=अङ्गोपाङ्गैः, दिने दिने=प्रतिदिनम्, "नित्यवीप्सयोः " इतिद्विर्वचनम्, वृद्धिं पुपोष=ववृधे ॥ २२ ॥

( समासः ) समग्राः संपदो यस्य स तस्य । हरिताः अश्वाः यस्य सः हरिदश्वः, तस्य दीधितिः तस्या हरिदश्वदीधितेः ॥ २२ ॥

( वाच्यपरिवर्तनम् ) तेन............बालचन्द्रमसा इव,.........वृद्धिः पुपुषे ॥ २२ ॥

( सरलार्थः ) यथा प्रतिपच्चन्द्रः शुक्लपक्षे सूर्यस्य किरणसम्पर्केण प्रतिदिनं कलाभिः वर्द्धते तथैव सः कुमारोऽपि पितुः प्रयत्नेन मनोरमैरङ्गैः, प्रतिदिनं ववृधे ॥ २२ ॥

---

१ श्री सूर्य्यस्य सुखनाम्नी अमा नाम कला तस्याः प्रवेशात् । चन्द्रमाः किल सूर्य्यरश्मिना रश्मिमान् सन् वर्द्धते ।

( सरलार्थ हिन्दी ) जैसे बालचन्द्र सूर्य्य की किरण के प्रवेश करने से शुक्ल पक्ष में प्रति दिवस एक एक कला बढ़ता है उसी प्रकार राजकुमार रघु भी पिता के उचितप्रयत्नों से प्रतिदिन वृद्धि को प्राप्त करने लगा ॥ २२ ॥

उमावृषाङ्कौ शरजन्मना यथा यथा जयन्तेन शचीपुरन्दरौ ।
तथा नृपः सा च सुतेन मागधी ननन्दतुस्तत्सदृशेन तत्समौ ॥२३॥

( अन्वयः ) यथा, शरजन्मना, उमावृषाङ्कौ, "ननन्दतुः" यथा जयन्तेन, शचीपुरन्दरौ, "नन्दतुः" तथा, तत्सदृशेन सुतेन, तत्समौ, नृपः, मागधी, च, "एतावुभावपि" ननन्दतुः ॥ २३ ॥

( टीका ) यथा = येनप्रकारेण, [1]शरजन्मना = कार्तिकेयेन, कार्तिकेयो महासेनः शरजन्मा षडाननः" इत्यमरः, उमावृषाङ्कौ = पार्वतीपरमेश्वरौ "ननन्दतुः" यथा = येन प्रकारेण, "च" जयन्तेन = जयन्तनामकसुतेन शचीपुन्दरौ इन्द्राणीन्द्रौ, ननन्दतुः = आनन्दम्प्रापतुः, तथा = तेन प्रकारेण, तत्सदृशेन = कार्तिकेयजयन्ततुल्येन, सुतेन = पुत्रेण रघुणा, तत्समौ = उमामहेश्वरशचीपुरन्दरसमानौ, नृपः = राजा दिलीपः, सा मागधी च, "एतौ उभावपि सुदक्षिणादिलीपौ" ननन्दतुः ॥ २३ ॥

( समासः ) शरेषु जन्मास्येति शरजन्मा, येन । शची च पुरन्दरश्च शचीपुरन्दरौ । तयोः समानो दृश्यते इति तत्सदृशस्तेन तत्सदृशेन । तैः समाविति तत्समौ ॥ २३ ॥

---

१ पुरा शिवासार्द्धं केलिभवनमाश्रितवति भगवति चन्द्रमौलीश्वरे, तारकासुरेण वित्रासितो देवगणस्तद्विनाशनाय तत्रोपाजग्मुः ।

केलिभवने महेश्वर इति तत्रस्थैरुपश्रुत्य कालक्षेपमसहमाना देवा अग्निं कपोतरूपं ग्राहयित्वा तत्र प्रेषयामासुः । तं तथाविधमवलोक्य कस्त्वं कपटरूपोऽसि, गृह्यतां मे शुक्रमित्युक्त्वा भगवान् शङ्करस्तस्मै वीर्यं ददौ ।

स च कपोतरूपोऽग्निश्चञ्चुपुटे वीर्यमादाय बहिर्निर्गतः ।

तद्धर्तुमशक्यतया गङ्गायां निचिक्षेप साऽपि परमात्मनस्तद्वीर्यं सोढुमशक्नुवाना शरस्तम्बे निचिक्षेप । तस्मात्तत्र बालो व्यजायत ।

इति तस्य शरभवत्वाच्छरजन्मेत्यस्याभिधानमित्येतिह्यमत्रानुसन्धेयम् ।

१- इतरे द्वन्द्वसमास-

ताभ्यां-

( वाच्यपरिवर्तनम् ) यथा शरजन्मना उमावृषाङ्काभ्यां, यथा जयन्तेन शचीपुरन्दराभ्यां ननन्दे तथा तत्सदृशेन सुतेन तत्समाभ्यां नृपेण तया मागध्या च ( उभाभ्यां ननन्दे ) ॥ २३ ॥

( सरलार्थः ) यथा कार्तिकेयपुत्रप्राप्त्या पार्वतीपरमेश्वरौ आनन्दम्प्रापतुः, जयन्तसुतलाभेन इन्द्राणीन्द्रौ च परमाननन्दतुः तथैव रघुं सुतं लब्ध्वा सुदक्षिणादिलीपावपि परं हर्षम्प्रापतुः ॥२३॥

( सरलार्थ हिन्दी ) जैसे स्वामीकार्तिक के जन्म से महादेव और पार्वती तथा जयन्त के जन्म से पुलोमजा और इन्द्र प्रसन्न हुए थे उसी प्रकार राजा दिलीप और रानी सुदक्षिणा भी उन दोनों पुत्रों के समान पुत्र ( रघु ) को प्राप्त कर अत्यन्त प्रसन्न हुई ॥ २३ ॥

रथाङ्गनाम्नोरिव भावबन्धनं बभूव यत्प्रेम परस्पराश्रयम् ।
विभक्तमप्येकसुतेन तत्तयोः परस्परस्योपरि पर्यचीयत ॥ २४ ॥

( अन्वयः ) तयोः, ( सुदक्षिणादिलीपयोः ) रथाङ्गनाम्नोः, इव, भावबन्धनं, परस्पराश्रयं, यत्, प्रेम, बभूव, तत्, तयोः, एकसुतेन विभक्तमपि, परस्परस्य, उपरि, पर्यचीयत ॥ २४ ॥

( टीका ) तयोः = सुदक्षिणादिलीपयोः, रथाङ्गनाम्नोरिव = चक्रवाकयोरिव, भावबन्धनं = चेतोवृत्तिगुम्फनं, परस्पराश्रयं = अन्योन्यविषयकं, यत्प्रेम = स्नेहः, "प्रेमा ना प्रियता हार्दं प्रेमस्नेहोऽथ दोहदम्" इत्यमरः, बभूव = आसीत्, तत् = प्रेम, एकेन = अद्वितीयेन, सुतेन = पुत्रेण, विभक्तमपि = कृतविभागमपि, परस्परस्योपरि = अन्योन्यस्योपरि, पर्यचीयत = ववृधे ॥ २४ ॥

( समासः ) रथाङ्गनाम्नी च रथाङ्गनामा च रथाङ्गनामानौ, तयोः । भावस्य बन्धनं भावबन्धनं । परस्परः आश्रयो यस्य तत् परस्पराश्रयम् ॥ २४ ॥

( वाच्यपरिवर्तनम् )............भावबन्धनेन परस्पराश्रयेण येन प्रेम्णा बभूवे, तेन.........विभक्तेन अपि ॥ २४ ॥

( सरलार्थः ) चक्रवाकपक्षिणोरिव तयोः सुदक्षिणादिलीपयोः परस्परमखण्डितं यत्प्रेम आसीत् तदेकेन पुत्रेण रघुणा कृतविभागमपि न हीयते स्म प्रत्युत परिवर्द्धते स्म ॥ २४ ॥

( सरलार्थ हिन्दी ) चकवा चकई के समान चित्त के व्यापार को बांधने वाला, रानी सुदक्षिणा और राजा दिलीप का जो परस्पर प्रेम था वह एक पुत्र रघु में बँट जाने पर भी परस्पर एक का दूसरे के ऊपर बढ़ताही गया ॥ २४ ॥

उवाच धात्र्या प्रथमोदितं वचो ययौ तदीयामवलम्ब्य चाङ्गुलिम् ।
अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोऽर्भकः॥२५॥

( अन्वयः ) सः, अर्भकः, धात्र्या, प्रथमोदितं, वचः, उवाच, तदीयाम्, अङ्गुलिं, च, अवलम्ब्य, ययौ, प्रणिपातशिक्षया, च, नम्रः, अभूत्, तेन, पितुः, मुदं, ततान ॥ २५ ॥

(टीका) सः = पूर्वोक्तः, अर्भकः = शिशुः, धात्र्या = उपमात्रा, प्रथमोदितं = प्रथमोपदिष्टं, वचः = वचनम्, उवाच = जगाद, "तथा" तदीयां = धात्रीसम्बन्धिनीम्, अङ्गुलिं = करशाखां, "अङ्गुल्यः करशाखाः स्युः" इत्यमरः, च, अवलम्ब्य = धृत्वा, ययौ = जगाम, प्रणिपातशिक्षया = नमस्कारशिक्षणेन, नम्रः = नमनशीलः, अभूत् = आसीत्, तेन = पूर्वोक्तप्रकारेण, पितुः = जनकस्य, मुदं = हर्षं "मुत्प्रीतिः प्रमदो हर्षः" इत्यमरः, ततान = विस्तारयति स्म ॥ २५ ॥

( समासः ) प्रथमम् उदितमिति प्रथमोदितं । तस्या इयं तदीया तां । प्रकर्षेण निपातः प्रणिपातस्तस्य शिक्षा तया ॥ २५ ॥

( सरलार्थः ) सः कुमारः उपमात्रा उपदिष्टं "पितः" इति वचनं अवोचत् । तस्याः अङ्गुलिम् आलम्ब्य चलितुं प्रारब्धवान् । प्रणामशिक्षणेन च प्रमाणमकरोत् इति तस्य सर्वाणि शैशवविचेष्टितानि आलोक्य दिलीपो नितरां सुखं समाससाद ॥ २५ ॥

( सरलार्थ हिन्दी ) राजकुमार उपमातासे सिखाया हुआ "पिता" ऐसा वचन बोला और उसकी (उपमाता की) अङ्गुली पकड़ कर चलने लगा, बड़ोंको देखकर नम्र होना प्रणाम करना आदि शिक्षासे अति विनीत होकर वह राजादिलीपके आनन्दको बढ़ाता हुआ ॥ २५ ॥

तमङ्कमारोप्य शरीरयोगजैः सुखैर्निषिञ्चन्तमिवामृतं त्वचि ।
उपान्तसम्मीलितलोचनोनृपश्चिरात्सुतस्पर्शरसज्ञतां ययौ ॥ २६ ॥

( अन्वयः ) शरीरयोगजैः, सुखैः, त्वचि, अमृतं, निषिञ्चन्तम्, इव, तं ( सुतम् ) अङ्कम्, आरोप्य, उपान्तसम्मीलितलोचनः नृपः, चिरात्, सुतस्पर्शरसज्ञतां, ययौ ॥ २६ ॥

( टीका ) शरीरयोगजैः = अङ्गसङ्गजनितैः, " अङ्गं प्रतीकोऽवयवोऽपघनोऽथ कलेवरम् । गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः " इत्यमरः, सुखैः = आनन्दैः, त्वचि = त्वगिन्द्रिये, अमृतं = सुधां, " पीयूषममृतं सुधा " इत्यमरः, निषिञ्चन्तमिव = सिञ्चन्तमिव, "वर्षन्तमित्यर्थः" तं = रघुं, अङ्कम् = उत्सङ्गम्, आरोप्य = स्थापयित्वा, उपान्तसम्मीलितलोचनः = प्रान्तप्रमुदितनयनः, नृपः = राजा दिलीपः, चिरात् = बहुकालात् परं, सुतस्पर्शरसज्ञतां = पुत्रस्पर्शरसाभिज्ञत्वं, ययौ = प्राप ॥ २६ ॥

( सरलार्थः ) तदङ्गसङ्गेन सर्वाङ्गेषु सुधामिव सञ्चारयन्तं सुतं स्वाङ्के निधाय अपरिमिताद् आनन्दाच्चक्षुः सम्मीलयन्सः ( दिलीपः ) सुदीर्घसमयात्परं समभिलषितं सुतस्पर्शसुखास्वादनरसं सम्प्राप ॥२६॥

( सरलार्थ हिन्दी ) राजकुमार के अंग के संग से उत्पन्न आनन्द के द्वारा मानों त्वचा पर अमृत बरसाते हुए उस पुत्र को गोद में बैठा आंख बन्द किये राजा दिलीप अभिलषित पुत्र के स्पर्श सुख का आनन्द बहुत कालके अनन्तर प्राप्त करता हुआ ॥ २६ ॥

अमंस्त चानेन परार्ध्यजन्मना स्थितेरभेत्ता स्थितिमन्तमन्वयम् ।
स्वमूर्तिभेदेन गुणाग्र्यवर्तिना पतिः प्रजानामिव सर्गमात्मनः ॥२७॥

( अन्वयः ) स्थितेः, अभेत्ता, प्रजानां पतिः, "सः" परार्ध्यजन्मना, गुणाग्र्यवर्तिना, स्वमूर्तिभेदेन, अनेन, आत्मनः, सर्गम्, इव, अन्वयं स्थितिमन्तम्, अमंस्त, च ॥ २७ ॥

( टीका ) स्थितेः = मर्यादायाः, " मर्यादा धारणा स्थितिः " इत्यमरः, अभेत्ता = अविनाशकः, " पालक इत्यर्थः " "एतेन स्वाचारनिष्ठोक्तिः सूचिता" प्रजानां = जनानां, पतिः = स्वामी दिलीपः, ब्रह्माच, परार्ध्यजन्मना = शोभनोद्भवेन, गुणाग्र्यवर्तिना = सत्वगुणमयेन स्वमूर्तिभेदेन = अवतारभेदेन, विष्णुना, "ब्रह्मत्वं सृजते लोकान् विष्णुत्वे पालयत्यपि रुद्रत्वे संहरत्येष तिस्रोऽवस्थाः स्वयंभुवः " आत्मनः = स्वस्य, सर्गं = सृष्टिं, इव, अन्वयं = वंशं, "सन्ततिर्गो-

त्रजननकुलान्यभिजनान्वयौ । वंशोऽन्ववायः सन्तानः" इत्यमरः, स्थितिमन्तं = प्रतिष्ठावन्तं, अमंस्त = मन्यतेस्म ॥ २७ ॥

(समासः) तिष्ठन्त्यत्रेति स्थितिस्तस्याः स्थितेः । न भेत्तेत्यभेत्ता । प्रकर्षेण जायन्त इति प्रजास्तासां । परार्ध्यजन्म यस्य सः तेन । अग्रे भवमग्र्यं, गुणेष्वग्र्यमिति गुणाग्र्यं तेन वर्तत इति गुणाग्र्यवर्ती, तेन । स्वस्य मूर्तिः स्वमूर्तिः, तस्या भेदस्तेन । सृज्यत इति सर्गस्तम् ॥ २७ ॥

( सरलार्थः ) यथा सृष्टिकर्त्ता ब्रह्मा सत्वगुणमयेन स्वरूपभेदेन आत्मना सृष्टं ब्रह्माण्डे स्थितिमत् मन्यते तथैवासावपि दिलीपः आत्मनः पुत्रेण रघुणा निजं वंशं स्थितिशीलं मन्यते स्म ॥ २७ ॥

( सरलार्थ हिन्दी ) जैसे सत्त्वगुणी विष्णु के अवतार ब्रह्मदेव अपने सृष्टि को स्थिर मानते हुए उसी प्रकार मर्यादा का पालन करने वाला राजा दिलीप भी अपने पुत्र रघुसे वंश को स्थिति वाला मानता हुआ ॥ २७ ॥

स वृत्तचूलश्चलकाकपक्षकैरमात्यपुत्रैः सवयोभिरन्वितः ।
लिपेर्यथावद्ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत् ॥२८॥

( अन्वयः ) वृत्तचूलः, चलकाकपक्षकैः, सवयोभिः, अमात्यपुत्रैः अन्वितः, सः, ( रघुः ) लिपेः, यथावत्, ग्रहणेन, नदीमुखेन, समुद्रमिव, वाङ्मयम्, आविशत् ॥ २८ ॥

( टीका ) वृत्तचूलः = जातचूड़ाकर्म्मा सन्, चलकाकपक्षकैः, = चञ्चलशिखण्डकैः, " काकपक्षः शिखण्डकः " इति हलायुधः, सवयोभिः = समानवयस्कैः, स्निग्धैरिति वा, अमात्यपुत्रैः = मंत्रिसुतैः, अन्वितः = युक्तः, सः = रघुः, लिपेः = पञ्चाशद्वर्णात्मिकायाः, यथावत्, ग्रहणेन = सम्यग्बोधेन, नदीमुखेन = सरिद्द्वारेण, समुद्रमिव = उदधिमिव, "समुद्रोऽब्धिरकूपारः", इत्यमरः, वाङ्मयं = शब्दशास्त्रजातम्, आविशत् ॥ २८ ॥

( समासः ) वृत्तं चूलं चूड़ाख्यङ्कर्म्म यस्य सः । काकपक्षा एव काकपक्षकाः, चलाः काकपक्षका येषां ते चलकाकपक्षकाः तैः । समानानि वयांसि येषान्ते तैः । अमात्यानाम्पुत्रास्तैरमात्यपुत्रैः । नद्या मुखं नदीमुखं, तेन ॥ २८ ॥

( वाच्यपरिवर्तनम् ) वृत्तचूलेन·········अन्वितेन तेन,·········समुद्रः इव वाङ्मयं आविश्यत ॥ २८ ॥

( सरलार्थः ) यथा पोतवणिजो नदीद्वारेण अनन्तसागरं गच्छन्ति तथैव जातचूड़ाकरणसंस्कारो रघुरपि वयस्यैः मन्त्रिपुत्रैः सह वर्णमालाम् अभ्यस्य क्रमशोऽनन्तशब्दशास्त्रपारं गतवान् ॥ २८ ॥

( सरलार्थः हिन्दी ) जैसे मछली मगर घड़ियाल आदि जीव-जन्तु नदियों के द्वारा समुद्र में जाते हैं उसी प्रकार राजकुमार रघु भी " चूड़ाकर्म " संस्कार होने के उपरान्त यथाविधि वर्णमाला को ग्रहण कर शब्दशास्त्र में प्रविष्ट हुआ ॥ २८ ॥

अथोपनीतं विधिवद्विपश्चितो विनिन्युरेनं गुरवो गुरुप्रियम् ।
अवन्ध्ययत्नाश्च बभूवुरत्र ते क्रियाहि वस्तूपहिता प्रसीदति ॥२९॥

( अन्वयः ) अथ, विपश्चितः, गुरवः, विधिवत्, उपनीतं, गुरुप्रियम्, एनं, ( रघुं ) विनिन्युः । अत्र ( रघौ ) ते, ( गुरवः ) अवन्ध्ययत्नाः, बभूवुः, हि, वस्तूपहिता, क्रिया, प्रसीदति ॥ २९ ॥

( टीका ) अथ = अनन्तरं, विपश्चितः = विद्वांसः, " विद्वान्विपश्चिद्दोषज्ञः " इत्यमरः, गुरवः = अध्यापकाः, विधिवत् = यथाशास्त्रं, उपनीतं = कृतोपनयनं, गुरुप्रियं = गुरुप्रीतिकरम्, एनं = रघुं, विनिन्युः, = शिक्षितवन्तः, अत्र = रघौ, ते = गुरवः, अवन्ध्ययत्नाः = सफलप्रयत्नाः, बभूवुः = जाताः, हि = यस्मात् कारणात् वस्तूपहिता = सत्पात्रप्रयुक्ता, क्रिया = कर्म, प्रसीदति = फलति, ॥ २९ ॥

( समासः ) प्रीणातीति प्रियः, गुरूणाम्प्रियो गुरुप्रियस्तम् । अवन्ध्यो यत्नो येषान्तेऽवन्ध्ययत्नाः । वस्तुनि उपहितेति वस्तूपहिता ॥२९॥

( वाच्यपरिवर्तनम् ) अथ विपश्चिद्भिः गुरुभिः विधिवद् उपनीतः गुरुप्रियः एषः विनिन्ये, अत्र तैः अवन्ध्ययत्नैः बभूवे, हि वस्तूपहितया क्रियया प्रसद्यते ॥ २९ ॥

( सरलार्थः ) " गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् । गर्भादेकादशे राज्ञो गर्भाच्च द्वादशे विशः" इति मनुस्मरणात् गर्भैकादशे वर्षे यथाशास्त्रं कृतोपनयनं रघुं विद्वांसः गुरवः विद्याः शिक्षितवन्तः,

१ "पात्रविशेषे न्यस्तं सद्गुणान्तरं व्रजति शिल्पमाधातुः । जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य" इत्येवं समार्थः श्लोकांशः ।

तेच "पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः" इतिन्यायात् सत्पात्रे शिक्षा सफला भवतीत्यनुभवाच्च सत्पात्रं तं रघुम् उपदिश्य सफलप्रयत्नाः सञ्जाताः ॥ २९ ॥

( सरलार्थ हिन्दी ) इसके अनन्तर विद्वान् गुरुवरोंने यज्ञोपवीत संस्कार होने के बाद सम्पूर्ण विद्या उस प्रियराजकुमार रघुको पढ़ाई । सुपात्रमें दी हुई शिक्षा फलीभूत होती है इस न्याय से उस रघुमें उनका परिश्रम सफल हुआ ॥ २९ ॥

धियः समग्रैः स गुणैरुदारधीः क्रमाच्चतस्रश्चतुरर्णवोपमाः ।
ततार विद्याः पवनातिपातिभिर्दिशो हरिद्भिर्हरितामिवेश्वरः ॥३०॥

( अन्वयः ) उदारधीः, सः, ( रघुः ) धियः, समग्रैः, गुणैः, क्रमात्, चतुरर्णवोपमाः, चतस्रः, विद्याः, हरिताम्, ईश्वरः, पवनातिपातिभिः हरिद्भिः, दिशः, इव, ततार ॥ ३० ॥

( टीका ) उदारधीः = उत्कृष्टबुद्धिः, सः = रघुः, धियः = बुद्धेः, समग्रैः = सकलैः, गुणैः = ग्रहणधारणादिभिः, क्रमात् = क्रमशः, चतुरर्णवोपमाः = सागरचतुष्टयसमानाः, " सरस्वान्सागरोऽर्णवः " इत्यमरः, चतस्रः = चतुःसङ्ख्याकाः, विद्याः = आन्वीक्षिक्यादयः, हरितां = दिशाम्, ईश्वरः = स्वामी सूर्य्यः, पवनातिपातिभिः = वाताधिकवेगशीलैः, हरिद्भिः = अश्वैः, दिश इव = आशा इव, ततार = उत्तीर्णवान् ॥ ३० ॥

( समासः ) ध्यायत्यनयेति धीः उदारा धीर्यस्य स उदारधीः । चत्वारोऽर्णवा उपमा यासान्ताश्चतुरर्णवोपमाः । ईशितुं शीलमस्येतीश्वरः । पवनमतिलङ्घ्य पतितुं शीलं येषान्ते तैः ॥ ३० ॥

( वाच्यपरिवर्तनम् ) उदारधिया तेन··············ईश्वरेण इव ततरिरे ॥ ३० ॥

( सरलार्थः ) यथा सूर्यः वेगशालिभिः निजैरश्वैः अपारं दिक्चतुष्टयपारं विनायासेनैव याति तथैव रघुरपि स्वकीयैर्बुद्धिवैभवैरनन्तविद्याचतुष्टयपारं परिश्रमेण विनैव ययौ ॥ ३० ॥

( सरलार्थ हिन्दी ) जैसे सूर्य वायुके समान अतिवेगवाले अपने घोड़ों से चारों दिशाओं को पार करता है उसी प्रकार उदार

बुद्धि वाला राजकुमार रघु भी अपनी बुद्धि के सम्पूर्ण गुणों से चार समुद्रों की समान चारों विद्याओं का पारगामी हुआ ॥ ३० ॥

त्वचं स मेध्यां परिधाय रौरवीमशिक्षतास्त्रं पितुरेव मन्त्रवत् ।
न केवलं तद्गुरुरेकपार्थिवः क्षितावभूदेकधनुर्धरोऽपि सः ॥ ३१ ॥

( अन्वयः ) सः ( रघुः ) मेध्यां, रौरवीं, त्वचं, परिधाय, पितुः, एव, मन्त्रवत्, अस्त्रम्, अशिक्षत, तद्गुरुः, क्षितौ, केवलम्, एकपार्थिवः, न "अभूत" ( किन्तु ) सः, एकधनुर्धरः, अपि, अभूत् ॥ ३१ ॥

( टीका ) सः = रघुः, मेध्यां = पवित्रां, रौरवीं = [1]रुरुमृगसम्बन्धिनीं, रुरुर्महाकृष्णसारः, इति यादवः, त्वचं = चर्म, परिधाय = वसित्वा, पितुः एव = पितृसकाशादेव, "दिलीपादित्यर्थः" मन्त्रवत् = समन्त्रकम्, अस्त्रम् = आग्नेयाद्यस्त्रम्, अशिक्षत = शिक्षितवान्, तद्गुरुः = रघुपिता दिलीपः, क्षितौ = धरण्यां, "धरा धरित्री धरणिः क्षोणीर्ज्या काश्यपी क्षितिः" इत्यमरः, केवलम् एकपार्थिवः = अद्वितीयो राजा एव, न अभूत् = नासीत् "किन्तु" सः = दिलीपः, एकधनुर्धरः, अद्वितीयधनुष्कः, अपि, आसीत् ॥ ३१ ॥

( समासः ) रुरोरियं रौरवी तां । तस्य गुरुस्तद्गुरुः । क्षियतीति क्षितिस्तस्यां । पृथिव्या ईश्वरः पार्थिवः, एकश्चासौ पार्थिवश्चेत्येकपार्थिवः । एकश्चासौ धनुर्धरश्चेत्येकधनुर्धरः ॥ ३१ ॥

( वाच्यपरिवर्तनम् ) तेन ......... अशिक्ष्यत, तद्गुरुणा क्षितौ केवलम् एकपार्थिवेन न अभूयत, तेन एक धनुर्धरेण अपि अभूयत ॥ ३१ ॥

( सरलार्थः ) सः दिलीपः पृथिव्यां केवलम् असाधारणनृपतिरेव न बभूव किन्तु धनुर्वेदेऽपि अद्वितीयः विद्वान् आसीद् अतः स्वयमेव निजं सुतं धनुर्वेदमध्यापयामास । रघुरपि सरहस्यं दिव्यास्त्रसमूहं यथाशास्त्रम् अधीतवान् ॥ ३१ ॥

---

१ धत्ते त्वचं रौरवीमित्येवं समार्थः श्लोकांशः ।

२ रुरुश्चित्रमृगः ॥

( सरलार्थ हिन्दी ) दिलीप केवल चक्रवर्ती राजा ही न था किन्तु पृथ्वी में अद्वितीय धनुर्धारी भी था इसलिये राजपुत्र रघु शुद्ध मृगछाला ओढ़कर अपने पिता से ही सरहस्य अस्त्रविद्या सीखता हुआ ॥ ३१ ॥

महोक्षतां वत्सतरः स्पृशन्निव द्विपेन्द्रभावं कलभः श्रयन्निव ।
रघुः क्रमाद्यौवनभिन्नशैशवः पुपोष गाम्भीर्यमनोहरं वपुः ॥ ३२ ॥

( अन्वयः ) रघुः, क्रमात् यौवनभिन्नशैशवः, " सन् " महोक्षतां स्पृशन्, वत्सतरः, इव, द्विपेन्द्रभावं, श्रयन्, कलभः, इव, गाम्भीर्य-मनोहरं, वपुः, पुपोष ॥ ३२ ॥

( टीका ) रघुः = दिलीपपुत्रः, क्रमात् = क्रमशः, यौवनभिन्न-शैशवः = निरस्तबालभावः सन्, महोक्षतां = महावृषत्वं, स्पृशन् = गच्छन, वत्सतर इव = दम्य इव, "दम्यवत्सतरौ समौ" इत्यमरः, द्विपेन्द्रभावं = गजेन्द्रतां, श्रयन् = आश्रयन, " प्राप्नुवन्नित्यर्थः" कलभ इव = करिशावक इव, " कलभः करिशावकः " इत्यमरः, गाम्भीर्य-मनोहरं = गभीरतारम्यं, निम्नं गभीरं गम्भीरम् " इत्यमरः, वपुः = शरीरं, " गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः " इत्यमरः, पुपोष = अपुषत् ॥ ३२ ॥

( समासः ) यूनोर्भावः यौवनं तेन भिन्नं शैशवं यस्य सः । महाँश्चासावुक्षेति महोक्षस्तस्य भावो महोक्षता, तां । द्वाभ्यां पिबन्तीति द्विपास्तेषामिन्द्रो द्विपेन्द्रस्तस्य भावस्तम् । गम्भीरस्य भावो गाम्भीर्यं, मनोहरतीति मनोहरं, गाम्भीर्येण मनोहरमिति गाम्भीर्य-मनोहरम् ॥ ३२ ॥

( वाच्यपरिवर्तनम् ) रघुणा क्रमात् यौवनभिन्नशैशवेन " सता " महोक्षतां स्पृशता वत्सतरेण इव द्विपेन्द्रभावं श्रयता कलभेन इव ... ... पुपुषे ॥ ३२ ॥

( सरलार्थः ) यथा वत्सतरः प्राप्तयौवनः सन् महोक्षः भवति यथा च गजशिशुः प्राप्तयौवनः सन् महागजो भवति तद्वद्रघुरपि क्रमशः प्राप्तयौवनः सन् पुष्टशरीरावयवः महापुरुषाकृतिः सञ्जातः ॥ ३२ ॥

( सरलार्थ हिन्दी ) जिस प्रकार बछड़ा युवावस्था को प्राप्त हो कर बड़ा बैल होता है तथा हाथी का बच्चा गजेन्द्र होता है उसी प्रकार

राजकुमार रघु भी क्रम से बालपने से यौवनावस्था को प्राप्त कर अपने सुन्दर और कोमल शरीर को पुष्ट करता हुआ ॥ ३२ ॥

**अथास्य गोदानविधेरनन्तरं विवाहदीक्षां निरवर्तयद्गुरुः ।**
**नरेन्द्रकन्यास्तमवाप्य सत्पतिं तमोनुदं दक्षसुता इवाबभुः ॥ ३३ ॥**

( अन्वयः ) अथ, गुरुः, ( दिलीपः ) गोदानविधेः, अनन्तरम्, अस्य, विवाहदीक्षां, निरवर्तयत्, दक्षसुताः, तमोनुदम्, इव, नरेन्द्र-कन्याः, तं, सत्पतिम्, अवाप्य, आबभुः ॥ ३३ ॥

( टीका ) अथ = अनन्तरं, गुरुः = पिता दिलीपः, गोदानविधेः = केशान्ताख्यसंस्कारस्य* अनन्तरं = पश्चात्, अस्य रघोः, विवाहदीक्षां = पाणिपीडनक्रियां, "विवाहसंस्कारमिति यावत्" "विवाहोपयमौ समौ । तथा "परिणयोद्वाहोपयमाः पाणि-पीड़नम्" इत्यमरः, निरवर्तयत् = संपादितवान्, दक्षसुताः = रोहिण्यादयः, तमोनुदं = चन्द्रमिव, "चन्द्राग्न्यर्कास्तमोनुदः" इत्यमरः, "नरेन्द्रकन्याः = राजेन्द्रसुताः, तं = पूर्वोक्तं, सत्पतिं = सत्स्वामिनम्, अवाप्य = प्राप्य, आबभुः = शुशुभिरे ॥ ३३ ॥

( समासः ) गावः = लोमानि, "केशा इत्यर्थः" दीयन्ते = खण्ड्यन्तेऽस्मिन् कर्म्मणीति गोदानं, तस्य विधिस्तस्य । विवाहस्य दीक्षेति विवाहदीक्षा, तां । दक्षस्य सुता इति दक्षसुताः । तमोनुद-तीति तमोनुत् तं । नराणामिन्द्रो नरेन्द्रस्तेषां कन्या इति नरेन्द्रकन्या । सतां पतिरिति सत्पतिः संश्चासौ पतिरिति वा तम् ॥ ३३ ॥

( वाच्यपरिवर्तनम् ) अथ गुरुणा ...... विवाहदीक्षा निरव-र्त्यत, नरेन्द्रकन्याभिः दक्षसुताभिः इव आबभे ॥ ३३ ॥

( सरलार्थः ) दिलीपः प्रथमं कुमारस्य रघोः केशान्तसंस्कारं विधाय अनन्तरं विवाहसंस्कारं कारितवान् । अश्विन्यादयो दक्षक-न्याश्चन्द्रं पतिं प्राप्य यथाऽनन्दं लेभिरे तथैव रघुपरिणीतास्ता राजकन्या अपि तं सत्पतिं लब्ध्वा अमन्दमानन्दमलभन्त ॥ ३३ ॥

( सरलार्थ हिन्दी ) राजा दिलीप ने केशान्त संस्कार करने के उपरान्त उसका विवाह संस्कार किया । जिस प्रकार चन्द्रमा को

---

* तदुक्तं मनुना "केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते । राजन्यबन्धो-र्द्वाविंशे वैश्यस्य द्व्यधिके ततः ॥"

प्राप्त कर दत्तकन्याएँ अत्यन्त शोभित हुईं उसी प्रकार राजकन्यायें भी उस उत्तम पति को प्राप्तकर अधिक शोभा को प्राप्त हुईं ॥ ३३ ॥

युवा युगव्यायतबाहुरंसलः कपाटवक्षाः परिणद्धकन्धरः ।
वपुःप्रकर्षादजयद्गुरुं रघुस्तथापि नीचैर्विनयाददृश्यत ॥ ३४ ॥

( अन्वयः ) युवा, युगव्यायतबाहुः, अंसलः, कपाटवक्षाः, परिणद्धकन्धरः, रघुः, वपुःप्रकर्षात् गुरुम्, अजयत्, तथापि, विनयात्, नीचैः, अदृश्यत ॥ ३४ ॥

( टीका ) युवा = तरुणः, युगव्यायतबाहुः = यानाङ्गदारुविशेषवद्दीर्घभुजः, " यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु " तथा " भुजबाहू प्रवेष्टो दोः " इति चामरः, अंसलः = बलवान्, बलवान्मांसलोंऽसलः " इत्यमरः, कपाटवक्षाः = कपाटवद्विस्तीर्णहृदयः परिणद्धकन्धरः = विशालग्रीवः, " परिणाहो विशालता " इति तथा " कण्ठो गलोऽथ ग्रीवायां शिरोधिः कन्धरेत्यपि " इत्यमरः, रघुः = दिलीपपुत्रः, वपुःप्रकर्षात् = शरीराधिक्यात्, " पुष्टेराधिक्यादित्यर्थः " गुरुं = पितरम्, अजयत् = पराजयत्, तथाऽपि = पितृजयेऽपि, विनयात् = नम्रत्वात्, नीचैः = अल्पकः, "एव" अदृश्यत = दृश्यतेस्म, " एतेनाऽस्यानौद्धत्यं प्रकाशितम् " ॥ ३४ ॥

( समासः ) युगवत् व्यायतौ बाहू यस्य सः, । अंसोऽस्यास्तीत्यंसलः । कपाटवद्विशालं = विस्तीर्णं, वक्षः = हृदयं यस्य सः । कं (शिरः) धारयतीति कन्धरा, परिणद्धा कन्धरा यस्य सः । वपुषः प्रकर्षस्तस्मात् ॥ ३४ ॥

( वाच्यपरिवर्तनम् ) यूना युगव्यायतबाहुना अंसलेन कपाटवक्षसा परिणद्धकन्धरेण रघुणा वपुःप्रकर्षात् गुरुः अजीयत, तथापि जनाः तं विनयात् नीचैः ददृशुः ॥ ३४ ॥

( सरलार्थः ) कपाटवद्विशालहृदयो दीर्घभुजो दृढकन्धरः सबलो रघुः विपुलशरीरसौभाग्येन गुरुं दिलीपं विजित्याऽपि विनयात् पितृसमीपे क्षुद्रतर एव लक्ष्यतेस्म ॥ ३४ ॥

( सरलार्थ हिन्दी ) यद्यपि राजकुमार रघु अपनी पूर्णजवानी की अवस्थाको प्राप्त कर हस्तपादादि अवयवोंके अधिक पुष्टताके कारण पिताके शरीरको जीतता हुआ तथापि अत्यन्त विनयशालिता के कारण छोटा ही दिखाई देता था ॥ ३४ ॥

ततः प्रजानां चिरमात्मना धृतां नितान्तगुर्वीं लघयिष्यता धुरम् ।
निसर्गसंस्कारविनीत इत्यसौ नृपेण चक्रे युवराजशब्दभाक् ॥३५॥

( अन्वयः ) ततः, चिरम्, आत्मना, धृतां, नितान्तगुर्वीं, प्रजानां, धुरं, लघयिष्यता, नृपेण, निसर्गसंस्कारविनीतः, इति, ( हेतोः ) असौ, ( रघुः ) युवराजशब्दभाक्, चक्रे ॥ ३५ ॥

( टीका ) ततः=तदनन्तरं, चिरं=बहुकालम्, आत्मना=स्वेन, धृताम्=ऊढ़ां, नितान्तगुर्वीं=गुरुतरां, प्रजानां=जनानां, "प्रजा स्यात्सन्ततौ जने" इत्यमरः, धुरं=भारं, लघयिष्यता=लघूकरिष्यता, नृपेण=राज्ञा दिलीपेन, निसर्गसंस्कारविनीतः=स्वभावतः शास्त्राऽभ्यासेन च नम्रः, इति=हेतोः, असौ=रघुः, युवराजशब्दभाक्=युवराजइत्यभिधानवान्, चक्रे=कृतः, यौवराज्येऽभिषिक्त इत्यर्थः ॥३५॥

( समासः ) प्रजायन्त इति प्रजास्तासां । निसर्गश्च संस्कारश्च निसर्गसंस्कारौ ताभ्यां विनीत इति निसर्गसंस्कारविनीतः । युवा चासौ राजेति युवराजः, स चासौ शब्दश्च इति युवराजशब्दः, तं भजतीति युवराजशब्दभाक् । लघयिष्यतीति, लघयिष्यन्तेन लघयिष्यता ॥ ३५ ॥

( वाच्यपरिवर्तनम् ) ततः............लघयिष्यन् नृपः......असुं युवराजशब्दभाजं चकार ॥ ३५ ॥

( सरलार्थः ) विविधविद्याविद्योतितान्तःकरणं कुमारमवलोक्य दिलीपस्तं यौवराज्येऽभ्यषिञ्चत् ततः स्वप्रजासंरक्षणस्वरूपभारं शिथिलीकृत्य ( लघूकृत्य ) नितरां शान्तिमलभत ॥ ३५ ॥

( सरलार्थ हिन्दी ) बहुत काल से धारण किये हुये प्रजापालन के भार को हलका करनेकी इच्छा करता हुआ राजा दिलीप सम्पूर्ण विद्या को जानने वाले और संस्कार से विनीत राजकुमार रघु को युवराज पद पर आरूढ़ करता हुआ ॥ ३५ ॥

नरेन्द्रमूलायतनादनन्तरं तदास्पदं श्रीर्युवराजसंज्ञितम् ।
अगच्छदंशेन गुणाभिलाषिणी नवावतारं कमलादिवोत्पलम् ॥३६॥

( अन्वयः ) गुणाभिलाषिणी, श्रीः, नरेन्द्रमूलायतनात्, अनन्तरं युवराजसंज्ञितम्, तदास्पदं, अंशेन, कमलात्, नवावतारम्, उत्पलम्, इव, अगच्छत् ॥ ३६ ॥

( टीका ) गुणाभिलाषिणी = दयादाक्षिण्यविनयाद्यभिकाङ्क्षिणी, श्रीः = राजलक्ष्मीः, पद्मालया च, नरेन्द्रमूलायतनात् = दिलीपरूपप्रधानस्थानात्, अनन्तरं = सन्निहितं, युवराजसंज्ञितं = युवराजनामकं, तदास्पदं = रघुरूपं स्थानं, अंशेन = भागेन, कमलात् = चिरोत्पन्नात् पद्मात्, "वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् । सहस्रपत्रं कमलं शतपत्रं कुशेशयम्" इत्यमरः, नवावतारं = नवीनोत्पन्नम्, उत्पलम् इव = पद्ममिव, अगच्छत् = अगमत् ॥ ३६ ॥

( समासः ) गुणानभिलषतीति गुणाभिलाषिणी । श्रीयते सर्वैः श्रयति गुणिनं वेति श्रीः । मूलञ्च तदायतनमिति मूलायतनं, नरेन्द्र एव मूलायतनमिति नरेन्द्रमूलायतनं, तस्मात् । अविद्यमानम् अन्तरं यस्य तत् । युवराज इति संज्ञा सञ्जाताऽस्येति युवराजसंज्ञितम् । स रघुरेवास्पदं यस्य तत्तदास्पदं । नवोऽवतारो यस्य तत् नवावतारम् ॥ ३६ ॥

(वाच्यपरिवर्तनम्) गुणाभिलाषिण्या श्रिया........अगम्यत ॥३६॥

( सरलार्थः ) यथा लक्ष्मी जीर्णपर्णं कमलं परित्यज्य नवविकसितं कमलमाश्रयति तथैव विनयनीतिनैपुण्यादिगुणगणाभिलाषिणी राजलक्ष्मीरपि वृद्धं महाराजं दिलीपं त्यक्त्वा "स्त्रियो हि यूनि रज्यन्त" इति नियमात् युवराजं रघुम् अशिश्रियत ॥ ३६ ॥

( सरलार्थ हिन्दी ) गुणों में अनुराग रखनेवाली राजलक्ष्मी राजा रूपी मुख्य स्थान से निकल कर युवराजपदवी वाले रघुरूपी स्थान को, शोभा पुराने कमल से नये कमल के समान प्राप्त हुई ॥ ३६ ॥

विभावसुः सारथिनेव वायुना घनव्यपायेन गभस्तिमानिव ।
बभूव तेनातितरां सुदुःसहः कटप्रभेदेन करीव पार्थिवः ॥ ३७ ॥

( अन्वयः ) सारथिना, वायुना, विभावसुः, इव, घनव्यपायेन, गभस्तिमान्, इव, कटप्रभेदेन, करी इव, पार्थिवः, तेन, अतितरां, सुदुःसहः, बभूव ॥ ३७ ॥

( टीका ) सारथिना = सारथिभूतेन, वायुना = पवनेन, विभावसुः = वह्निः, 'सूर्यवह्नी विभावसू' "विभावसुः पुमान् सूर्ये हारभेदे च पावके" इत्यमरमेदिन्यौ, इव = यथा, घनव्यपायेन = मेघविनाशेन, "शरत्समयेनेत्यर्थः" गभस्तिमान् = सूर्यः, इव, कटप्रभेदेन =

गण्डस्फुटनेन, "मदोदयेनेत्यर्थः" "गण्डः कटो मदो दानम्" इत्यमरः, करीव=गज इव "मतंगजो गजो नागः कुञ्जरो वारणः करी" इत्यमरः, राजा दिलीपः, तेन=रघुणा, अतितराम्=अत्यन्तं, सुदुःसहः=सोढुमशक्यः, अर्थात् शत्रुभिरजेयो बभूव ॥ ३७ ॥

( समासः ) विभा ( प्रभा ) एव वसु धनं यस्य सः । सरति रथेनेति सारथिः, तेन । घनानां व्यपायः नाशो यत्र तेन । कटस्य प्रभेद इति कटप्रभेदस्तेन । पृथिव्या ईश्वरः पार्थिवः ॥ ३७ ॥

( वाच्यपरिवर्तनम् )·········विभावसुना इव,·······गभस्तिमता इव, करिणा इव, पार्थिवेन सुदुःसहेन बभूवे ॥ ३७ ॥

( सरलार्थः ) पवनसाहाय्येन वह्निः यथा दुःसहो जायते गतघनस्य शरत्कालस्य साहाय्येन सूर्यो यथा दुःसहो जायते मदोदयेन गजोऽपि यथा दुःसहो जायते, तथैव राजा दिलीपोऽपि प्रबलप्रतापस्य रघोः साहाय्येन दुःसहतरो जातः ॥ ३७ ॥

( सरलार्थ हिन्दी ) वायुरूप सारथी से अग्नि जिस प्रकार असह्य होता है, मेघों के चले जाने से सूर्य जिस प्रकार असह्य होता है, मदोन्मत्त हाथी जैसे असह्य होता है, उसी प्रकार राजा दिलीप भी रघु की सहायता से अत्यन्त असह्य हुआ ॥ ३७ ॥

**नियुज्य तं होमतुरङ्गरक्षणे धनुर्धरं राजसुतैरनुद्रुतम् ।**
**अपूर्णमेकेन शतक्रतूपमः शतं क्रतूनामपविघ्नमाप सः ॥ ३८ ॥**

( अन्वयः ) शतक्रतूपमः, सः, ( दिलीपः ) राजसुतैः, अनुद्रुतम्, धनुर्धरं, तं, ( रघुम् ) होमतुरङ्गरक्षणे, नियुज्य, एकेन, अपूर्णं, क्रतूनां, शतम्, अपविघ्नम्, आप ॥ ३८ ॥

( टीका ) शतक्रतूपमः=इन्द्रतुल्यः, सः=दिलीपः, राजसुतैः=सामन्तराजपुत्रैः, अनुद्रुतं=अनुगतं, धनुर्धरं=धानुष्कं, तं=रघुं, होमतुरङ्गरक्षणे=आश्वमेधिकाश्वरक्षणे, "घोटकेऽपीतितुरगतुरङ्गाश्च तुरङ्गमाः" इत्यमरः, नियुज्य=व्यापार्य, एकेन=एकसङ्ख्याकेन, क्रतुना, अपूर्णम्=एकोनं, क्रतूनाम्=अश्वमेधानां, शतं=शतसंख्यापरिमाणम्, अपविघ्नं=विगतविघ्नं, "यथा स्यात्तथा" आप=प्राप ॥ ३८ ॥

(समासः) शतं क्रतवः यागा अस्य इति शतक्रतुः स उपमा यस्य सः शतक्रतूपमः । राज्ञां सुताः राजसुतास्तैः । धनुषो धर इति धनुर्धरस्तं । तुरेण त्वरया गच्छन्तीति तुरङ्गाः, होमार्थाः तुरङ्गा होमतुरङ्गास्तेषां रक्षणं तस्मिन् । अपगतो विघ्नो यस्मात्तदपविघ्नम् ॥ ३८ ॥

( वाच्यपरिवर्तनम् ) शतक्रतूपमेन तेन ·········आपे ॥ ३८ ॥

( सरलार्थः ) इन्द्रतुल्यप्रतापो दिलीपः अनुचरभूतैर्माण्डलिकराजकुमारैरनुगतं रघुं आश्वमेधिकाश्वरक्षणे नियुज्य क्रमेण एकोनशतं ( नवनवतिसंख्याकम् ) " ९९ " अश्वमेधान् निर्विघ्नं समाप्तिमनयत् ॥ ३८ ॥

( सरलार्थ हिन्दी ) इन्द्र के समान प्रतापी राजा दिलीप राजकुमारों से युक्त धनुर्धारी रघु को अश्वमेध यज्ञ में छोड़े हुए अश्वकी रक्षा करने में नियुक्त कर क्रमसे निन्यानवे यज्ञ निर्विघ्न समाप्त करता हुआ ॥ ३८ ॥

ततः परं तेन मखाय यज्वना तुरङ्गमुत्सृष्टमनर्गलं पुनः ।
धनुर्भृतामग्रत एव रक्षिणां जहार शक्रः किल गूढविग्रहः ॥ ३९ ॥

( अन्वयः ) ततः, परं, यज्वना, तेन, ( दिलीपेन ) पुनः, मखाय, उत्सृष्टम्, अनर्गलं, तुरङ्गं, शक्रः गूढविग्रहः, "सन्" धनुर्भृतां, रक्षिणाम्, अग्रतः एव, जहार, किल ॥ ३९ ॥

( टीका ) ततः परं=एकोनशतयज्ञावाप्त्यनन्तरं, यज्वना=विधिनेष्टवता, " यज्वा तु विधिनेष्टवान् " इत्यमरः, तेन=दिलीपेन, पुनः=भूयः, मखाय=यज्ञाय, " यागङ्कर्तुमित्यर्थः " " यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः " इत्यमरः, उत्सृष्टं=विमुक्तं, अनर्गलं=अप्रतिबन्धं, स्वैरगति, तुरङ्गम=अश्वं, शक्रः=इन्द्रः, गूढविग्रहः=गुप्तकायः, " सन् " " अन्तर्हितशरीरः सन् " अर्थादात्मानं निगुह्य " धनुर्भृतां=धनुर्धारिणां, रक्षिणां=रक्षकाणाम्, अग्रतः=पुरस्तात्, एव, जहार=अपहृतवान् ॥ ३९ ॥

( समासः ) नास्त्यर्गला यस्य स तं अनर्गलं । गूढः विग्रहो येन सः । धनूंषि बिभ्रतीति तेषां ॥ ३९ ॥

( वाच्यपरिवर्तनम् ) ततः·······पुनः मखाय उत्सृष्टः अनर्गलः तुरङ्गः शक्रेन गूढविग्रहेन ( सता ) ······जह्रे ॥ ३९ ॥

( सरलार्थः ) अथ एकोनशतयागसमाप्त्यनन्तरं दिलीपः पुनराश्वमेधिकम् अश्वं मुमोच, तदा पुरन्दरः प्रच्छन्नरूपः सन् धनुर्धारिणां रक्षकाणां पुरत एव तमश्वम् अपजहार ॥ ३९ ॥

( सरलार्थ हिन्दी ) इसके अनन्तर १०० वाँ यज्ञ करने के लिये राजा दिलीप के छोड़े हुए घोड़े को, इन्द्र गुप्त शरीर होकर रक्षकों के सामने से ही हरण करता हुआ ॥ ३९ ॥

विषादलुप्तप्रतिपत्ति विस्मितं कुमारसैन्यं सपदि स्थितं च तत् ।
वसिष्ठधेनुश्च यदृच्छयागता श्रुतप्रभावा ददृशेऽथ नन्दिनी ॥४०॥

( अन्वयः ) ततः, कुमारसैन्यं, सपदि, विषादलुप्तप्रतिपत्ति, विस्मितं, स्थितं, च अथ, श्रुतप्रभावा, यदृच्छया, आगता, वसिष्ठधेनुः, नन्दिनी, च, ददृशे ॥ ४० ॥

( टीका ) ततः = अश्वहरणानन्तरं "अष्टत्रिंशच्छ्लोकोक्तम्" कुमारसैन्यं = रघुसेना, सपदि = सद्यः, " सद्यः सपदि तत्क्षणे " इत्यमरः, विषादलुप्तप्रतिपत्ति = चेतोभङ्गविनष्टेतिकर्तव्यताकज्ञानम्, "अत एव" विस्मितं = साश्चर्य्यं " सत् " "निश्चलं" स्थितं, च, अथ = अनन्तरं, श्रुतप्रभावा = विख्यातरघूत्पत्तिवरप्रदानरूपप्रतापा, " आकर्णितमाहात्म्या" इति वा, यदृच्छया = स्वेच्छया, " स्वेच्छा यदृच्छा स्वच्छन्दः स्वैरता चेति ते समाः " इति केशवः, नन्दिनी = नन्दिनीनाम्नी वसिष्ठधेनुः, च, ददृशे = दृष्टा, "द्वौ चकारौ तुल्यकालापेक्षां गमयतः ॥४०॥

( समासः ) सेना एव सैन्यं, कुमारस्य सैन्यमिति कुमारसैन्यम् । विषादेन लुप्ता प्रतिपत्तिर्यस्य तद्विषादलुप्तप्रतिपत्ति । श्रुतः प्रभावो यस्याः सा । वसिष्ठस्य धेनुरिति वसिष्ठधेनुः ॥

( वाच्यपरिवर्तनम् ) तेन कुमारसैन्येन विषादलुप्तप्रतिपत्तिना ( सता ) विस्मितेन स्थितम्.........आगतां श्रुतप्रभावां वसिष्ठधेनुं नन्दिनीं जनाः ददृशुः ॥ ४० ॥

( सरलार्थः) तस्य आश्वमेधिकाश्वस्य झटिति तिरोधानात् रघुसैनिकाः यदा एव इतिकर्तव्यताकज्ञानशून्या बभूवुः तदैव विख्यातमाहात्म्या वसिष्ठहोमधेनुर्नन्दिनी निजेच्छया तत्र समाययौ ॥ ४० ॥

( सरलार्थ हिन्दी ) कुमार की सेना, सहसा घोड़े के लुप्त होजाने से अश्वमेध यज्ञ पूर्तिरूप मनोरथ भङ्ग होने के कारण ज्योंही ज्ञान

शून्य हुई (अर्थात् उस समयके उचित कर्तव्यका निश्चय न कर सकी) त्योंही अपनी इच्छा से आई हुई वसिष्ठनन्दिनी दृष्टिगोचर हुई ॥४०॥

तदङ्गनिष्यन्दजलेन लोचने प्रमृज्य पुण्येन पुरस्कृतः सताम् ।
अतीन्द्रियेष्वप्युपपन्नदर्शनो बभूव भावेषु दिलीपनन्दनः ॥४१॥

( अन्वयः ) सताम्, पुरस्कृतः, दिलीपनन्दनः, पुण्येन, तदङ्गनिष्यन्दजलेन, लोचने, प्रमृज्य, अतीन्द्रियेषु, अपि, भावेषु, उपपन्नदर्शनः, बभूव ॥ ४१ ॥

( टीका ) सतां = सज्जनानां "मध्ये" पुरस्कृतः = पूजितः, दिलीपनन्दनः = रघुः, पुण्येन = पवित्रेण, तदङ्गनिष्यन्दजलेन = नन्दिन्यङ्गगलितपयसा, लोचनं = नयनं, "लोचनं नयनं नेत्रम्" इत्यमरः, प्रमृज्य = शोधयित्वा, अतीन्द्रियेषु = परोक्षेषु, अपि, भावेषु = वस्तुषु, उपपन्नदर्शनः = प्राप्तसाक्षात्कारशक्तिः, बभूव = अभूत् ॥ ४१ ॥

(समासः) पुरः अकारीति पुरस्कृतः । नन्दयतीति नन्दनः, दिलीपस्य नन्दन इति दिलीपनन्दनः । तस्या अङ्गं तदङ्गं, तस्य निष्यन्दः स एव जलं तेन । " मूत्रेणेत्यर्थः " । लोचने, लोच्यन्ते घटपटादय आभ्यामिति ते लोचने । इन्द्रियाण्यतिक्रान्ता इत्यतीन्द्रियास्तेषु । उपपन्नं दर्शनं यस्य सः ॥ ४१ ॥

( वाच्यपरिवर्तनम् ) सतां पुरस्कृतेन दिलीपनन्दनेन..........अपि भावेषु उपपन्नदर्शनेन बभूवे ॥ ४१ ॥

( सरलार्थः ) सद्भिः सत्कृतः स रघुः वसिष्ठनन्दिन्याः मूत्रेण लोचने प्रक्षाल्य अतीन्द्रियाणाम् अपि पदार्थानां समवलोकने सामर्थ्यं प्राप॥४१॥

( सरलार्थ हिन्दी ) सज्जनों से सत्कृत रघु नन्दिनी के मूत्र से अपने नयनों को धोकर ( नयनों को लगा कर ) अदृश्य पदार्थों के भी देखने की शक्ति प्राप्त करता हुआ ॥ ४१ ॥

स पूर्वतः पर्वतपक्षशातनं ददर्श देवं नरदेवसंभवः ।
पुनः पुनः सूतनिषिद्धचापलं हरन्तमश्वं रथरश्मिसंयतम् ॥४२॥

( अन्वयः ) सः, नरदेवसम्भवः, (रघुः) पुनः, पुनः, सूतनिषिद्धचापलं, रथरश्मिसंयतम्, अश्वं, हरन्तं, पर्वतपक्षशातनं, देवं, पूर्वतः, ददर्श ॥ ४२ ॥

( टीका ) सः = पूर्वोक्तः, नरदेवसम्भवः = दिलीपप्रभवः, "रघुः" पुनः पुनः = भूयोभूयः, सूतनिषिद्धचापलं = सारथिनिवारितौद्धत्यं, रथरश्मिसंयतं = स्यन्दनप्रग्रहबद्धं, "किरणप्रग्रहौ रश्मी" इत्यमरः, अश्वं = तुरङ्गं, हरन्तम् = अपहृत्य नयन्तं, पर्वतपक्षशातनं गिरिपक्षच्छेदकं, देवं = इन्द्रं, पूर्वतः = पूर्वस्यान्दिशि, ददर्श = अवलोकयामास ॥ ४२ ॥

( समासः ) नराणां देवो नरदेवस्तस्मात्सम्भवो यस्य सः । सूतेन निषिद्धं चापलं यस्य तं । रथस्य रश्मयस्तैः संयतस्तम् । हरतीति हरन् तम् । पर्वतानां पक्षाः पर्वतपक्षाः, तान् शातयतीति तथोक्तस्तम् ॥ ४२ ॥

(सरलार्थः) एवं नन्दिनीमूत्रप्रक्षालितनेत्रः अत एव प्राप्तदिव्यचक्षुः स रघुः पूर्वस्यान्दिशि रथरश्मिसम्बद्धं मातलिना वारितचाञ्चल्यं अश्वम् अपहरन्तम् इन्द्रं ददर्श ॥ ४२ ॥

( सरलार्थ हिन्दी ) रघु, गोमुत्र से नेत्र धोने के कारण दिव्य चक्षु प्राप्त कर पूर्व दिशा में रथ की डोर से बंधा घोड़ा हरते हुए इन्द्र को देखता हुआ ॥ ४२ ॥

शतैस्तमक्ष्णामनिमेषवृत्तिभिर्हरिं विदित्वा हरिभिश्च वाजिभिः ।
अवोचदेनं गगनस्पृशा रघुः स्वरेण धीरेण निवर्त्तयन्निव ॥ ४३ ॥

( अन्वयः ) रघुः, अनिमेषवृत्तिभिः, अक्ष्णां, शतैः, हरिभिः, वाजिभिः, च, तं, हरिं, विदित्वा, गगनस्पृशा, धीरेण, स्वरेण, एनं, ( हरिं ) निवर्तयन्, इव, अवोचत् ॥ ४३ ॥

( टीका ) रघुः, अनिमेषवृत्तिभिः = निर्निमेषव्यापारैः, अक्ष्णां = नेत्राणां, शतैः = दशशतसङ्ख्याकैः, हरिभिः = कपिलवर्णैः, "हरिर्ना कपिले त्रिषु" इत्यमरः, वाजिभिः = घोटकैः, च, तं = पूर्वोक्तं, हरिम् = इन्द्रं, विदित्वा = ज्ञात्वा, गगनस्पृशा = आकाशव्यापिना, धीरेण = गम्भीरेण, स्वरेण = ध्वनिनैव, एनं = हरिं, निवर्तयन्निव = व्यावर्तयन्निव, अवोचत् = उवाच ॥ ४३ ॥

( समासः ) अनिमेषा वृत्तिर्येषान्ते तैः । गगनं स्पृशतीति तेन॥४३॥

( वाच्यपरिवर्तनम् ) रघुणा……… ………निवर्तयता इव एषः अवोचि ॥ ४३ ॥

( सरलार्थः ) रघुः अश्वापहर्तुः निमेषरहितलोचनसहस्रं कपिलवर्णानश्वांश्च वीक्ष्य "अयमिन्द्रः" इति ज्ञात्वा भयरहितः सन् तं परावर्तयन्निव घनवत् गम्भीरेण शब्देन सम्बोधयामास ॥ ४३ ॥

( सरलार्थ हिन्दी ) रघु, पलक न चलानेवाले सैकड़ों नेत्रों और कपिल वर्ण वाले घोड़ोंको देख उसे इन्द्र समझ कर आकाशव्यापी गम्भीर शब्द से लौटाते हुए की समान बोला ॥ ४३ ॥

**मखांशभाजां प्रथमो मनीषिभिस्त्वमेव देवेन्द्र ! सदा निगद्यसे ।**
**अजस्रदीक्षाप्रयतस्य मद्गुरोः क्रियाविघाताय कथं प्रवर्तसे ॥४४॥**

( अन्वयः ) हे देवेन्द्र !, मनीषिभिः, सदा, त्वम् , एव, मखांशभाजां, प्रथमः, निगद्यसे, ( यदा-तदा ) अजस्रदीक्षाप्रयतस्य, मद्गुरोः, क्रियाविघाताय, कथं, प्रवर्त्तसे ॥ ४४ ॥

( टीका ) हे देवेन्द्र = हे सुरनायक !, मनीषिभिः = विद्वद्भिः, सदा = सर्वदा, त्वमेव, मखांशभाजां = यागभागभुजां, "मध्ये" "यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः " इत्यमरः, प्रथमः = आद्यः, निगद्यसे = कथ्यसे, "तथापि" "त्वमेव" अजस्रदीक्षाप्रयतस्य = नित्यदीक्षातत्परस्य, "सावधानस्य" इति वा, मद्गुरोः = ममपितुः, क्रियाविघाताय = यागविनाशाय, कथं प्रवर्तसे = कस्मात्प्रवृत्तो भवसि ॥४४॥

( समासः ) देवानामिन्द्रो देवेन्द्रस्तत्सम्बुद्धौ । मखस्य अंशान् भजन्तीति मखाशभाजस्तेषां । अजस्रा या दीक्षा तस्यां प्रयतस्तस्य । मम गुरुर्मद्गुरुस्तस्य । विशेषेण घातो विघातः, क्रियाया विघातः क्रियाविघातस्तस्मै ॥ ४४ ॥

( वाच्यपरिवर्तनम् ) हे देवेन्द्र ! मनीषिणः सदा त्वां एव मखांशभाजां प्रथमः "इति" निगदन्ति, त्वया ……………कथं प्रवृत्यते ॥४४॥

( सरलार्थः ) हे देवेन्द्र ! त्वमेव यज्ञभागभुजां देवानाम् अग्रगण्योऽसि इति बुधाः वदन्ति तथा मे तातोऽपि श्रीमतामेव प्रसादाय अविरतं यज्ञनिरतो वर्तते तत्कुतोऽयं तस्यैव यागकर्मणि तव महान्विघ्नप्रसारप्रयासः ॥ ४४ ॥

( सरलार्थ हिन्दी ) हे इन्द्र विद्वानों ने जब आपको यज्ञका भाग लेने वालों में प्रधान कहा है तो स्वयं आपही यज्ञ दीक्षा में तत्पर हमारे पिताका कर्म बिगाड़नेको कैसे प्रवृत्त होते हो ॥ ४४ ॥

त्रिलोकनाथेन सदा मखद्विषस्त्वया नियम्या ननु दिव्यचक्षुषा।
स चेत्स्वयं कर्मसु धर्मचारिणां त्वमन्तरायो भवसि च्युतो विधिः॥४५॥

( अन्वयः ) दिव्यचक्षुषा, त्रिलोकनाथेन, त्वया, ननु, मखद्विषः, सदा, नियम्याः, चेत्, सः, त्वं, स्वयं ( एव ) धर्मचारिणां, कर्मसु, अन्तरायः, भवसि ( तदा ) विधिः, च्युतः, ( स्यात् ) ॥ ४५ ॥

( टीका ) दिव्यचक्षुषा = परोक्षार्थदर्शिना, त्रिलोकनाथेन = त्रैलोक्याधिपातना, त्वया = भवता, ननु = निश्चयेन, मखद्विषः = यागविघातकाः, "दैत्या इत्यर्थः" सदा = सर्वदा, नियम्याः = दण्ड्याः, खलु, चेत्, = यदि, "पक्षान्तरे चेद्यदि च" इत्यमरः, सः = एतादृशः, त्वम्, "एव" = भवानेव, स्वयं, धर्मचारिणां = धर्मरतानां "महात्मनां" कर्मसु = यागादिषु, अन्तरायः = विघ्नकारी, भवसि, "तदा" विधिः = अनुष्ठानं, "सुकृताचरणम्" इति वा, च्युतः = विनष्टः = पूज्यदोष-दर्शनेन नष्टः स्यात् ॥ ४५ ॥

( समासः ) दिव्यानि चक्षूंषि यस्य सः तेन। त्रयाणां लोकानां नाथ इति त्रिलोकनाथस्तेन। मखान्द्विषन्तीति मखद्विषः। धर्मश्चर-न्तीति तेषां ॥ ४५ ॥

( वाच्यपरिवर्तनम् ) दिव्यचक्षुः त्रिलोकनाथः त्वं मखद्विषः सदा नियच्छेः ननु। तेन त्वया·········अन्तरायेण भूयते ॥ ४५ ॥

( सरलार्थः ) यदि नाम कश्चन खलो यज्ञादिधर्म्मकार्यस्य विघातं करोति तदा किल लोकत्रयशासकेन त्वया एव सः दण्डनीयः, भवति, किन्तु यदि स्वयं त्वमेव धर्मरक्षको भूत्वा धर्म्मिणां सत्क्रियाः विहँसि तदा लोकेषु सत्कर्म्मकथैव अस्तमियात्, रक्षको भक्षको न भवतीति तात्पर्यार्थः ॥ ४५ ॥

( सरलार्थ हिन्दी ) आप को तो यज्ञ में विघ्न उत्पन्न करने वाले दुष्टों का नाश करना चाहिये और यदि आप ऐसा न कर स्वयं ही साधु महात्माओं के पुण्य कर्म में विघ्न करोगे तो यज्ञादि पुण्य कर्म्म ही नष्ट हो जायगा कोई इसका नाम भी न लेगा ॥ ४५ ॥

तदङ्गमग्र्यं मघवन्महाक्रतोरमुं तुरङ्गं प्रतिमोक्तुमर्हसि।
पथः श्रुतेर्दर्शयितार ईश्वरा मलीमसामाददते न पद्धतिम् ॥४६॥

( अन्वयः ) हे मघवन् ! तत्, ( तस्मात्कारणात् ) महाक्रतोः, अग्र्यं, अङ्गं, अमुं, तुरङ्गं, प्रतिमोक्तुं, ( त्वम् ) अर्हसि, श्रुतेः, पथः, दर्शयितारः, ईश्वराः, मलीमसां, पद्धतिं, न, आददते ॥ ४६ ॥

( टीका ) हे मघवन्! = हे इन्द्र !, "इन्द्रो मरुत्वान्मघवा" इत्यमरः, तत् = तस्मात्कारणात्, महाक्रतोः = अश्वमेधस्य, अग्र्यं = अग्रे भवमग्र्यं = श्रेष्ठं, "प्रधानीभूतं" इति वा, अमुं = पुरोवर्तिनं, तुरङ्गं = अश्वं, प्रतिमोक्तुं = प्रतिदातुं, "त्वं" अर्हसि = योग्यो भवसि श्रुतेः = वेदस्य, पथः, = मार्गस्य, दर्शयितारः = अवलोकयितारः, "सत्पथप्रदर्शकाः" इति वा, ईश्वराः = निग्रहानुग्रहसमर्थाः, भवादृशाः, "महान्त इत्यर्थः" मलीमसां = मलदूषितां, "मलिनां" निन्दितामितिवा," "मलीमसं तु मलिनं कच्चरं मलदूषितम्" इत्यमरः, पद्धतिं = मार्गं, नाददते = न स्वीकुर्वते ॥ ४६ ॥

( समासः ) महांश्चासौ क्रतुरिति महाक्रतुस्तस्य । श्रूयते धर्मोऽनयेति श्रुतिः, तस्याः ॥ ४६ ॥

( वाच्यपरिवर्तनम् ) तत्............हे मघवन्!.................. त्वया अर्ह्यते ।............ दर्शयितृभिः ईश्वरैः मलीमसा पद्धतिः न आदीयते ॥ ४६ ॥

( सरलार्थः ) अस्मात्कारणात् हे इन्द्र ! मम पितुः अश्वमेधयज्ञस्य प्रधानाङ्गभूतमिममश्वं देहि, धर्ममार्गप्रवर्तकाः भवादृशाः महान्तः स्वयमेव धर्मकार्यविघातका भवितुं नार्हन्ति ॥ ४६ ॥

( सरलार्थ हिन्दी ) हे इन्द्र ! मेरे पिता के अश्वमेध यज्ञ के प्रधान अङ्ग इस घोड़े को मुझे दे दीजिये । वेद मार्ग को बताने वाले सत्पुरुष बुरे मार्ग पर नहीं जाते ॥ ४६ ॥

इति प्रगल्भं रघुणा समीरितं वचो निशम्याधिपतिर्दिवौकसाम् ।
निवर्तयामास रथं सविस्मयः प्रचक्रमे च प्रतिवक्तुमुत्तरम् ॥४७॥

( अन्वयः ) दिवौकसाम्, अधिपतिः, इति, प्रगल्भं, रघुणा, समीरितं, वचः, निशम्य, सविस्मयः ( सन् ), रथं, निवर्तयामास, उत्तरं, च, प्रतिवक्तुं, प्रचक्रमे ॥ ४७ ॥

( टीका ) दिवौकसां = देवानाम्, "अमरा निर्जरा देवास्त्रिदशाविबुधाः सुराः । सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः" इत्यमरः,

अधिपतिः = इन्द्रः, इति = इत्थं, प्रगल्भं = प्रौढं, रघुणा = दिलीप-पुत्रेण, समीरितं = उद्घुष्टं, वचः = वचनं, निशम्य = आकर्ण्य, सविस्मयः = साश्चर्य्यः, " सन् " रथं = स्यन्दनं, निवर्तयामास = परावर्तयामास, उत्तरं = रघुवचनोत्तरं, च, प्रतिवक्तुं = कथयितुं, प्रचक्रमे = प्रारेभे ॥ ४७ ॥

( समासः ) द्यौरोको येषान्ते तेषां । विस्मयेन सहितः सवि-स्मयः ॥ ४७ ॥

( वाच्यपरिवर्तनम् ) दिवौकसाम् अधिपतिना········ सविस्म-येन " सता " रथः निवर्तयाञ्चक्रे ॥ ४८ ॥

( सरलार्थः ) रघोः इत्थं स्पर्धापूर्णं वचनमाकर्ण्य देवेन्द्रः साश्चर्य्यं रथं निवर्तयन् प्रतिवचनं ( उत्तरं ) प्रारेभे ॥ ४७ ॥

( सरलार्थ हिन्दी ) रघु का ऐसा अहंकार युक्त वचन सुनकर अत्यन्त चकित होते हुए देवेन्द्र ने रथ लौटाया और उसको उत्तर देना आरम्भ किया ॥ ४७ ॥

यदात्थ राजन्यकुमार तत्तथा यशस्तु रक्ष्यं परतो यशोधनैः ।
जगत्प्रकाशं तदशेषमिज्यया भवद्गुरुर्लङ्घयितुं ममोद्यतः ॥ ४८ ॥

( अन्वयः ) हे राजन्यकुमार ! (त्वम्) यत्, आत्थ, तत्, तथा, तु, यशोधनैः, परतः, यशः, रक्ष्यम्, (एव,) भवद्गुरुः, जगत्प्रकाशम्, अशेषं, मम, तत् . (यशः) इज्यया, लंघयितुम्, उद्यतः, ( अस्ति)॥४८॥

( टीका ) हे राजन्यकुमार ! = हे क्षत्रियकुमार ! " त्वं " यत्, = "वचनं" आत्थ = ब्रवीषि, तत्, " वचः " तथा = तथैवाऽस्तु, "सत्यम्भवत्वित्यर्थः" तु = किन्तु, यशोधनैः = कीर्तिधनैः, 'यशः कीर्तिः समज्ञा च" इत्यमरः, परतः = शत्रुसकाशात्, यशः = कीर्तिः, रक्ष्यं रक्षणीयं " एव " "परन्तु" भवद्गुरुः = दिलीपः, जगत्प्रकाशं = जगत्प्रसिद्धम्, अशेषं = सम्पूर्णं, मम = मे, तत्, "यशः" " साम्प्रतं " इज्यया = शततमेन यागेन, लंघयितुं, अतिक्रमितुं, उद्यतः = उद्युक्तः, अस्तीति शेषः ॥ ४८ ॥

( समासः ) राजन्यस्य कुमार इति राजन्यकुमारस्तत्सम्बुद्धौ यश एव धनं येषान्ते तैः । रक्षितुं योग्यमिति रक्ष्यं । भवतः गुरुरिति भवद्गुरुः । जगति प्रकाशमिति जगत्प्रकाशम् ॥ ४८ ॥

( वाच्यपरिवर्तनम् ) हे राजन्यकुमार ! त्वया यद् उक्तं तत् तथा, यशोधनाः यशः परतः रक्षन्ति एव भवद्गुरुणा......उद्यतेन भूयते ॥ ४८ ॥

( सरलार्थः ) हे राजकुमार ! यत् त्वया उक्तं तत् सत्यं किन्तु अस्मादृशानां सर्वस्वं यश एव वर्तते, तत् यदि तव पिता अश्वमेधशतं प्राप्नुयात् तदा मे तत् समस्तसंसारप्रसृतं यशः विलुप्तं भवेत् अतः येन केनचित् प्रकारेण आत्मनो यशोऽवश्यमेव रक्षणीयम् ॥ ४८ ॥

( सरलार्थ हिन्दी ) हे राजकुमार ! जो तू कहता है वह सत्य है किन्तु जिन महात्माओं का धन यशही है उन्हें अपने यश की रक्षा करना अत्यन्त उचित है और तेरा पिता संसार में प्रसिद्ध मेरे उसी यश को यह सैांवा यज्ञ समाप्त कर लांघना चाहता है ॥ ४८ ॥

हरिर्यथैकः पुरुषोत्तमः स्मृतो महेश्वरस्त्र्यम्बक एव नापरः ।
तथा विदुर्मां मुनयः शतक्रतुं द्वितीयगामी नहि शब्द एष नः ॥४९॥

( अन्वयः ) यथा, हरिः, एकः, पुरुषोत्तमः, स्मृतः, यथा, त्र्यम्बकः, एव, महेश्वरः, अपरः, न, तथा, मुनयः, मां, शतक्रतुं, विदुः, हि, एषः, नः, शब्दः, द्वितीयगामी, न, ( भवति ) ॥ ४९ ॥

( टीका ) यथा = येन प्रकारेण, हरिः = विष्णुः, एकः, " एव " पुरुषोत्तमः = पुरुषोत्तम इत्यभिधेयः, स्मृतः = कथितः, यथा = येन प्रकारेण, त्र्यम्बकः = त्रिनेत्रः, एव, महेश्वरः = महेश्वर इति नामधेयः, "शिवः" इत्यर्थः, "स्मृतः" अपरः = अन्यः, पुमान्न, तथा = तेनैव प्रकारेण, मुनयः = ऋषयः, मां, शतक्रतुं = शतक्रतुरिति-नामधेयं, विदुः = जानन्ति, हि = यस्मात्कारणात्, एषः = प्रतिपादितः, " त्रितयोऽपि " नः = अस्माकं, शब्दः = हरिमहेश्वरशतक्रतुरूपः, द्वितीयगामी = द्वितीयपुरुषगमनशीलः, न भवतीति शेषः ॥ ४९ ॥

( समासः ) हरति भक्तजनदुःखानिति हरिः । त्रीणि अम्बकानि यस्य सः । द्वितीयं गन्तुं शीलमस्येति द्वितीयगामी ॥ ॥ ४९ ॥

( वाच्यपरिवर्तनम् ) हरिणा त्र्यम्बकेन स्मृतेन भूयते एतेन शब्देन द्वितीयगामिना न " भूयते " ॥ ४९ ॥

( सरलार्थः ) अस्मिन् खलु जगतीतले यथा पुरुषोत्तमशब्दः विष्णुमेव बोधयति यथा च महेश्वरशब्दः शिवमेव बोधयति तथैव अयं "शतक्रतुः" इति शब्दोऽपि मामेव बोधयति, एतेऽस्माकं बोधका पुरुषोत्तमादिशब्दाः परपुरुषगामिनो न भवन्ति ॥ ४६ ॥

( सरलार्थ हिन्दी ) जैसे पुरुषोत्तम से नारायणही कहे गये हैं, जैसे महेश्वर शब्द से शिवही कहे गये हैं, उसी प्रकार शतक्रतु इस शब्द से मुनियों ने मुझही को सौ यज्ञवाला कहा है दूसरे को नहीं ॥ ४६ ॥

**अतोऽयमश्वः कपिलानुकारिणा पितुस्त्वदीयस्य मयापहारितः ।**
**अलं प्रयत्नेन तवात्र मा निधाः पदं पदव्यां सगरस्य संततेः ॥५०॥**

( अन्वयः ) अतः, ( एव ) कपिलानुकारिणा, मया, त्वदीयस्य, पितुः, अयम्, अश्वः अपहारितः, अत्र, तव, प्रयत्नेन, अलम्, ( त्वम् ) सगरस्य सन्ततेः, पदव्यां, पदं, मा, निधाः ॥ ५० ॥

( टीका ) अतः = अस्मात् कारणात्, कपिलानुकारिणा = कपिलमुनितुल्येन, मया = इन्द्रेण, त्वदीयस्य = त्वत्सम्बधिनः, " तव " इत्यर्थः, पितुः = तातस्य, अयं = पुरोवर्ती, अश्वः = घोटकः, अपहारितः = अपहृतः, अत्र = अस्मिन्नश्वे, तव = ते, प्रयत्नेन = अश्वमोचनरूपप्रयासेन, अलं = पर्याप्तं " प्रयत्नं मा कुरु " इत्यर्थः, "त्वं" सगरस्य = सगराख्यस्य राज्ञः, सन्ततेः = सन्तानस्य, पदव्यां = सगरचक्रवर्तिपुत्रमार्गे "अयनं वर्त्म मार्गाध्व पन्थानः पदवी सृतिः" इत्यमरः, पदं = चरणं, मा निधाः = न स्थापय ॥ ५० ॥

---

१ पुरा किल वैवस्वतमनोरन्वये सगरो नाम भूपतिरभूत् । स हि हिमवन्तं गिरिराजमासाद्य भृगुप्रस्रवणे वर्षशतं तपस्तप्त्वा महर्षिं भृगुं प्रसादयामास । ततस्तस्यैका राज्ञी असमञ्जसमपरा च षष्टिं पुत्रसहस्राणि जनयामास । असमञ्जस-सुतोंऽशुमानश्वमेधमारेभे । सगरस्याज्ञया षष्टिसहस्रसंख्यातास्तत्पुत्रा अश्वरक्षार्थ-मायोजिताः । पथि पुरुहूतस्तदश्वमपहृत्य पाताले योगस्थितस्य कपिलमहर्षेः पश्चात्संस्थाप्य प्रपलायितः । रक्षकाश्च सकलां महीमन्विष्यन्तः पातालमुपाजग्मुः । तत्र कपिलाश्रममागत्य तुरगं रश्मिषु संयतमवलोक्य कपिलमेवाश्वापहारकं मत्वा क्रुद्धाः सन्तस्तम्प्राकृतवचोभिस्तिरस्कृतवन्तः । ततस्तेषां कलकलेन योगभङ्गादतिकु-पितेन महर्षिणा सर्वे राजकुमारा भस्मीभूता अभूवन्निति पौराणिकी कथाऽनुसन्धेया ।

( समासः ) कपिलम् अनुकरोतीति कपिलानुकारी, तेन। तव अयन्त्वदीयस्तस्य ॥ ५० ॥

( वाच्यपरिवर्तनम् ) अतः कपिलानुकारी अहं त्वदीयस्य पितुः इमम् अश्वं अपहृतवान्·········त्वया···········मा निधायि ॥ ५० ॥

( सरलार्थः ) यथा पुरा यज्ञाश्वमन्विष्यन्तः, अश्वापहारी अयं इति वदन्तः सगरसुताः कपिलमहर्षेः क्रोधाग्निना भस्मीभूता अभूवन् तथैव त्वमपि मदीयकोपानलेन भस्मीभूतो भविष्यसि अतः सगर-सुतमार्गानुकारी न भव ॥ ५० ॥

( सरलार्थ हिन्दी ) पहले किसी समय में सगर राजा की सन्तान यज्ञमें छोड़े हुए घोड़ेको खोजती खोजती कपिल मुनिके आश्रम पर पहुची वहां कपिल मुनिके पीछे घोड़ेको बंधा देख कर "यही घोड़ेका चुरानेवाला है' इस प्रकार कहनेवाले वे, मुनि महाराजके क्रोधाग्निसे जैसे भस्म किये गये उसी प्रकार तू भी मेरी क्रोधाग्निसे भस्म होगा इसलिये इस मार्ग को छोड़ करलौट जा ॥ ५० ॥

ततः प्रहस्यापभयः पुरन्दरं पुनर्बभाषे तुरगस्य रक्षिता।
गृहाण शस्त्रं यदि सर्ग एष ते न खल्वनिर्जित्य रघुं कृती भवान्॥५१॥

( अन्वयः ) ततः तुरगस्य, रक्षिता; प्रहस्य, अपभयः, "सन्" पुनः, पुरन्दरं, बभाषे, "हे देवेन्द्र !," यदि, ते, एषः, सर्गः, (अस्ति) "तर्हि" शस्त्रं गृहाण, भवान्, रघुम्, अनिर्जित्य, कृती, न, भवि-ष्यति खलु ॥ ५१ ॥

( टीका ) ततः=इन्द्रप्रतिवचनश्रवणानन्तरं, तुरगस्य=अश्व-स्य, रक्षिता=रक्षकः, "रघुः" प्रहस्य=हसित्वा, "प्रहासं कृत्वा" इति वा, अपभयः=विगतभयः, "सन्" "निर्भयः" इत्यर्थः, पुनः=भूयः, बभाषे=उवाच, "हे देवेन्द्र !" यदि चेत, ते=तव, एषः=अश्वमोचनाभावरूपः, सर्गः=निश्चयः, "सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु" इत्यमरः, ( सगर-सुतपदवीं नेष्यामीत्येवंरूपः सर्गः ) "तदा" शस्त्रं=आयुधं गृहाण=आदत्स्व, भवान्=त्वं, रघुं=मां, अनिर्जित्य=अपरा-भूय, कृती=कृतकृत्यः, न भविष्यति खलु ॥ ५१ ॥

( समासः ) अपगतं भयं यस्मात् सः । शस्यतेऽनेनेति शस्त्रम् । कृतमनेनेति कृती ॥ ५१ ॥ कृतमस्यास्तीति कृती ॥

( वाच्यपरिवर्तनम् ) अपभयेन तुरगस्य रक्षिता……………पुरन्दरः बभाषे । यदि ते एतेन सर्गेण " भूयते " तर्हि त्वया शस्त्रं गृह्यताम् भवता रघुम् अनिर्जित्य कृतिना न भविष्यते ॥ ५१ ॥

( सरलार्थः ) ततः निर्भयः कुमारो रघुः उपहासं कृत्वा सगर्वम् इदम् अवोचत् यत् हे पुरन्दर ! यद्यहं अश्वमोचने प्रयतो भविष्यामि तदा त्वं मां सगरसुतपदवीं नेष्यसीत्येवं रूपस्तव निश्चयः स्याच्चेत्तदा युद्धाय सज्जो भव यावन्मां न जेष्यसि तावत्कृतकृत्यो न भविष्यसि ॥ ५१ ॥

( सरलार्थ हिन्दी ) इसके अनन्तर रघु निडर हो धृष्टता के साथ हंसकर इन्द्र से बोला " हे शक्र ! यदि आप का यह निश्चय है कि मेरे इस अश्व के छोड़ाने में प्रयत्न करने पर आप सगर राजा के पुत्रों के समान मुझे अपनी क्रोधाग्नि से भस्म करोगे तो आप शस्त्र ग्रहण करिये और युद्ध के लिये तयार होइये यह याद रखिये कि रघुको जीते विना आप कृतकृत्य न होंगे ॥ ५१ ॥

स एवमुक्त्वा मघवन्तमुन्मुखः करिष्यमाणः सशरं शरासनम् ।
अतिष्ठदालीढ़विशेषशोभिना वपुःप्रकर्षेण विडम्बितेश्वरः ॥ ५२ ॥

( अन्वयः ) सः, उन्मुखः,(" सन् ") मघवन्तम्, एवम्, उक्त्वा शरासनं, सशरं, करिष्यमाणः, आलीढविशेषशोभिना, वपुःप्रकर्षेण, विडम्बितेश्वरः, ( सन् ) अतिष्ठत् ॥ ५२ ॥

( टीका ) सः = रघुः, उन्मुखः = ऊर्ध्वाननः, " सन " मघवन्तं = इन्द्रं, एवं = उक्तप्रकारेण, उक्त्वा = कथयित्वा, शरासनं = चापं, सशरं = बाणयुक्तं, करिष्यमाणः = विधास्यमानः. [1]आलीढविशेषशोभिना, = आलीढाख्यसंस्थानविशेषशोभिना, वपुःप्रकर्षेण = शरीरौन्नत्येन, " गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः " इत्यमरः, विडम्बितेश्वरः, = अनुकृतपिनाकी, " सन " अतिष्ठत् = तस्थौ ॥ ५२ ॥

---

१ "सदक्षिणापाङ्गनिविष्टमुष्टिं नतां समाकुञ्चितसव्यपादम् " कुमारसम्भवम् । " नामिता पूर्वजङ्घा च पश्चिमा प्रगुणा भवेत् । असमो मध्यकायः स्यादालीढस्य तु लक्षणम् " इतियुद्धशास्त्रम् ।

( समासः ) उत् मुखं यस्य सः उन्मुखः । शराः अस्यन्ते = क्षिप्यन्तेऽनेनेति शरासनं । शरेण सह वर्तमानमिति सशरं । करिष्यतेऽसौ करिष्यमाणः । विशेषेण शोभत इति विशेषशोभी, आलीढेन विशेषशोभी इत्यालीढविशेषशोभी तेन । वपुषः प्रकर्ष इति वपुःप्रकर्षस्तेन । विडम्बितोऽनुकृतस्त्रिपुरदाहोद्युक्तः ईश्वरो शम्भुर्येन सः ॥ ५२ ॥

( सरलार्थः ) इन्द्रं प्रति एवम् उक्त्वा कृतोन्मुखनयनः रघुः दक्षिणं चरणम् अग्रत आकुञ्च्य वामं च पश्चाद्विस्तार्य शरासनं सज्जीकृत्य रणाय कृतनिश्चयः सन् त्रिपुरदाहोद्युक्तः शङ्कर इव तस्थौ ॥ ५२ ॥

( सरलार्थ हिन्दी ) इस प्रकार इन्द्र से कहकर धनुष पर बाण चढ़ा कर, कुछ नीचे की ओर झुकता हुआ दाहिना पैर आगे की ओर तथा वायां पैर पीछे को ओर रखकर पैतरे के साथ युद्ध के लिये त्रिपुर, के दाहमें तत्पर महादेवजीके समान खड़ा हुआ ॥५२॥

रघोरवष्टम्भमयेन पत्त्रिणा हृदि क्षतो गोत्रभिदप्यमर्षणः ।
नवाम्बुदानीकमुहूर्तलाञ्छने धनुष्यमोघं समधत्त सायकम् ॥ ५३ ॥

( अन्वयः ) रघोः, अवष्टम्भमयेन, पत्त्रिणा, हृदि, क्षतः, अमर्षणः, गोत्रभित्, अपि, नवाम्बुदानीकमुहूर्तलाञ्छने धनुषि, अमोघं सायकं; समधत्त ॥ ५३ ॥

( टीका ) रघोः = राजकुमारस्य, अवष्टम्भमयेन = स्तम्भरूपेण काञ्चनमयेन वा, " अवष्टम्भः सुवर्णे च स्तम्भप्रारम्भयोरपि " इति विश्वः, पत्त्रिणा = बाणेन, हृदि = हृदये, क्षतः = ताडितः, " अत एव " अमर्षणः = असहनः, गोत्रभित् = पुरन्दरोऽपि, नवाम्बुदानीकमुहूर्तलाञ्छने = नवजलधरसमूहमुहूर्तचिन्हभूते, धनुषि = चापे, अमोघं = सफलं, " सिद्धम् " इत्यर्थः, सायकं = बाणं, समधत्त = योजितवान् ॥ ५३ ॥

( वाच्यपरिवर्तनम् ) रघोः·········क्षतेन अमर्षणेन गोत्रभिदा अपि,··· अमोघः सायकः समधीयत ॥ ५३ ॥

( समासः ) न मर्षितुं शीलं यस्य सः । गां ( भूमिं ) त्रायन्ते इति गोत्राः, तान् भिनत्तीति गोत्रभित् । अम्बूनि ददतीत्यम्बुदाः, नवाश्च तेऽम्बुदाश्च नवाम्बुदास्तेषाम् अनीकं तस्य मुहूर्तं यल्लाञ्छनं तस्मिन् । न मोघ इत्यमोघस्तम् अमोघम् ॥ ५३ ॥

( सरलार्थः ) सुवर्णमयेन स्तम्भवत् सुदृढेन सुदीर्घेण बाणेन हृदये आहतः शक्रः बाणताडनजन्यक्रोधाऽधिक्यात् नष्टधैर्यो भूत्वा तीक्ष्णं शरं नूतनजलधरमण्डलमण्डने धनुषि संयोजितवान् ॥ ५३ ॥

( सरलार्थ हिन्दी ) मजबूत, बड़े और नोकीले रघुके बाण से छाती में घाव होनेके कारण अत्यन्त अधिक क्रुद्ध हो इन्द्र ने भी नूतन मेघों के समूह की थोड़ी देर शोभा बढ़ाने वाले अपने धनुष पर ( इन्द्रधनु ) सिद्ध बाण चढ़ाया ॥ ५३ ॥

दिलीपसूनोः स बृहद्भुजान्तरं प्रविश्य भीमासुरशोणितोचितः ।
पपावनास्वादितपूर्वमाशुगः कुतूहलेनेव मनुष्यशोणितम् ॥ ५४ ॥

( अन्वयः ) भीमासुरशोणितोचितः, सः, आशुगः, दिलीपसूनोः, बृहत्, भुजान्तरं, प्रविश्य, अनास्वादितपूर्वं, मनुष्यशोणितं, कुतूहलेन इव पपौ ॥ ५४ ॥

( टीका ) भीमासुरशोणितोचितः = भयङ्करदैत्यरुधिरपरिचितः, सः = शक्रमुक्तः, आशुगः = बाणः, दिलीपसूनोः = रघोः, बृहत् = विशालं, भुजान्तरं = भुजमध्यप्रदेशं, "वक्षःस्थलम्" इत्यर्थः, प्रविश्य = अन्तर्गत्य, अनास्वादितपूर्वं, अननुभूतपूर्वं, मनुष्यशोणितम् = मनुष्यरुधिरं, "रुधिरेऽसृक्लोहितास्ररक्तक्षतजशोणितम्" इत्यमरः, कुतूहलेन = कौतुकेन, इव, पपौ = पीतवान् ॥ ५४ ॥

( समासः ) भीमाश्च तेऽसुराश्च इति भीमासुराः, तेषां शोणिते उचित इति । आशु = क्षिप्रं गच्छतीत्याशुगः । दिलीपस्य सूनुरिति दिलीपसूनुस्तस्य । भुजयोरन्तरमिति भुजान्तरं । पूर्वमास्वादितम् आस्वादितपूर्वं, न आस्वादितपूर्वम् इति अनास्वादितपूर्वम् । मनुष्याणां शोणितं इति मनुष्यशोणितम् ॥ ५४ ॥

( वाच्यपरिवर्तनम् ) भीमासुरशोणितोचितेन तेन आशुगेन······ पपे ॥ ५४ ॥

(सरलार्थः) भयङ्करदैत्यानां रक्तपाने चिरं कृताभ्यासः सः इन्द्रबाणः रघोः हृदि प्रविश्य कौतुकादिव पूर्वम् अनास्वादितं मनुष्यरुधिरं पपौ५४

( सरलार्थ हिन्दी ) डरावने दैत्यों का रक्तपान करने वाले उस इन्द्र के बाण ने रघु के हृदय में घुसकर बड़े कौतुक से ( खेल से ) पहिले न चखे हुए मनुष्य के रुधिर को पान किया ॥ ५४ ॥

हरेः कुमारोऽपि कुमारविक्रमः सुरद्विपास्फालनकर्कशाङ्गुलौ ।
भुजे शचीपत्रविशेषकाङ्किते स्वनामचिह्नं निचखान सायकम् ॥५५॥

( अन्वयः ) कुमारविक्रमः, कुमारः, ( रघुः ) अपि, सुरद्विपास्फालनकर्कशाङ्गुलौ, शचीपत्रविशेषकाङ्किते, हरेः, भुजे, स्वनामचिह्नं, सायकं, निचखान ॥ ५५ ॥

( टीका ) कुमारविक्रमः = स्कन्दसदृशपराक्रमः, कुमारः = राजकुमारः, " रघुः " अपि, [1]सुरद्विपास्फालनकर्कशाङ्गुलौ = ऐरावतताड़नकठिनाङ्गुलौ, शचीपत्रविशेषकाङ्किते = इन्द्राण्या गण्डस्थलोल्लिखितचित्रपत्रिकाकारचिह्नयुक्ते, हरेः = इन्द्रस्य, भुजे = बाहौ, "भुजबाहू प्रवेष्टो दोः" इत्यमरः, स्वनामचिह्नं = निजनामाङ्कितं, सायकं = बाणं, निचखान = निखातवान् ॥ ५५ ॥

( समासः ) कुमारस्य, विक्रम इव विक्रमो यस्य सः । द्वाभ्यां पिबतीति द्विपः, सुराणां द्विपः सुरद्विपः तस्य आस्फालनेन कर्कशा अङ्गुलयो यस्य तस्मिन् । शच्याः पत्रविशेषकाणि इति शचीपत्रविशेषकाणि तैरङ्किते इति शचीपत्रविशेषकाङ्किते । स्वस्य नाम स्वनाम तस्य चिह्नम् इति स्वनामचिन्हम् ॥ ५५ ॥

( वाच्यपरिवर्तनम् ) कुमारविक्रमेण कुमारेण अपि ········· स्वनामचिह्नः सायकः निचख्ने ॥ ५५ ॥

( सरलार्थः ) यत्र किल पुलोमजायाः शच्याः कुङ्कुमकेशरादिभी रचितानां तिलकादीनां चिह्नानि राजन्ते एवंभूते तथा सुरद्विपस्य प्रोत्साहनार्थकताडनेन कठिनाङ्गुलौ शक्रस्य भुजे कार्तिकेयसदृशप्रतापशाली रघुरपि निजनामाङ्कितं बाणं निखातवान् ॥ ५५ ॥

( सरलार्थ हिन्दी ) इन्द्राणी के अति प्रिय इन्द्र की भुजा में रघु ने अपना बाण मारा ॥ ५५ ॥

जहार चान्येन मयूरपत्रिणा शरेण शक्रस्य महाशनिध्वजम् ।
चुकोप तस्मै स भृशं सुरश्रियः प्रसह्य केशव्यपरोपणादिव ॥ ५६॥

१. कुमारसम्भवे—ऐरावतास्फालनकर्कशेन हस्तेन पस्पर्श तदंगमिन्द्र इत्येवं रूपः श्लोकांशः ।

( अन्वयः ) " रघुः " अन्येन, मयूरपत्रिणा, शरेण, शक्रस्य महाशनिध्वजं, जहार, सः, ( इन्द्रः ) च, सुरश्रियः, प्रसह्य, केशव्यपरोपणात्, इव, तस्मै, भृशं, चुकोप ॥ ५६ ॥

( टीका ) " रघुः " अन्येन = इतरेण, मयूरपत्रिणा = मयूरपक्षवता, शरेण = बाणेन, शक्रस्य = पुरन्दरस्य, महाशनिध्वजं = दम्भोलिरूपं केतुं, "दम्भोलिरशनिर्द्वयोः" इत्यमरः, जहार = विच्छेद, सः = इन्द्रः, च, सुरश्रियः = देवलक्ष्म्याः, प्रसह्य = हठात्, " बलात् " इति वा, केशव्यपरोपणात् = कचच्छेदनात्, " कचः केशः शिरोरुहः" इत्यमरः, इव, तस्मै = रघवे, भृशम् = अत्यन्तं, चुकोप = चुक्रोध ॥५६॥

( समासः ) मयूरस्य पत्रमस्यास्तीति मयूरपत्री, तेन । महांश्चासौ अशनिरिति महाशनिः, स एव ध्वजस्तं । सुराणां श्रीरिति सुरश्रीः तस्याः । केशानां व्यपरोपणमिति केशव्यपरोपणं, तस्मात् ॥ ५६ ॥

( वाच्यपरिवर्तनम् ) तेन.................महाशनिध्वजः जह्रे तेन भृशं चुकुपे ॥ ५६ ॥

( सरलार्थः ) ततः रघुः पुनः अन्येन मयूरपुङ्खवता बाणेन रथस्य वज्राकृतिं ध्वजम् अच्छिनत् । सुरराज्यलक्ष्म्याः केशपाशच्छेदनाद् इव अशनिध्वजच्छेदनेन इन्द्रः रघोः उपरि अत्यन्तं चुक्रोध ॥ ५६ ॥

( सरलार्थ हिन्दी ) उसके अनन्तर रघु ने मोर पङ्ख वाले दूसरे बाण से इन्द्र की वज्र सदृश पताका काटी इससे इन्द्र रघु पर अत्यन्त क्रुद्ध हुआ ॥ ५६ ॥

तयोरुपान्तस्थितसिद्धसैनिकं गरुत्मदाशीविषभीमदर्शनैः ।
बभूव युद्धं तुमुलं जयैषिणोरधोमुखैरूर्ध्वमुखैश्च पत्रिभिः ॥ ५७ ॥

( अन्वयः ) जयैषिणोः, तयोः, ( इन्द्ररघ्वोः, ) गरुत्मदाशीविषभीमदर्शनैः; अधोमुखैः, ऊर्ध्वमुखैः, च, पत्रिभिः, उपान्तस्थितसिद्धसैनिकं, तुमुलं, युद्धं बभूव ॥ ५७ ॥

( टीका ) जयैषिणोः = अन्योन्यं विजयाभिलाषिणोः, तयोः इन्द्ररघ्वोः, [1]गरुत्मदाशीविषभीमदर्शनैः = सपक्षसर्पवद्भयङ्करदर्शनैः,

१. आशीस्तालुगता दंष्ट्रा तया विद्धो न जीवति । इति विषविद्या ।

"सर्पः पृदाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गमः । आशीविषो विषधरः" इत्यमरः, अधोमुखैः = नम्राननैः, ऊर्ध्वमुखैः = ऊर्ध्वाननैः, पत्रिभिः = बाणैः, उपान्तस्थितसिद्धसैनिकं = तटस्थदेवसैनिकरघुसैनिकं, तुमुलं = सङ्कुलं, "व्याप्तं" इति वा, युद्धं = रणं, बभूव = अभूत् ॥ ५७ ॥

( समासः ) जयमिच्छत इति जयैषिणौ, तयोः । आशिषि दंष्ट्रायां विषं येषान्ते आशीविषाः, गरुत्मन्तश्च ते आशीविषाश्च गरुत्मदाशीविषाः, तेषामिव भीमं दर्शनं येषान्तैः । अधोमुखानि येषान्तैः । उर्द्ध्वानि मुखानि येषान्तैः । "वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्" इत्यमरः, सिद्धाश्च सैनिकाश्च सिद्धसैनिकाः । अन्तस्य समीपम् उपान्तम्, उपान्तयोः स्थिता इति उपान्तस्थिताः, उपान्तस्थिताः सिद्धसैनिकाः यस्मिन्तत ॥ ५७ ॥

( वाच्यपरिवर्तनम् ) उपान्तस्थितसिद्धसैनिकेन तुमुलेन युद्धेन बभूवे ॥ ५७ ॥

( सरलार्थः ) एवं विजयमभिकाङ्क्षिणोः तयोः रघुपुरंदरयोः पक्षवन्त; पन्नगा इव पक्षयुक्तपङ्खाः बाणाः भयं प्रसारयन्तः महता वेगेन इतस्ततः प्रचलन्तिस्म । इत्थमेतयोर्युद्धं समभवत् यथा रघुसैनिका इन्द्रसैनिकाश्चा विस्मयेन तं रणम् अवलोकयामासुः ॥५७॥

( सरलार्थ हिन्दी ) इस प्रकार विजय की अभिलाषा रखनेवाले रघु और इन्द्र का युद्ध, पङ्खवाले सर्पों को समान भयंकर एक पक्ष से दूसरी पक्ष की ओर जाने वाले बाणों से व्याप्त, देव और रघु सेना से घिरा हुआ होता रहा ॥ ५७ ॥

अतिप्रबन्धप्रहितास्त्रवृष्टिभिस्तमाश्रयं दुष्प्रसहस्य तेजसः ।
शशाक निर्वापयितुं न वासवः स्वतश्च्युतं वन्हिमिवाद्भिरम्बुदः॥५८॥

( अन्वयः ) वासवः, अतिप्रबन्धप्रहितास्त्रवृष्टिभिः, दुष्प्रसहस्य तेजसः, आश्रयं, स्वतश्च्युतं, तं, रघुं, अम्बुदः, अद्भिः, "स्वतश्च्युतं" वह्निम् इव, निर्वापयितुं, न, शशाक ॥ ५८ ॥

( टीका ) वासवः = इन्द्रः, अतिप्रबन्धप्रहितास्त्रवृष्टिभिः = अतिनिर्बन्धप्रयुक्तास्त्रवर्षणैः, दुष्प्रसहस्य = दुःखेनापि सोढुमशक्यस्य, तेजसः = प्रतापस्य, आश्रयं = आधारं "अत्यन्तदुर्धरप्रतापशालिनं" इत्यर्थः, स्वतश्च्युतं = स्वतोनिर्गतं, तं रघुं = कुमारं, "रघोरपि

इन्द्रांशसम्भवत्वात् " अम्बुदः = जलदः, " मेघ " इत्यर्थः, अद्भिः = जलैः, स्वतश्च्युतं = स्वतो निर्गतं, वह्निमिव = वैद्युताग्निमिव, निर्वापयितुं = शमयितुं, न शशाक = शक्तो नाऽभूत् ॥ ५८ ॥

( समासः ) अस्त्राणां वृष्टय इति अस्त्रवृष्टयः, तैः । अम्बूनि ददातीत्यम्बुदः । अस्त्राणां वृष्टिः अस्त्रवृष्टिः । अतिप्रबन्धेन प्रहिता या अस्त्रवृष्टिस्ताभिः । दुःखेन प्रसह्यत इति दुष्प्रसहं तस्य ॥ ५८ ॥

( वाच्यपरिवर्तनम् ) अम्बुदेन इव वासवेन ·····शेके ॥ ५८ ॥

( सरलार्थः ) यथा जलदः निरन्तरजलवर्षणेन स्वत एव निर्गतं वैद्युताग्निं शमयितुं न शक्नोति तथैव इन्द्रोऽपि आत्मनोंऽशसम्भवं दुःसहतेजसः आश्रयभूतं तं रघुं निरन्तरशस्त्रधारासम्पातैः शमयितुं न समर्थोऽभूत् ॥ ५८ ॥

( सरलार्थ हिन्दी ) जैसे मेघ वृष्टि द्वारा अपने से उत्पन्न वन्हि ( वैद्युताग्नि ) को शान्त नहीं कर सका । इसी प्रकार इन्द्र बराबर अस्त्रों को बरसा कर अत्यन्त दुःसह तेज के आधार और अपने ही अंश से पैदा हुए उस रघु को निवारण करने में समर्थ नहीं हो सका ॥ ५८ ॥

ततः प्रकोष्ठे हरिचन्दनाङ्किते प्रमथ्यमानार्णवधीरनादिनीम् ।
रघुः शशाङ्कार्धमुखेन पत्रिणा शरासनज्यामलुनाद्बिडौजसः ॥५९॥

( अन्वयः ) ततः, रघुः, हरिचन्दनाङ्किते, बिडौजसः, प्रकोष्ठे, प्रमथ्यमानार्णवधीरनादिनीं, शरासनज्यां, शशाङ्कार्धमुखेन, पत्रिणा, अलुनात् ॥ ५९ ॥

( टीका ) ततः = तदनन्तरं, रघुः = कुमारः, हरिचन्दनाङ्किते = हरिचन्दनलिप्ते, बिडौजसः = इन्द्रस्य, प्रकोष्ठे = कफोणौ 'स्थितां" प्रमथ्यमानार्णवधीरनादिनीं = विलोड्यमानाब्धिगम्भीरनिनादिनीं, शरासनज्यां = चापमौर्वीं " मौर्वी ज्या शिञ्जिनी गुणः " इत्यमरः, शशाङ्कार्धमुखेन, = अर्द्धचन्द्रमुखेन, पत्रिणा = बाणेन, अलुनात् = चिच्छेद ॥ ५९ ॥

( समासः ) बिडौजसः = वेवेष्टि (व्याप्नोति) इति विट्, विट् (व्यापकं) ओजो यस्य सः बिडौजाः तस्य । हरिचन्दनेन अङ्कितम् इति हरिचन्दनाङ्कितः तस्मिन् । प्रमथ्यमानश्चासावर्णवश्च प्रमथ्य- प्रमथ्यन्ते इति प्रमथ्यमानः ।

मानार्णवः, स इव धीरं नदतीति प्रमथ्यमानार्णवधीरनादिनी तां । शराः अस्यन्ते क्षिप्यन्तेऽनेनेति शरासनं, तस्य ज्या तां । शशाङ्कस्य अर्द्धः शशाङ्कार्धः स, इव मुखं, फलं, यस्य सः शशाङ्कार्धमुखस्तेन ॥५६॥

( वाच्यपरिवर्तनम् ) प्रमथ्यमानार्णवधीरनादिनी शरासनज्या अलूयत ॥ ५६ ॥

( सरलार्थः ) रघुः अनवरतम् आकर्षणाद् इन्द्रस्य कफोणिदेशे, समुद्रमथनजनितं भयङ्करं घर्घरं शब्दम् इव टङ्कारध्वनिं पुनः पुनः उत्पादयतः तस्य पुरन्दरधनुषः मौर्वीम् अर्द्धचन्द्राकारमुखेन बाणेन अच्छिनत् ॥ ५६ ॥

( सरलार्थ हिन्दी ) इसके बाद रघु ने इन्द्रधनुष की प्रत्यञ्चा अर्द्धचन्द्र मुखवाले बाण से काटी ॥ ५६ ॥

**स चापमुत्सृज्य विवृद्धमत्सरः प्रणाशनाय प्रबलस्य विद्विषः ।**
**महीध्रपक्षव्यपरोपणोचितं स्फुरत्प्रभामण्डलमस्त्रमाददे ॥ ६० ॥**

( अन्वयः ) विवृद्धमत्सरः, सः, ( इन्द्रः ) चापम्, उत्सृज्य, प्रबलस्य, विद्विषः, प्रणाशनाय, महीध्रपक्षव्यपरोपणोचितं, स्फुरत्प्रभामण्डलम्, अस्त्रम्, आददे ॥ ६० ॥

( टीका ) विवृद्धमत्सरः = प्रदीप्तवैरभावः, सः = शक्रः, चापं = बाणं, उत्सृज्य = त्यक्त्वा, प्रबलस्य = प्रतापिनः, विद्विषः = शत्रोः, प्रणाशनाय = विनाशनाय, महीध्रपक्षव्यपरोपणोचितं = पर्वतपक्षच्छेदनकरं, स्फुरत्प्रभामण्डलं = ज्वालामालाभासुरम्, अस्त्रं = वज्रं, आददे = जग्राह ॥ ६० ॥

( समासः ) विवृद्धः मत्सरो यस्य सः विवृद्धमत्सरः । विशेषेण द्वेष्टीति विद्विट् तस्य । पक्षाणां व्यपरोपणमिति पक्षव्यपरोपणं महीं धारयन्तीति महीध्राः, ~~तेषां पक्षव्यपरोपणं तत्र उचितमिति महीध्रपक्षव्यपरोपणोचितम्~~ । प्रभाणां मण्डलमिति प्रभामण्डलं, स्फुरत् प्रभामण्डलं, यस्य तत् । अस्यते क्षिप्यते प्राणविनाशाय इति अस्त्रम् ॥ ६० ॥

( वाच्यपरिवर्तनम् ) विवृद्धमत्सरेण तेन आददे ॥ ६० ॥

( सरलार्थः ) निजशरासनमौर्वीच्छेदनात् इन्द्रः अत्यन्तं चुकोप तच्च प्रनष्टगुणं धनुः परित्यज्य महता क्रोधावेशेन जेतुं अशक्यं तं रिपुं रघुं विनाशयितुं प्रोज्ज्वलज्ज्वलनज्वालं वज्रं जग्राह ॥ ६० ॥

महीध्राणां पक्षाः महीध्रपक्षाः, महीध्रपक्षाणां व्यपरोपणं महीध्रपक्षव्यपरोपणम्, महीध्रपक्षव्यपरोपणे उचितं महीध्रपक्षव्यपरोपणोचितम् ॥

( सरलार्थ हिन्दी ) अपने धनुष की डोरी टूट जाने से धनुष को फेक अत्यन्त क्रोधित हो इन्द्रने प्रबल वैरि रघु के नाश के लिये बलवान् और अत्यन्त कांतिवाले वज्र को ग्रहण किया ॥ ६० ॥

रघुर्भृशं वक्षसि तेन ताड़ितः पपात भूमौ सह सैनिकाश्रुभिः ।
निमेषमात्रादवधूय तद्व्यथां सहोत्थितः सैनिकहर्षनिःस्वनैः ॥ ६१ ॥

( अन्वयः ) तेन ( वज्रेण ) वक्षसि, भृशं, ताड़ितः, रघुः, सैनिकाश्रुभिः, सह, भूमौ, पपात, सः, निमेषमात्रात्, ( एव ) तद्व्यथाम्, अवधूय, सैनिकहर्षनिःस्वनैः सह, उत्थितः ॥ ६१ ॥

( टीका ) तेन = वज्रेण, वक्षसि = हृदये, भृशम् = अत्यन्तं, ताड़ितः = आहतः, "रघुः" सैनिकाश्रुभिः = सैन्यबाष्पैः, "सह" भूमौ = पृथिव्यां, पपात = अपतत् "अथ" सः, निमेषमात्रात् = क्षणमात्रात्, "एव" तद्व्यथां = वज्राभिघातपीड़ाम्, अवधूय = निरस्य, तिरस्कृत्य इति वा, सैनिकहर्षनिस्वनैः = सैन्यानन्दशब्दैः, सह = साकं, उत्थितः = उदतिष्ठत् ॥ ६१ ॥

( समासः ) सैनिकानामश्रूभिरितैः सैनिकाश्रुभिः । निमेश एव निमेषमात्रं तस्मात् । तस्य व्यथा तद्व्यथा तां तद्व्यथाम् । हर्षस्य निस्वना हर्षनिस्वनाः, सैनिकानां हर्षनिस्वनास्तैः ॥ ६१ ॥

( वाच्यपरिवर्तनम् )·········ताडितेन रघुणा·········पेते । तेन उत्थितम् ॥ ६१ ॥

( सरलार्थः ) एवं भूतेन वज्रेण हृदये ताडितः रघुः यदा भूमौ अपतत् तदा सर्वेऽपि सैन्याः उच्चैः चक्रन्दुः, पुनः क्षणमात्रादेव तां वज्रपीड़ां निरस्य यदा रघुः क्षितितलात् समुदतिष्ठत् तदा तत्सैनिकाः आनन्दात् हर्षनादं चक्रुः ॥ ६१ ॥

( सरलार्थ हिन्दी ) उस वज्र के छाती में लगने से रघु ज्यों ही पृथ्वी पर गिरा त्यों ही उसके सैनिक हाहाकार करने और रोने लगे परन्तु एक पल में ही उस व्यथा को दूर कर बहादुरों की तरह आनन्द शब्द के साथ उठ खड़ा हुआ ॥ ६१ ॥

तथापि शस्त्रव्यवहारनिष्ठुरे विपक्षभावे चिरमस्य तस्थुषः ।
तुतोष वीर्यातिशयेन वृत्रहा पदं हि सर्वत्र गुणैर्निधीयते ॥ ६२ ॥

( अन्वयः ) वृत्रहा, तथापि, शस्त्रव्यवहारनिष्ठुरे, विपक्षभावे, चिरं, तस्थुषः, अस्य, वीर्यातिशयेन, तुतोष, हि, गुणैः, सर्वत्र, पदं, निधीयते ॥ ६२ ॥

( टीका ) वृत्रहा = इन्द्रः, तथाऽपि = वज्रप्रहारेऽपि, शस्त्रव्यवहार-निष्ठुरे = शस्त्रव्यापारक्रूरे, विपक्षभावे = शत्रुत्वे, चिरं = बहुकालं, तस्थुषः = स्थितवतः, अस्य = रघोः वीर्य्यातिशयेन = पौरुषाधिक्येन, तुतोष = सन्तुष्टोऽभूत्, हि = यस्मात् कारणात्, गुणैः = दया-दानदाक्षिण्यपौरुषादिभिः, सर्वत्र = शत्रुमित्रादिषु, पदं = चरणं, " पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु " इत्यमरः, निधीयते = स्थाप्यते ॥ ६२ ॥

( समासः ) वृत्रं हतवानिति वृत्रहा । शस्त्राणां व्यवहारः शस्त्र-व्यवहारः, तेन निष्ठुरस्तस्मिन् । विपक्षस्य भाव इति विपक्षभाव-स्तस्मिन् । वीर्य्यस्य अतिशयो वीर्य्यातिशयस्तेन ॥ ६२ ॥

( वाच्यपरिवर्तनम् ) वृत्रघ्ना....तुतुषे, गुणाः पदं निदधति ॥६२॥

( सरलार्थः ) रघुः वज्रपातेऽपि क्षणमात्रादेव तां व्यथां तिरस्कृत्य पुनः निशितशरैः भयङ्कराय युद्धाय सज्जो बभूव । इन्द्रस्तस्य अलौ-किकं पराक्रमं वीक्ष्य प्रसन्नो बभूव । यतः गुणिनः शत्रुष्वपि प्रतिष्ठां लभन्ते ॥ ६२ ॥

( सरलार्थ हिन्दी ) वज्र से आहत होने पर भी क्षण मात्र में उस पीड़ा को दूर कर भयकर युद्ध करने के लिये पुनः तैयार हुआ । गुण सर्वत्र प्रतिष्ठा पाते हैं इस कारण इन्द्र शत्रु के असाधारण पराक्रम को देखकर अत्यन्त प्रसन्न हुआ और बोला ॥ ६२ ॥

असङ्गमद्रिष्वपि सारवत्तया न मे त्वदन्येन विसोढमायुधम् ।
अवेहि मां प्रीतमृते तुरङ्गमात्किमिच्छसीति स्फुटमाह वासवः ॥६३॥

( अन्वयः ) सारवत्तया, अद्रिषु, अपि, असङ्गं, मे, आयुधं, त्वदन्येन, न विसोढम्, मां, प्रीतम्, अवेहि, तुरङ्गमात्, ऋते, किम्, इच्छसि, इति, वासवः, स्फुटम्, आह ॥ ६३ ॥

( टीका ) सारवत्तया = बलवत्तया, " सारो बले स्थिरांशे च " इत्यमरः, अद्रिषु = पर्वतेषु, अपि, असङ्गं = अप्रतिबन्धं मे = मम, आयुधं = वज्रं, त्वदन्येन = त्वत्तोऽपरेण, न = नहि, विसोढं,

"अतएव" मां, प्रीतं=प्रसन्नं, अवहि=जानीहि, तुरङ्गमात्=अश्वात्, ऋते=विना, किम्-इच्छसि=किम् अभिलषसि, इति एतत् "वचनम्" वासवः=इन्द्रः, स्फुटं=स्पष्टम्, आह=उवाच॥६३॥

(समासः) सारो विद्यतेऽस्य असौ सारवान् तस्य भावस्तत्ता तया। अत्ति अद्यते वाऽद्रिस्तेषु। आ युध्यतेऽनेनेत्यायुधम्। त्वत्तोऽन्यस्त्वदन्यः, तेन॥ ६३॥

(वाच्यपरिवर्तनम्) त्वदन्यः न विसोढवान् त्वया अहं प्रीतः अवेयै...वासवेन उच्यते॥ ६३॥

(सरलार्थः) अनन्तरं इन्द्रः कुमारं प्रति अवोचत्, यत्, हे क्षत्रियकुमार! यन्मे वज्रं पर्वतपक्षानपि अच्छिनत् यच्च लोकत्रयमध्ये कश्चन अपि सोढुं समर्थो न बभूव तद् अव्यर्थमपि मे वज्रं अद्य त्वयि व्यर्थतां प्राप्तं, अतस्ते लोकोत्तरपौरुषेण प्रसन्नोऽस्मि इममश्वं वर्ज्जयित्वा त्वं किमभिलषसि तद् वद॥ ६३॥

(सरलार्थ हिन्दी) हे बालक! बल से पर्वतों में भी न रुकने वाला मेरा वज्र तुझे छोड़ और किसी ने भी इस त्रिलोक में नहीं सहा इस कारण मैं तेरे ऊपर प्रसन्न हूँ घोड़े के सिवाय तू क्या चाहता है मांग॥ ६३॥

ततो निषङ्गादसमग्रमुद्धृतं सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिम्।
नरेन्द्रसूनुः प्रतिसंहरन्निषुं प्रियंवदं प्रत्यवदत्सुरेश्वरम्॥ ६४॥

(अन्वयः) ततः, निषङ्गाद्, असमग्रम्, उद्धृतं, सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिम्, इषुं, प्रति संहरन्, नरेन्द्रसूनुः (रघुः) प्रियंवदं सुरेश्वरं, प्रत्यवदत्॥ ६४॥

(टीका) ततः=इन्द्रवचनश्रवणानन्तरं, निषङ्गात्=तूणीरात्, "तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः" इत्यमरः, असमग्रं=असकलं, "यथास्यात्तथा" उद्धृतं=निष्कासितं, सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिं=काञ्चनमूलदीप्त्यनुरञ्जितरघुकरशाखं, इषुं=बाणं, प्रतिसंहरन्=प्रतिनिवर्तयन्, नरेन्द्रसूनुः=दिलीपपुत्रः, "रघुः" प्रियंवदं=मधुरभाषिणं, सुरेश्वरं=पुरन्दरं, प्रत्यवोचत्॥ ६४॥

(समासः) सुवर्णस्य पुङ्खः सुवर्णपुङ्खः तस्य द्युतिभिः रञ्जिता अङ्गुलयो यस्य सः तं। प्रतिसंहरतीति प्रतिसंहरन्। नराणामिन्द्रो

नरेन्द्रस्तस्य सूनुरिति नरेन्द्रसूनुः । प्रियं वदतीति प्रियंवदः तं । ईशितुं शीलमस्येतीश्वरः सुराणामीश्वर इति सुरेश्वरस्तं ॥ ६४ ॥

( सरलार्थः ) ततः रघुः इन्द्रस्य एवं सांत्ववचनमाकर्ण्य तूणीरात् अर्द्धनिष्कासितसुवर्णपुङ्खद्युतिदीप्तिमन्तं शरं पुनः तूणीरे एव संस्थापयन् प्रियभाषिणं देवेन्द्रं मधुरया गिरा प्रत्युवाच ॥ ६४ ॥

( सरलार्थ हिन्दी ) राजकुमार रघु इन्द्रका ऐसा वचन सुनकर तरकस से आधे निकाले हुए बाण को फिर तरकसमें ही रखकर मधुर वाणी से देवेन्द्र के प्रति बोला ॥ ६४ ॥

अमोच्यमश्वं यदि मन्यसे प्रभो ततः समाप्ते विधिनैव कर्मणि ।
अजस्रदीक्षाप्रयतः स मद्गुरुः क्रतोरशेषेण फलेन युज्यताम् ॥६५॥

( अन्वयः ) हे, प्रभो, यदि, ( त्वम् ) अश्वं, अमोच्यं, मन्यसे, ततः, अजस्रदीक्षाप्रयतः, सः, मद्गुरुः, विधिना, एव कर्मणि, समाप्ते ( सति ) क्रतोः, अशेषेण, फलेन, युज्यताम् ॥ ६५ ॥

( टीका ) हे प्रभो !=हे इन्द्र !, यदि=चेत्, "त्वं" अश्वं=घोटकं, अमोच्यं=अत्याज्यं, मन्यसे=विचारयसि, "तर्हि" अजस्रदीक्षाप्रयतः=अनवरतयज्ञदीक्षानिरतः, सः, मद्गुरुः=मे पिता, "दिलीपः" विधिना एव=वेदोक्तप्रकारेणैव, श्रुत्युक्तकर्मानुष्ठानुरूपेणेत्यर्थः, कर्म्मणि=अध्वरे, समाप्ते=पूर्णे, "सति" क्रतोः=यज्ञस्य, "यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः" इत्यमरः, अशेषेण=सम्पूर्णेन, फलेन, युज्यताम्=युक्तो भवतु ॥ ६५ ॥

( समासः ) मोचयितुं योग्यः मोच्यः न मोच्य इत्यमोच्यस्तम् । न शेषो यस्य तदशेषम्तेन । अजस्रदीक्षायां प्रयतः इति अजस्रदीक्षाप्रयतः । मम गुरुरिति मद्गुरुः ॥ ६५ ॥

( वाच्यपरिवर्तनम् ) हे प्रभो ! त्वया अश्वः अमोच्यः मन्यते, ततः अजस्रदीक्षाप्रयतेन मद्गुरुणा ........ युज्यताम् ॥ ६५ ॥

( सरलार्थः ) हे देवेन्द्र ! यदि त्वं अश्वस्य मोचनं न अभिलषसि तर्हि मे पिता यथा इमं अश्वं विना अपि शताश्वमेधयागानां सकलं फलं लभेत तथा क्रियताम् एवं कृते तव च मम च कार्यसिद्धिः सम्भविष्यति ॥ ६५ ॥

( सरलार्थ हिन्दी ) हे स्वामिन् यदि आप घोड़ा छोड़ना उचित नहीं समझते हैं तो यज्ञ-दीक्षा में तत्पर मेरा पिता आप के घोड़ा न छोड़ने पर भी विधि पूर्वक ही समाप्त किये हुए अश्वमेध का पूरा फल पावै ॥ ६५ ॥

यथा च वृत्तान्तमिमं सदोगतस्त्रिलोचनैकांशतया दुरासदः ।
तवैव सन्देशहराद्विशांपतिः शृणोति लोकेश ! तथा विधीयताम् ॥

( अन्वय: ) सदोगतः, त्रिलोचनैकांशतया, दुरासदः, विशांपतिः, ( दिलीपः ) यथा, तव, सन्देशहरात्, एव, इमं, वृत्तान्तं, शृणोति, हे लोकेश ! ( त्वया ) तथा, विधीयताम् ॥ ६६ ॥

( टीका ) सदोगतः = यज्ञसभागतः, त्रिलोचनैकांशतया = शिवान्यमूर्तितया, दुरासदः = दुर्धिगमः, विशांपतिः = नरपतिः "दिलीपः" यथा = येन प्रकारेण, तव = भवतः, सन्देशहरात् = वाचिकहरात् " दूतादित्यर्थः " एव " सन्देशवाग्वाचिकं स्यात् " इत्यमरः, इमं = पूर्वोक्तं, वृत्तान्तं = वार्तां, " वार्ता प्रवृत्तिर्वृत्तान्तः " इत्यमरः, शृणोति = आकर्णयति, हे लोकेश ! = हे लोकपाल !, त्वया = भवता, तथा = तेन प्रकारेण, " येन प्रकारेण, भवतु, तथेत्यर्थः " विधीयताम् = क्रियताम् ॥ ॥ ६६ ॥

( समासः ) त्रीणि लोचनानि यस्य सः त्रिलोचनः, एकः अंश एकांशः, त्रिलोचनस्यैकांश इति त्रिलोचनैकांशः, तस्य भावः तत्ता तया । दुःखेन आसादयितुं योग्य इति दुरासदः । सन्दिश्यत इति सन्देशस्तस्य हरस्तस्मात् । लोकानामीश इति लोकेशस्तत्सम्बुद्धौ ॥ ६६ ॥

( वाच्यपरिवर्तनम् ) सदोगतेन……दुरासदेन पत्या……अयं वृत्तान्तः श्रूयते हे लोकेश तथा विधेहि ॥ ६६ ॥

( सरलार्थः ) अन्यजनदुरासदस्य सभासनासीनस्य दिलीपस्य दीक्षितत्वात् त्रिलोचनस्यैकांशत्वेन हेतुना तस्य निकटे कोऽपि गन्तुं

१. अष्टमूर्त्तेः शिवस्यैका मूर्त्तिर्यजमान इति अतो यजमानतया अश्वमेधयज्ञे दीक्षिततया इत्यपीतिभावः ।

न शक्नोति अतः हे इन्द्र ! तवैव दूतः इमं सकलं वृत्तान्तं गत्वा तं निवेदयतु ॥ ६६ ॥

( सरलार्थ हिन्दी ) और हे लोकेश ! सभा में बैठा हुआ राजा इस वृत्तान्त को जैसे सुने वैसा उपाय भी आप ही करें ॥ ६६ ॥

तथेति कामं प्रतिशुश्रुवान् रघोर्यथागतं मातलिसारथिर्ययौ ।
नृपस्य नातिप्रमनाः सदोगृहं सुदक्षिणासूनुरपि न्यवर्तत ॥ ६७ ॥

( अन्वयः ) मातलिसारथिः, ( इन्द्रः ) रघोः, कामं, तथा, इति प्रतिशुश्रुवान्, यथागतं, ययौ सुदक्षिणासूनुः, अपि, नातिप्रमनाः, नृपस्य, सदोगृहं, न्यवर्तत ॥ ६७ ॥

( टीका ) मातलिसारथिः = इन्द्रः, रघोः = दिलीपपुत्रस्य, कामं = मनोरथं, तथा इति = तथास्त्विति, प्रतिशुश्रुवान् = प्रतिज्ञातवान् "सन्" यथागतं ययौ = जगाम, "येन मार्गेण आयातस्तेनैव मार्गेण गत इत्यर्थः" सुदक्षिणासूनुः = रघुः, अपि नातिप्रमनाः = नातिप्रसन्नः सन्, नृपस्य = राज्ञो दिलीपस्य; सदोगृहं, = दीक्षामण्डपं न्यवर्तत = परावर्तत ॥ ६७ ॥

( समासः ) मातलिः सारथिर्यस्य सः । सुदक्षिणाया सूनुरिति सुदक्षिणासूनुः । प्रहृष्टं मनः अस्य इति प्रमनाः, अत्यन्तं प्रमनाः, अतिप्रमनाः, न अति प्रमनाः नातिप्रमनाः ॥ ६७ ॥

( वाच्यपरिवर्तनम् ) मातलिसारथिना प्रतिशुश्रुवे, सुदक्षिणा-सूनुना नातिप्रमनसा सता.............न्यवर्तत ॥ ६७ ॥

( सरलार्थः ) "तथास्तु" इति वचसा रघोः विज्ञापनां अङ्गीकृत्य येन मार्गेण आयातस्तेनैव पथा इन्द्रे गते रघुरपि नातिप्रसन्नचित्तः सन् राज्ञो दिलीपस्य दीक्षामण्डपम् अगच्छत् ॥ ६७ ॥

( सरलार्थ हिन्दी ) इन्द्र रघु की बातको मानता हुआ जिस मार्ग से आया था उसी ओर गया । सुदक्षिणा का पुत्र रघु भी घोड़े के न मिलने से विशेष प्रसन्न न होकर राजा के सभा स्थान की ओर लौटा ॥ ६७ ॥

तमभ्यनन्दत्प्रथमं प्रबोधितः प्रजेश्वरः शासनहारिणा हरेः ।
परामृशन्हर्षजड़ेन पाणिना तदीयमङ्गं कुलिशव्रणाङ्कितम् ॥ ६८ ॥

( अन्वयः ) हरेः, शासनहारिणा, प्रथमं, प्रबोधितः, प्रजेश्वरः, हर्षजड़ेन, पाणिना, कुलिशव्रणाङ्कितम्, तदीयम्, अङ्गं, परामृशन्, तं, ( रघुं ) अभ्यनन्दत् ॥ ६८ ॥

( टीका ) हरेः = इन्द्रस्य, शासनहारिणा = आज्ञापालकेन, प्रथमं = पूर्वं, प्रबोधितः = विज्ञापितः, प्रजेश्वरः = राजा दिलीपः, हर्ष-जड़ेन = आनन्दशिशिरेण, "शिशिरो जड़ः" इत्यमरः, पाणिना = हस्तेन, कुलिशव्रणाङ्कितं = वज्रप्रहारचिन्हितं, तदीयं = रघुसम्बन्धि, अङ्गं = शरीरं, परामृशन् = संस्पृशन्, तं = रघुं, अभ्यनन्दत = प्रशशंस ॥ ६८ ॥

( समासः ) शासनं हरतीति शासनहारी, तेन । प्रकर्षेण जायन्त इति प्रजाः तासां ईश्वर इति । जलति घनीभवतीति, जड़ः "डलयोरेकत्वस्मरणाज्जड़ः" हर्षेण जड़ इति हर्षजड़ः तेन । कुलिशस्य व्रणैः अङ्कितमिति कुलिशव्रणाङ्कितम् । तस्य इदं तदीयं । परामृशतीति परामृशन् ॥ ६८ ॥

( सरलार्थः ) कुमारस्य रघोः आगमनात् प्रागेव इन्द्रदूतमुखात् सकलं वृत्तान्तं विदित्वा दिलीपः अधुना निकटमायातं प्रियं पुत्रं रघुं आलिङ्गनादिभिरभिनन्द्य अशनिक्षतचिह्नितं पुत्रस्य देहं हस्तेन परामृशन् आनन्दनिमग्नो बभूव ॥ ६८ ॥

( सरलार्थ हिन्दी ) रघुके आने के पूर्वही इन्द्रदूतद्वारा सम्पूर्ण वृत्तान्त जाना हुआ राजा दिलीप वज्रके घावोंसे चिन्हित प्रिय पुत्रका शरीर हर्षसे कांपते हुए हाथ से स्पर्शकर अत्यन्त प्रशंसा करता हुआ ॥ ६८ ॥

इति क्षितीशो नवतिं नवाधिकां महाक्रतूनां महनीयशासनः ।
समारुरुक्षुर्दिवमायुषः क्षये ततान सोपानपरम्परामिव ॥ ६९ ॥

( अन्वयः ) महनीयशासनः, क्षितीशः, इति महाक्रतूनां, नवाधिकां, नवतिम्, आयुषः, क्षये, "सति" दिवं, समारुरुक्षुः, सोपानपरम्पराम्, इव, ततान ॥ ६९ ॥

( टीका ) महनीयशासनः = पूजनीयाज्ञः, क्षितीशः = भूपतिः, इति = इत्थम्, " अनेन प्रकारेण " महाक्रतूनाम् = अश्वमेधानां, नवाधिकां = नवोत्तरां, नवतिम् = एकोनशतम्, आयुषः = जीवितकालस्य, क्षये = नाशे, "सति" दिवं = स्वर्गं, समारुरुक्षुः = सम्यग् आरोढुमिच्छुः, सोपानपरम्पराम् = आरोहणपङ्क्तिम्, इव, ततान = विस्तारयति स्म ॥ ६९ ॥

( समासः ) महनीयं शासनं यस्य सः । क्षितेरीश इति क्षितीशः । महान्तश्च ते क्रतव इति । नवभिरधिकेति नवाधिका तां । सोपानानां परम्परेति सोपानपरम्परा ताम् ॥ ६९ ॥

( सरलार्थः ) माननीयाज्ञः दिलीपः शरीरान्ते स्वर्गारोहणार्थं सोपानपङ्क्तिमिव एवम् एकोनशतरूङ्ख्यकान् अश्वमेधयागान् शास्त्ररीत्या समाप्तिमनयत् ॥ ६९ ॥

( सरलार्थ हिन्दी ) इस प्रकार जीवन के अन्तमें स्वर्ग चढ़ने की इच्छा करनेवाले राजादिलीपने सीढ़ियोंकी पंक्तिकी समान निन्यानबे अश्वमेध यज्ञकी पंक्ति पूरी की ॥ ६९ ॥

अथ सविषयव्यावृत्तात्मा यथाविधि सूनवे

नृपतिककुदं दत्वा यूने सितातपवारणम् ।

मुनिवनतरुच्छायां देव्या तया सह शिश्रिये

गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥ ७० ॥

( अन्वयः ) अथ, विषयव्यावृत्तात्मा, सः, ( दिलीपः ) यूने, सूनवे, यथाविधि, नृपतिककुदं; सितातपवारणं, दत्त्वा, तया, देव्या सह, मुनिवनतरुच्छायां, शिश्रिये, हि, ( यतः ) गलितवयसाम्, इक्ष्वाकूणाम्, इदं, कुलव्रतम्, " अस्ति " ॥ ७० ॥

( टीका ) अथ = अनन्तरं, विषयव्यावृत्तात्मा = रूपरसगन्धादिविषयनिवृत्तचित्तः, सः = दिलीपः, यूने = तरुणाय, " वयस्थस्तरुणो युवा " इत्यमरः, सूनवे = सुताय, यथाविधि = यथाशास्त्रं, नृपतिककुदं = राजलक्ष्म, " चिन्हमिति यावत " " ककुद्वत् ककुदं

श्रेष्ठे वृषाङ्के राजलक्ष्मणि' इति विश्वः, सितातपवारणं=शुभ्रच्छत्रं, दत्त्वा=अर्पयित्वा, तया देव्या=सुदक्षिणया, सह=साकं, मुनिवनतरुच्छायां=तपोवनवृक्षच्छायां, "यत्र वने मुनयः निवसन्ति तन्मुनिवनं" शिश्रिये=आश्रितवान्, हि=यस्मात्कारणात् गलित-वयसां=क्षीणावस्थानां, "वृद्धानाम्" इति वा, इक्ष्वाकूणाम्=इक्ष्वाकुवंशसमुद्भवानाम्, इदं=वनगमनं, कुलव्रतं=कुलाचारः, अस्तीति शेषः ॥ ७० ॥

( समासः ) विषयेभ्यः व्यावृत्तः आत्मा यस्य सः । नृन् पातीति नृपतिः तस्य ककुदमिति । आतपस्य वारणमिति आतपवारणं, सितञ्च तदातपवारणमिति सितातपवारणं । मुनीनां वनं मुनिवनं तस्य तरुः-इति मुनिवनतरुः, तस्य छाया तां । गलितानि वयांसि येषां तेषां । कुलस्य व्रतम् इति कुलव्रतम् ॥ ७० ॥

( वाच्यपरिवर्तनम् ) अथ विषयव्यावृत्तात्मना तेन.........अनेन कुलव्रतेन भूयते ॥ ७० ॥

( सरलार्थः ) अथ वृद्धः सः दिलीपः सुयोग्यं तं रघुं साम्राज्ये अभिषिच्य स्वयञ्च सर्वान् सांसारिकविषयान् परित्यज्य पारमार्थिक-श्रेयोलाभाय सुदक्षिणया सह तपोवननिवासमकरोत् यतो वृद्धावस्था-याम् इक्ष्वाकुवंशीयानाम् अयमेव कुलाचारः ॥ ७० ॥

( सरलार्थ हिन्दी ) अन्त में संसार से विरक्त होकर राजा दिलीप प्रिय पुत्र रघु को विधि पूर्वक राजचिह्न, श्वेतच्छत्र, चँवर, मुकुट आदि देकर इक्ष्वाकुवंशियों की कुल प्रथा के अनुसार आप अपनी धर्मपत्नी रानी सुदक्षिणा के सहित मुनिवन के वृक्षों की छाया सेवन करता हुआ ॥ ७० ॥

श्रीकालिदासकविवर्य्यविनिर्मितेऽस्मिन्
काव्ये वरे हि रघुवंशमिति प्रसिद्धे ।

राज्याभिषेकमपि जन्म रघोरुदीर्य
सर्गः समाप्तिमगमद्रुचिरस्तृतीयः ॥ ३ ॥

इति पाठकोपाव्ह-स्मार्तकर्मानुष्ठाननिष्ठ-स्वधर्मधुरन्धर-कश्यपवंशावतंस-श्रीजयकृष्णशर्मतनुजनुषा श्रीगौरीनाथशर्म्मणा विरचितया सुबोधिनीसमाख्यया व्याख्यया सरलार्थया प्राकृतभाषया च संवलितो महाकवि श्रीकालिदासकृतौ रघुवंशे महाकाव्ये रघुराज्याभिषेको नाम तृतीयः सर्गः

॥ ३ ॥

# चतुर्थः सर्गः ।

स राज्यं गुरुणा दत्तं प्रतिपद्याधिकं बभौ ।
दिनान्ते निहितं तेजः सवित्रेव हुताशनः ॥ १ ॥

( अन्वयः ) सः, ( रघुः ) गुरुणा, दत्तं, राज्यं, प्रतिपद्य, दिनान्ते, सवित्रा, निहितं, तेजः ( प्रतिपद्य ) हुताशनः, इव, अधिकं बभौ ॥ १ ॥

( टीका ) सः ( रघुः ) गुरुणा ( पूज्येन पित्रा ) दत्तं ( अर्पितं, "वितीर्णं" इति वा ) राज्यं ( प्रजापालनात्मकं राजकर्म, आधिपत्यम् इति वा ) प्रतिपद्य ( प्राप्य ) दिनान्ते ( सायङ्काले) सवित्रा (सूर्य्येण) निहितं ( निक्षिप्तं ) "स्थापितं" वा, ) तेजः ( कान्ति,) प्राप्य, हुताशनः ( अग्निः ) इव ( यथा ) अधिकं ( अत्यन्तं ) बभौ ( रेजे ) ॥१॥

( समासः ) दिनस्य अन्त इति दिनान्तस्तस्मिन् । हुतम् अश्नातीति हुताशनः । राज्ञो भावः कर्म वा राज्यम् ॥ १ ॥

( वाच्यपरिवर्तनम् ) तेन……हुताशनेन इव अधिकं बभे ॥ १ ॥

( सरलार्थः ) यथा वह्निः सायं सूर्य्यतेजः समधिगम्य अतितरां तेजः प्राप्नोति ततश्चाधिकं प्रदीप्तो भवति तथैव रघुरपि पितुः सकाशाद् राज्यं लब्ध्वा परमं तेजोऽलभत ॥ १ ॥

( सरलार्थ हिन्दी ) दिनके अन्तमें सूर्य से तेज पाकर जिस प्रकार अग्नि शोभा प्राप्त करता है उसी प्रकार पिता का दिया हुआ राज पाकर वह रघु अधिक शोभायमान हुआ ॥ १ ॥

दिलीपानन्तरं राज्ये तं निशम्य प्रतिष्ठितम् ।
पूर्वं प्रधूमितो राज्ञां हृदयेऽग्निरिवोत्थितः ॥ २ ॥

( अन्वयः ) दिलीपानन्तरं, राज्ये, तं, ( रघुं ) प्रतिष्ठितं, निशम्य, पूर्वं, राज्ञां, हृदये, प्रधूमितः, ( अग्निः ) उत्थितः, इव, ( अभूत् ) ॥ २ ॥

( टीका ) दिलीपानन्तरं ( राज्ञो दिलीपस्य पश्चात् ) राज्ये ( राजकर्म्मणि ) तं ( रघुं ) प्रतिष्ठितं ( कृतास्पदं ) "अवस्थितं" इति वा, निशम्य ( श्रुत्वा ) पूर्वं ( दिलीपसमये ) राज्ञां ( नृपाणां ) हृदये ( हृदि ) प्रधूमितः ( सञ्जातधूमः ) अग्निः ( सन्तापवह्निः ) "अग्निर्वैश्वानरो वह्निः" इत्यमरः, "इदानीम्" उत्थितः ( प्रज्वलितः ) इव, अभूत् ( बभूव ) ॥ २ ॥

( समासः ) दिलीपस्य अनन्तरमिति दिलीपानन्तरम्। प्रकर्षेण धूमोऽस्य सञ्जात इति प्रधूमितः ॥ २ ॥

( सरलार्थः ) दिलीपानन्तरं रघुं राज्याधिरूढमुपश्रुत्य प्रतिस्पर्द्धिनां राज्ञां हृदये पूर्वतोऽप्यधिकसन्तापोऽभवत् ॥ २ ॥

( सरलार्थ हिन्दी ) राजाओंके हृदयमें मानो पहलेकी धधकती हुई आग रघुको राज्यपर बैठा सुनकर प्रज्वलित सी हुई ॥ २ ॥

पुरुहूतध्वजस्येव तस्योन्नयनपङ्क्तयः।
नवाभ्युत्थानदर्शिन्यो ननन्दुः सप्रजाः प्रजाः ॥ ३ ॥

( अन्वयः ) सप्रजाः, प्रजाः, पुरुहूतध्वजस्य, इव, तस्य, (रघोः) नवाभ्युत्थानदर्शिन्यः ( अत एव ) उन्नयनपङ्क्तयः, (सत्यः) ननन्दुः ॥३॥

( टीका ) सप्रजाः (ससन्तानाः) प्रजाः (जनाः) [1]पुरुहूतध्वजस्य ( इन्द्रकेतोः ) इव, "इन्द्रमहोत्सवस्य इव, इत्यर्थः. तस्य ( रघोः ) [2]नवाभ्युत्थानदर्शिन्यः (नूतनाभ्युदयाऽवलोकिन्यः) "अत एव" उन्नयनपङ्क्तयः ( ऊर्ध्वावलोकनासक्तनेत्रमालाः ) "ऊर्ध्वावलोकनतत्परा इत्यर्थः" "सत्यः" ननन्दुः ( आनन्दम्प्रापुः ) ॥ ३ ॥ प्रजा-

( समासः ) प्रकर्षेण जायन्त इति प्रजाः ताभिः सहिताः सप्रजाः। पुरु ( बहुलं ) हूतं (आह्वानं यज्ञेषु) अस्य सः पुरुहूतः(पुरूणि (बहूनि) हूतानि ( नामानि ) अस्य स इति वा पुरुहूतः,)पुरुहूतस्य ध्वजः पुरुहूतध्वजः तस्य। नवञ्च तदभ्युत्थानमिति नवाभ्युत्थानं, नवाभ्युत्थानं पश्यन्तीति नवाभ्युत्थानदर्शिन्यः। उत् नयनानां पङ्क्तयो यासां ताः॥ ३ ॥

उन्नयनपङ्क्तयः।

[1] गजाकारं चतुःस्तम्भं पुरद्वारे प्रतिष्ठितं।
पौराः कुर्वन्ति शरदि पुरुहूतं महोत्सवम् ॥

[2] अभिषिक्तो हि राजा गजेन्द्रमारुह्य स्वपुरं प्रदक्षिणीकुर्यादित्याचारः।

( वाच्यपरिवर्तनम् ) सप्रजाभिः प्रजाभिः.........नवाभ्युत्थान-दर्शनीभिः उन्नयनपङ्क्तिभिः ननन्दे ॥

( सरलार्थ ) वर्षाकाले इन्द्रध्वजमुत्थितं दृष्ट्वा यथा सर्वाः प्रजा नन्दन्ति, तथा रघोरभ्युदयमवलोक्य सर्वाः प्रजाः परमां मुदमवापुः॥३॥

( सरलार्थ हिन्दी ) इन्द्रकी पताका की समान उसके नवीन वैभवको देखकर उसकी प्रजा आनन्दको प्राप्त हुई ॥ ३ ॥

सममेव समाक्रान्तं द्वयं द्विरदगामिना ।
तेन सिंहासनं पित्र्यमखिलं चारिमण्डलम् ॥ ४ ॥

( अन्वयः ) द्विरदगामिना, तेन, ( रघुणा ) पित्र्यं सिंहासनम्, अखिलम्, अरिमण्डलं, च, "एतत्" द्वयं, समम्, एव, समाक्रान्तम् ॥ ४ ॥

( टीका ) द्विरदगामिना ( गजगामिना ) "दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः । मतङ्गजो गजो नागः कुञ्जरो वारणः करी" इत्यमरः, तेन ( रघुणा ) पित्र्यं ( जनकसम्बन्धि ) सिंहासनं ( सिंहचिह्नितमासनं ) "नृपासनम्" इत्यर्थः, अखिलं ( सकलं ) अरिमण्डलं ( वैरिराष्ट्रं ) च, "एतत्" द्वयं (द्विसङ्ख्याकं) समम् एव ( युगपदेव ) समाक्रान्तम् ( अधिष्ठितम् ) ॥ ४ ॥

( समासः ) द्वौ रदौ यस्य सः द्विरदः, स इव गच्छतीति द्विरदगामी तेन । द्विरदेन गच्छतीति तेन द्विरदगामिनेति विग्रहे "हस्तिनमारुह्य पुरे विचरता इत्यर्थः" । पितुरागतं पित्र्यं । सिंह इव आसनं सिंहासनम् सिंहाकारम् आसनमितिवा । अरीणां मण्डलमित्यरिमण्डलम् । सम्यग् आक्रान्तमिति समाक्रान्तम् ॥ ४ ॥

( वाच्यपरिवर्तनम् ) द्विरदगामी सः ... सममेव समाक्रान्तवान् ॥

( सरलार्थः ) गजगामिना तेन राज्यासनं, सकलं शत्रुमण्डलञ्च एककालमेवाक्रान्तम् ॥ ४ ॥

( सरलार्थ हिन्दी ) रघुने पूर्वजोंका सिंहासन ( राज्यासन ) और संपूर्ण शत्रुमण्डलको एकही साथ अपने अधीन किया ॥ ४ ॥

छायामण्डललक्ष्येण तमदृश्या किल स्वयम् ।
पद्मा पद्मातपत्रेण भेजे साम्राज्यदीक्षितम् ॥ ५ ॥

( अन्वयः ) पद्मा, स्वयम्, अदृश्या, ( सती ) साम्राज्यदीक्षितं, तं, छायामण्डललक्ष्येण भेजे किल ॥ ५ ॥

( टीका ) पद्मा (लक्ष्मीः) "लक्ष्मीः पद्मालया पद्मा" इत्यमरः, स्वयं, अदृश्या (अलक्ष्या) "सती" साम्राज्यदीक्षितं ( मण्डलाधिपत्याभिषिक्तं ) तं ( रघुं ) छायामण्डललक्ष्येण (कान्तिपुञ्जानुमेयेन) पद्मातपत्रेण ( कमलच्छत्रेण ) सिषेवे ॥ ५ ॥

( समासः ) द्रष्टुं योग्या दृश्या, न दृश्येत्यदृश्या । दीक्षा सञ्जाता अस्य सः दीक्षितः, सम्यग् राजते असौ सम्राट्, सम्राजः कर्म्म साम्राज्यं तस्मिन्दीक्षितः साम्राज्यदीक्षितस्तम् । छायायाः मण्डलम् छायामण्डलं तेन लक्ष्यमिति छायामण्डललक्ष्यं, तेन । आतपात्त्रायत इत्यातपत्रं पद्ममेवातपत्रमिति पद्मातपत्रं तेन ॥ ५ ॥

( वाच्यपरिवर्तनम् ) पद्मया स्वयम् अदृश्यया सत्या साम्राज्यदीक्षितः सः भेजे ॥ ५ ॥

( सरलार्थ ) राज्यासनोपविष्टं तं लक्ष्मीरप्रकटरूपा सती स्वयं कान्तिमण्डलानुमेयेन कमलच्छत्रेण सिषेवे । "लक्ष्मीर्हि पद्मातपत्रेण सम्राजं सेवते" इत्यागमात्। अन्यथा कथमेतादृशी कान्तिसम्पत्तिः सम्भवितुं शक्नोति ॥ ५ ॥

( सरलार्थ हिन्दी ) राज्यासनपर बैठे हुए उसको मानो लक्ष्मी ने अप्रगटरूप होकर कान्तिमण्डल से अनुमान होनेवाले कमल के छत्र से आपही सेवन किया ॥ ५ ॥

परिकल्पितसान्निध्या काले काले च बन्दिषु ।
स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वती ॥ ६ ॥

( अन्वयः ) काले, काले, बन्दिषु; परिकल्पितसान्निध्या, सरस्वती, च, स्तुत्यं, तं ( रघुं ) अर्थ्याभिः, स्तुतिभिः, उपतस्थे ॥ ६ ॥

( टीका ) काले काले ( सर्वेष्वपि योग्यकालेषु ) बन्दिषु (स्तुतिपाठकेषु) परिकल्पितसान्निध्या ( कृतसन्निधाना ) "सती" स्तुत्यं (स्तुतियोग्यं) तं ( रघुं ) अर्थ्याभिः ( अर्थयुक्ताभिः ) "सत्याभिः" इति वा, स्तुतिभिः ( स्तोत्रैः ) उपतस्थे ( भेजे ) ॥ ६ ॥

( समासः ) परिकल्पितं साान्निध्यं यया सा । स्तोतुं योग्यः स्तुत्यः तम् । अर्थाद् अनपेता अर्थ्यास्ताभिः ॥ ६ ॥

( वाच्यपरिवर्तनम् )······परिकल्पितसान्निध्यया सरस्वत्या च स्तुत्यः सः······ ······उपतस्थे ॥ ६ ॥

( सरलार्थ ) " तथा " उचितावसरे सरस्वती स्तुतिपाठकानां साहाय्यार्थं तेषां समीपवर्तिनी भूत्वा स्तोतुं योग्यं तम् उचितैः स्तोत्रैः सिषेवे ॥ ६ ॥

( सरलार्थ हिन्दी ) " और " समय समय पर सरस्वती; स्तुति पाठकों की सहायता के लिये निकटवर्तिनी होकर स्तुति करने योग्य ( रघु ) को अर्थवान् स्तुतियों से विभूषित करती हुई ॥ ६ ॥

मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः ।
तथाप्यनन्यपूर्वेव तस्मिन्नासीद्वसुन्धरा ॥ ७ ॥

( अन्वयः ) यद्यपि, वसुन्धरा, मान्यैः, मनुप्रभृतिभिः, राजभिः भुक्ता, ( बभूव ) तथापि, तस्मिन्, ( रघौ ) अनन्यपूर्वा, इव, आसीत् ॥ ७ ॥

( टीका ) यद्यपि, वसुन्धरा ( पृथिवी ) " सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा । गोत्रा कुः पृथिवी पृथ्वी " इत्यमरः, मान्यैः (माननीयैः) मनुप्रभृतिभिः ( मन्वादिभिः ) राजभिः ( नृपैः ) भुक्ता ( उपभुक्ता) ( अभूत् ) तथापि, तस्मिन् (रघौ) अनन्यपूर्वा ( नेतरोपभुक्ता ) इव, आसीत् ( अभवत् ) ॥ ७ ॥

( समासः ) वसूनि धरतीति वसुन्धरा । मनुः प्रभृतिः ( आदिः ) येषान्ते मनुप्रभृतयस्तैः । अन्यः पूर्वो यस्याः सा अन्यपूर्वा न अन्यपूर्वा भवतीत्यनन्यपूर्वा । मानितुं योग्या मान्यास्तैः ॥ ७ ॥

( वाच्यपरिवर्तनम् )········ प्रजाभिः मन्दोत्कण्ठाभिः कृताभिः अभूयत ॥ ७ ॥

( सरलार्थ ) वसुन्धरा यद्यपि मान्यैर्मन्वादिभिः राजभिरुपभुक्ताऽसीत् तथापि सा तस्मिन् प्रथमपतिकेवाऽनुरक्ताऽभूत् ॥ ७ ॥

( सरलार्थ हिन्दी ) पृथ्वी यद्यपि मन्वादि पूज्य राजाओं से

भोगी हुई थी तो भी उसमें वह दूसरे से न भोगी हुई कामिनी की तरह विशेष अनुराग को प्रकाश करती हुई ॥ ७ ॥

स हि सर्वस्य लोकस्य युक्तदण्डतया मनः ।
आददे नातिशीतोष्णो नभस्वानिव दक्षिणः ॥ ८ ॥

( अन्वयः ) हि, सः, ( रघुः ) युक्तदण्डतया, नातिशीतोष्णः, दक्षिणः, नभस्वान्, इव, सर्वस्य, लोकस्य, मनः, आददे ॥ ८ ॥

( टीका ) हि (निश्चितं) सः (रघुः) युक्तदण्डतया (यथापराधदण्डदानेन) नातिशीतोष्णः (समशीतोष्णः) दक्षिणः ( दक्षिणदिक्सम्भवः) नभस्वान् (पवनः) " नभस्वद्वातपवन " इत्यमरः " मलयानिलः " इत्यर्थः, इव (यथा) सर्वस्य (सकलस्य) लोकस्य (जनस्य) मनः (मानसं) " हृन्मानसं मनः " इत्यमरः, आददे (जहार) ॥ ८ ॥

( समासः ) युक्तो दण्डो यस्य स युक्तदण्डः तस्य भावः युक्तदण्डता तया । न अतिशीतः, अत्युष्णो वा भवतीति नातिशीतोष्णः ॥८॥

( वाच्यपरिवर्तनम् ) तेन युक्तदण्डतया, न अतिशीतोष्णेन दक्षिणेन नभस्वता इव,⋯⋯आददे ॥ ८ ॥

( सरलार्थः ) अनुष्णाशीतः दक्षिणानिल इव सः, अपराधोचितदण्डदानेन सर्वेषां मनांसि अहरत् ॥ ८ ॥

( सरलार्थ हिन्दी ) न बहुत ठण्ढे और न बहुत गरम दक्षिणानिल ( वायु ) के समान वह अपराध के अनुसार दण्ड देने से सब लोगों का मन हरता हुआ ॥ ८ ॥

मन्दोत्कण्ठाः कृतास्तेन गुणाधिकतया गुरौ ।
फलेन सहकारस्य पुष्पोद्गम इव प्रजाः ॥ ९ ॥

( अन्वयः ) तेन, प्रजाः, गुरौ, सहकारस्य, फलेन, पुष्पोद्गमे, इव, गुणाधिकतया, मन्दोत्कण्ठाः, कृताः ॥ ९ ॥

( टीका ) तेन ( रघुणा ) प्रजाः (जनाः) गुरौ ( दिलीपविषये) सहकारस्य ( आम्रस्य ) " आम्रश्चूतोरसालोऽसौ सहकारोऽतिसौरभः " इत्यमरः, फलेन, पुष्पोद्गमे (पुष्पोदये) इव (यथा) गुणाधिकतया (औदार्य्यस्थैर्य्यप्रभावादिगुणाधिक्येन) मन्दोत्कण्ठाः ( न्यूनौत्सुक्याः ) कृताः ( विहिताः ) ॥ ९ ॥

( समासः ) पुष्पस्य उद्गमः इति पुष्पोद्गमस्तस्मिन् । गुणैरधिकः, गुणाधिकः, तस्य भावः गुणाधिकता, तया । मन्दा उत्कण्ठा यासां ताः मन्दोत्कण्ठाः ॥ ६ ॥

( वाच्यपरिवर्तनम् ) प्रजाभिः मन्दोत्कण्ठाभिः कृताभिः अभूयत॥

( सरलार्थः ) यथा लोकाः अतिसौरभं सुमधुरम् आम्रफलं प्राप्य पुनः तत्कलिकां न प्रशंसन्ति तथा प्रजाः दिलीपादप्यधिकं दयादाक्षिण्यादिविविधगुणगणविशिष्टं रघुं राजानं लब्ध्वा दिलीपं न प्रशसंसुः न च संस्मरुः ॥ ६ ॥

( सरलार्थ हिन्दी ) जैसे आम्रवृक्ष में जब तक फल नहीं आता उसका बौरही लोगोंको प्यारा लगता है फल आने पर बौरमें प्यार नहीं रहता उसी प्रकार राज्यासन पर बैठे रघु, गुणों की अधिकतासे अपने उत्पन्न होने के पूर्व पिता ( दिलीप ) में अत्यन्त बढ़ा हुआ प्रजा का प्रेम मन्द करता हुआ ॥ ६ ॥

नयविद्भिर्नवे राज्ञि सदसच्चोपदर्शितम् ।
पूर्व एवाभवत् पक्षस्तस्मिन्नाभवदुत्तरः ॥ १० ॥

( अन्वयः ) नयविद्भिः, नवे, राज्ञि, सद्, असत्, च, उपदर्शितम्, तस्मिन्, ( रघौ ) पूर्वः, एव, पक्षः, अभवत्, उत्तरः (पक्षः) न ( अभवत् ) ॥ १० ॥

( टीका ) नयविद्भिः ( नीतिशास्त्रज्ञैः ) नवे ( नूतने ) " नवीनो नूतनो नवः " इत्यमरः, राज्ञि ( नृपे विषये ) " रघौ " सत् ( धर्मयुद्धादिकम् ) असत् (कपटयुद्धादिकं, च) उपदर्शितं (प्रोक्तं) तस्मिन् (राज्ञि रघौ) पूर्वः एव पक्षः (सत् पक्षः) " धर्मः पक्षः " इति वा, अभवत् ( आसीत् ) उत्तरः पक्षः ( असत् पक्षः) " अधर्मः पक्षः " न अभवत् ( नासीत् ) ॥ १० ॥

( समासः ) नयं विदन्ति ते नयविदस्तैः ॥ १० ॥

( वाच्यपरिवर्तनम् ) नयविदः नवे राज्ञि सत् असत् च उपदर्शितवन्तः तस्मिन् पूर्वेण एव पक्षेण अभूयत उत्तरेण न ॥ १० ॥

( सरलार्थः ) नीतिशास्त्रार्थतत्त्वज्ञाः धर्मोऽधर्मश्चेति पक्षद्वयमुपदिदिशुः, परन्तु तेन आद्यः धर्मपक्ष एवाङ्गीकृतः, द्वितीयोऽधर्मपक्षस्तु न स्वीकृतः ॥ १० ॥

( सरलार्थ हिन्दी ) नीति शास्त्रके तत्त्वको जानने वाले विद्वानों ने धर्म अधर्म दोनों पक्ष दिखलाये परन्तु रघु ने पहलाही पक्ष ( धर्म-पक्ष ) ग्रहण किया दूसरा अधर्म पक्ष नहीं ॥ १० ॥

पञ्चानामपि भूतानामुत्कर्षं पुपुषुर्गुणाः ।
नवे तस्मिन्महीपाले सर्वं नवमिवाभवत् ॥ ११ ॥

( अन्वयः ) पञ्चानाम्, भूतानां गुणाः, अपि उत्कर्षं, पुपुषुः, तस्मिन्, नवे, महीपाले, सर्वं, नवम् इव, अभवत् ॥ ११ ॥

( टीका ) पञ्चानां ( पञ्चसङ्ख्यकानां ) भूतानां ( पृथिव्यप्तेजोवाय्वाकाशानां) [1]गुणाः (गन्धादयः) अपि, उत्कर्षं (आतिशय्यं) पुपुषुः (प्रापुः) तस्मिन् (रघौ) नवे ( नवीने ) महीपाले ( राज्ञि ) "सति" सर्वं (अशेषं) "वस्तु" नवं (नूतनम्) इव (यथा) अभवत् ॥ ११ ॥

( समासः ) महीं पालयतीति महीपालः तस्मिन् ॥ ११ ॥

(वाच्यपरिवर्तनम्) गुणैः उत्कर्षः पुपुषे...सर्वेण नवेन अभूयत ॥११॥

( सरलार्थः) पृथिव्यप्तेजोवाय्वाकाशानां गुणा अपि अपूर्वगुणियोगादपूर्वा इवाऽभवन् ॥ ११ ॥

( सरलार्थ हिन्दी ) पञ्चमहाभूतों के गुणों ने भी उन्नति प्राप्ति की । नये राजा के राज्य में सभी वस्तु नई सी हुई ॥ ११ ॥

यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा ।
तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥ १२ ॥

( अन्वयः ) यथा, इन्दुः, प्रह्लादनाद्, अन्वर्थः ( भवति ) यथा, तपनः, प्रतापाद्, अन्वर्थः ( भवति ) तथा, एव, सः, राजा, प्रकृतिरञ्जनाद्, अन्वर्थः, अभूत् ॥ १२ ॥

( टीका ) यथा (येन प्रकारेण) चन्द्रः (इन्दुः) प्रह्लादनात् ( आह्लादजननात् )"अन्वर्थो भवति" यथा "च" तपनः (सूर्यः) प्रतापात् सन्तापजननात्, " अन्वर्थो भवति " तथा तेन प्रकारेण, एव, सः,

(१) पृथ्वी पञ्च गुणा तोयं चतुर्गुणमथानलः ।
त्रिगुणो द्विगुणो वायुर्वियदेकगुणं भवेत् ।

[२]राजा (रघुः) प्रकृतिरञ्जनात् (प्रजानुरागजननाद्) अन्वर्थः (सार्थकनामा) अभूद् (बभूव) ॥ १२ ॥

(समासः) चन्दयति आल्हादयतीति चन्द्रः। तपतीति तपनः। राजते रञ्जयति वा प्रजाः इति राजा। (धातूनामनेकार्थत्वात् राजतेः कनिन्) प्रकृतेः रञ्जनम् इति प्रकृतिरञ्जनं, तस्मात्। अर्थमनुगतः इति अन्वर्थः ॥ १२ ॥

(वाच्यपरिवर्तनम्) यथा प्रह्लादनात् चन्द्रेण (भूयते) प्रतापात् तपनेन, तथैव.........तेन राज्ञा अन्वर्थेन अभावि ॥ १२ ॥

(सरलार्थः) यथा इन्दुः प्रह्लादकरैः करैः सकलान् जनान् आह्लादयन् स्वनाम सार्थकं करोति यथा च तेजोनिधिः सूर्यः स्वतेजसा जनान् तापयन् स्वनाम सार्थकं करोति तथैवायं रघुरपि सकलाः प्रजाः रञ्जयन् राजेति नाम सार्थकञ्चकार ॥ १२ ॥

(सरलार्थ हिन्दी) जैसे आनन्द देने से चन्द्रमा, तपाने से तपन (सूर्य) अपने २ नामको यथार्थनाम करते हुए। उसी प्रकार प्रजा के रंजन करने से वह रघु भी अपने को यथार्थ नाम वाला राजा बनाता हुआ ॥ १२ ॥

कामं कर्णान्तविश्रान्ते विशाले तस्य लोचने।
चक्षुष्मत्ता तु शास्त्रेण सूक्ष्मकार्यार्थदर्शिना ॥ १३ ॥

(अन्वयः) तस्य, विशाले, लोचने, कामं, कर्णान्तविश्रान्ते, (आस्ताम्) (तस्य) चक्षुष्मत्ता, तु, सूक्ष्मकार्यार्थदर्शिना, शास्त्रेण, (आसीत्) ॥ १३ ॥

(टीका) तस्य (रघोः) विशाले (विस्तीर्ण) लोचने (नयने) कामं (भृशं) कर्णान्तविश्रान्ते (श्रोत्रप्रान्तगते) "आस्ताम्" "तस्य" चक्षुष्मत्ता (नेत्रवत्त्वं) तु, "नयनफलन्त्वित्यर्थः" सूक्ष्मकार्यार्थदर्शिना (दुर्विज्ञेयकर्तव्यार्थप्रकाशिना) शास्त्रेण (धर्म्ममार्गादिप्रतिपादकेन वेदादिना) आसीत् ॥ १३ ॥

---

(२) वेणुतनयं पृथुमुद्दिश्य विष्णुपुराणे—

'पित्रापरञ्जितास्तस्य प्रजास्तेनानुरञ्जिताः।
अनुरागात्ततस्तस्य नाम राजेत्यभाषत इति।

( समासः ) कर्णयोः अन्तः कर्णान्तः तयोः विश्रान्ते । चक्षुरस्त्यस्येति चक्षुष्मान् तस्य भावः चक्षुष्मत्ता । कार्यस्य अर्थः कार्यार्थः, सूक्ष्मश्चासौ कार्यार्थः सूक्ष्मकार्यार्थः, तं पश्यतीति सूक्ष्मकार्यार्थदर्शितेन ॥ १३ ॥

( सरलार्थः ) यद्यपि तस्य दीर्घे नेत्रे कर्णपर्यन्ते आस्तां तथापि सः ताभ्यामेव नेत्रशाली न बभूव किन्तु परोक्षार्थदर्शिना ज्ञानरूपेण चक्षुषा चक्षुष्मान् अभवत् ॥ १३ ॥

( सरलार्थ हिन्दी ) यद्यपि उसके नेत्र कान तक फैले हुए थे परन्तु वह कर्मकी सूक्ष्मविधि दिखानेवाले शास्त्रसेही आखों वाला अपने को समझता था ॥ १३ ॥

लब्धप्रशमनस्वस्थमथैनं समुपस्थिता ।
पार्थिवश्रीर्द्वितीयेव शरत्पङ्कजलक्षणा ॥ १४ ॥

( अन्वयः ) अथ लब्धप्रशमनस्वस्थम्, एनं पङ्कजलक्षणा, शरत्, द्वितीया, पार्थिवश्रीः इव, समुपस्थिता ॥ १४ ॥

( टीका ) लब्धप्रशमनस्वस्थं ( प्राप्तराज्यस्थिरीकरणसमाहितचित्तम् ) एनं (रघुं) पङ्कजलक्षणा (कमलचिह्ना) शरत् ( शरदृतुः ) द्वितीया (अन्या) पार्थिवश्रीः (राजलक्ष्मीः) इव, समुपस्थिता (प्राप्ता) ॥

( समासः ) लब्धस्य प्रशमनमिति लब्धप्रशमनं तेन स्वस्थ इति लब्धप्रशमनस्वस्थः, तं । पङ्कजं लक्षणं यस्याः सा । पृथिव्या ईश्वरः पार्थिवः, तस्य श्रीः इति पार्थिवश्रीः ॥ १४ ॥

( वाच्यपरिवर्तनम् ) लब्धप्रशमनस्वस्थः एषः पङ्कजलक्षणया शरदा द्वितीयया पार्थिवश्रिया इव उपतस्थे ॥ १४ ॥

( सरलार्थः ) शत्रूणामुन्मूलनेन स रघुः राज्ये शान्तिं संस्थाप्य यदा समाहितचित्तः सञ्जातः, तदा शरद् विकसितकमलरूपैर्लक्षणैरपरा राजलक्ष्मीरिव तं सेवितुं समागता ॥ १४ ॥

( सरलार्थ हिन्दी ) स्वराज्यकी यथोचित रक्षा करनेसे शान्तचित्तवाले उसको दूसरी राज्यलक्ष्मीकी समान कमलचिह्नवाली शरद् ऋतु प्राप्त हुई ॥ १४ ॥

निर्वृष्टलघुभिर्मेघैर्मुक्तवर्त्मा सुदुःसहः ।
प्रतापस्तस्य भानोश्च युगपद्व्यानशे दिशः ॥ १५ ॥

( अन्वयः ) निर्वृष्टलघुभिः, मेघैः, मुक्तवर्त्मा, ( अतएव ) सुदुःसहः, तस्य, ( रघोः ) प्रतापः, भानोः, च, ( प्रतापः ) युगपत् , दिशः, व्यानशे ॥ १५ ॥

( टीका ) निर्वृष्टलघुभिः (जलवर्षणागुरुभिः) मेघैः (घनैः) मुक्तवर्त्मा (त्यक्तमार्गः) "अतएव" सुदुःसहः (सोढुमशक्यः) तस्य (रघोः) भानोः (सूर्यस्य) च, प्रतापः (तेजः) " प्रतापस्तापतेजसोः " इति मेदिनी। युगपत् (एककालमेव) दिशः (आशाः) व्यानशे(व्याप)॥१५॥

( समासः ) निःशेषं वृष्टाः निर्वृष्टाः "अतएव" लघवः तैः । मुक्तं वर्त्म यस्य सः । सुतरां दुःखेन सोढुं शक्य इति सुदुःसहः ॥ १५ ॥

( वाच्यपरिवर्तनम् )······मुक्तवर्त्मना सुदुःसहेन तस्य, भानोश्च प्रतापेन युगपत् दिशः व्यानशिरे ॥ १५ ॥

( सरलार्थः ) शरत्समये जलाभावतया मेघाः सूर्यमार्गान् न तिरोदधुः, ततः प्रखरकिरणस्य रवेः तेजोभिः अखिलमाकाशमण्डलमापूरितं, तदा दिशां जेतुमिच्छया प्रस्थितो रघुरपि समस्तमेव दिङ्मण्डलं तेजोभिः पूरयामास ॥ १५ ॥

( सरलार्थ हिन्दी ) जल बर्साकर बादलों ने सूर्य का मार्ग छोड़ा ( आकाश निर्मेघ हुआ ) अतएव सूर्य का तथा मेघों के हट जाने से दिग्विजय के लिये निकले हुए रघुका प्रताप एक साथ दिशाओं में व्याप्त हुआ ॥ १५ ॥

वार्षिकं सञ्जहारेन्द्रो धनुर्जैत्रं रघुर्दधौ ।
प्रजार्थसाधने तौ हि पर्यायोद्यतकार्मुकौ ॥ १६ ॥

( अन्वयः ) इन्द्रः, वार्षिकं, धनुः, संजहार, रघुः, जैत्रं, (धनुः) दधौ, हि, तौ प्रजार्थसाधने, पर्यायोद्यतकार्मुकौ, ( आस्ताम् ) ॥१५॥

( टीका ) इन्द्रः (शक्रः) वार्षिकं (वर्षाकालोद्भवं) धनुः (चापं) सञ्जहार (संयतवान् ) रघुः, जैत्रं ( विजयशीलं ) " धनुः " दधौ (धारयामास) हि ( यस्मात् कारणात् ) तौ ( इन्द्ररघू ) प्रजार्थ-

साधने ( वृध्दिधनलक्षणप्रयोजनसाधनविषये ) पर्य्यायोद्यतकार्मुकौ ( क्रमश उद्यतचापौ ) आस्ताम् ॥ १६ ॥

( समासः ) इन्दतीति इन्द्रः । वर्षासु भवं वार्षिकं । प्रजानाम् अर्थः प्रजार्थस्तेषां साधनं तस्मिन् । पर्य्यायेण उद्यते कार्मुके याभ्यां तौ ॥ १६ ॥

( वाच्यपरिवर्तनम् ) इन्द्रेण वार्षिकं धनुः सञ्जह्रे, रघुणा जैत्रं धनुः दधे, हि ताभ्यां......पर्यायोद्यतकार्मुकाभ्यां अभूयत ॥ १६ ॥

( सरलार्थः ) शरत्काले पुरन्दरः निजं वार्षिकं धनुः संहृतवान् तथाः रघुः दिग्विजयाय विजयशीलं धनुः दधार। तौ इन्द्ररघू पर्य्यायेण स्वं स्वं धनुः उद्यम्य प्रजाहिततत्परौ आस्ताम् ॥ १६ ॥

( सरलार्थ हिन्दी ) इन्द्र ने वर्षा का धनुष रक्खा, रघु ने विजय का ( धनु ) उठाया इस तरह वे दोनों प्रजाही के कार्यसाधन में बारी बारी से धनुष धारी हुए ॥ १६ ॥

पुण्डरीकातपत्रस्तं विकसत्काशचामरः।
ऋतुर्विडम्बयामास न पुनः प्राप तच्छ्रियम् ॥ १७ ॥

( अन्वयः ) पुण्डरीकातपत्रः, विकसत्काशचामरः, ( शरत् ) ऋतुः, तं, ( रघुं ) विडम्बयामास, पुनः, तच्छ्रियं, न, प्राप ॥ १७ ॥

( टीका ) पुण्डरीकातपत्र ( सिताम्भोजच्छत्रः ) " पुण्डरीकं सिताम्भोज" इत्यमरः, विकसत्काशचामरः (प्रफुल्लितकाशव्यजनः) ऋतुः (शरदृतुः) तं (रघुं) विडम्बयामास (अनुचकार) पुनः (किन्तु) तच्छ्रियं (रघुशोभां) "रघुरामणीयकं" न प्राप ॥ १७ ॥

( समासः ) आतपात्त्रायत इति आतपत्रं, पुण्डरीकमेव आतपत्रं यस्य सः। विकसन्ति काशान्येव चामराणि यस्य सः। तस्य श्रीस्तच्छ्रीस्तां तच्छ्रियम् ॥ १७ ॥

( सरलार्थः ) महाराजो रघुर्यथा छत्रचामरादिराजचिह्नैर्बभौ तथैव शरत्समयोऽपि श्वेतकमलरूपराजच्छत्रेण प्रफुल्लितकाशरूपः चामरेण च भाति स्म। इत्थं शरद् रघोः राजचिह्नान्यनुचकार परं तस्य असाधारणीं राजशोभां लब्धुं न शशाक ॥ १७ ॥

( सरलार्थ हिन्दी ) कमलच्छत्रवाली और खिले हुए काशरूप ( एक प्रकार का बड़ा २ कुशा ) चँवरवाली शरद ऋतु ने रघुका अनुकरण किया परन्तु उसकी शोभा नहीं प्राप्त कर सकी ॥ १७ ॥

प्रसादसुमुखे तस्मिंश्चन्द्रे च विशदप्रभे।
तदा चक्षुष्मतां प्रीतिरासीत्समरसा द्वयोः ॥१८॥

( अन्वयः ) तदा, प्रसादसुमुखे, तस्मिन्, ( रवौ ) विशदप्रभे, चन्द्रे, च द्वयोः, चक्षुष्मतां, प्रीतिः, समरसा, आसीत् ॥ १८ ॥

( टीका ) तदा [ तस्मिन् समये ] प्रसादसुमुखे [ प्रसन्नतया सुन्दरानने ] "मनोहरमुखे" इति वा, "प्रसादस्तु प्रसन्नता" इत्यमरः, तस्मिन् [ रवौ ] विशदप्रभे [ धवलकान्तौ ] चन्द्रे [ इन्दौ ] च द्वयोः [ उभयोरपि विषये ] चक्षुष्मतां [ नेत्रवतां ] " जनानाम् " इत्यर्थः, प्रीतिः [ प्रेम ] समरसा [तुल्यस्वादा] आसीत् ॥ १८ ॥

( समासः ) प्रसादेन शोभनं मुखं यस्य असौ प्रसादसुमुखः तस्मिन्। प्रकर्षेण भातीति प्रभा, विशदा प्रभा यस्य सः विशदप्रभः तस्मिन्। रस्यते ( आस्वाद्यते ) इति रसः, समः ( समानः ) रसो यस्याः सा समरसा। चक्षूंषि सन्ति एषां ते चक्षुष्मन्तः तेषाम् ॥१८॥

( वाच्यपरिवर्तनम् ) तदा............प्रीत्या.........समरसया अभूयत ॥ १८ ॥

( सरलार्थः ) यथा निर्मेघाकाशे चन्द्रं वीक्ष्य दर्शकानां चित्तेषु कश्चन अद्भुतानन्दोद्रेकः सञ्जायते तथैव सर्वेषामुपरि सदा प्रसन्नं तं रघुं दृष्ट्वा प्रजानां मनःसु परमानन्दो जातः ॥ १८ ॥

( सरलार्थ हिन्दी ) उस समय प्रसन्नमुख राजा रघु में और स्वच्छ कान्तिवाले चन्द्रमा में प्रजा का प्रेम समान रूप को धारण करता हुआ ॥ १८ ॥

हंसश्रेणीषु तारासु कुमुद्वत्सु च वारिषु।
विभूतयस्तदीयानां पर्यस्ता यशसामिव ॥ १९ ॥

( अन्वयः ) तदीयानां यशसां, विभूतयः, हंसश्रेणीषु, तारासु, कुमुद्वत्सु, वारिषु, च पर्यस्ता इव, ( आसन् ) ॥ १९ ॥

( टीका ) तदीयानां [रघुसम्बन्धिनां] यशसां [ कीर्तीनां ] "यशः कीर्तिः समज्ञा च" इत्यमरः, विभूतयः [ ऐश्वर्याणि ] " शुभ्रत्वलक्षणानि " हंसश्रेणीषु [ राजहंसपंक्तिषु ] तारासु [ नक्षत्रेषु ] "नक्षत्रमृक्षं भं तारा " इत्यमरः, कुमुद्वत्सु [कुमुदयुक्तेषु] वारिषु [ पानीयेषु ] च, पर्यस्ताः [ प्रसारिताः ] इव [ किम् ] इति उत्प्रेक्षा ॥ १६ ॥

( समासः ) तस्य इमानि तदीयानि तेषां । हंसानां श्रेण्यः हंसश्रेण्यः, तासु । कुमुदानि एषु सन्ति इति कुमुद्वन्ति तेषु ॥ १६ ॥

( वाच्यपरिवर्तनम् ) तदीयानां यशसां विभूतिभिः.............. पर्यस्ताभिः इव अभूयत ॥ १६ ॥

( सरलार्थः ) दिग्विजयप्रवृत्तस्य रघोरुज्ज्वलाः कीर्तिराशयः हंससलिलतारकाकुमुदेषु प्रसृता इव विराजन्ते स्म ॥ १६ ॥

( सरलार्थ हिन्दी ) हंसों की पंक्तियों में, तारों में, और कमल वाले जलों में मानो रघुकी ही शुभ्र यश विभूति फैली हुई थी ॥ १६ ॥

इक्षुच्छायानिषादिन्यस्तस्य गोप्तुर्गुणोदयम् ।
आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः ॥ २० ॥

( अन्वयः ) इक्षुच्छायानिषादिन्यः शालिगोप्यः, गोप्तुः, तस्य, ( रघोः ) गुणोदयम्, आकुमारकथोद्घातं, यशः जगुः ॥ २० ॥

( टीका ) इक्षुच्छायानिषादिन्यः [ इक्षुच्छायोपवेशिन्यः ] शालिगोप्यः [सस्यपालिकाः] "स्त्रियः" गोप्तुः [ रक्षकस्य ] तस्य [ रघोः ] गुणोदयं [ सौन्दर्य्यादिगुणप्रकाशं ] आकुमारकथोद्घातं [ कुमारैरपि संस्तूयमानं ] यशः [ कीर्तिं ] जगुः [ गायन्तिस्म ] ॥ २०

( समासः ) इक्षूणां छाया इक्षुच्छायं तत्र आनिषीदन्तीति इक्षुच्छायानिषादिन्यः । शालीन् गोपायन्तीति शालिगोप्यः । गोपायतीति गोप्ता तस्य । गुणेभ्यः उदयो यस्य तत् । कथानाम् उद्घात इति कथोद्घातः, ~~कुमारेभ्य आरभ्य कथोद्घातो यस्य तत्~~ ॥ २० ॥

( वाच्यपरिवर्तनम् ) इक्षुच्छायानिषादिनीभिः शालिगोपीभिः इव अभूयत ॥ २० ॥

( सरलार्थः ) इक्षूणां छायासु सुखेनोपविष्टाः, सस्यरक्षणे नियुक्ताः, कृषकाणां स्त्रियः कुमारैरपि गीयमानानि तानि तानि गीतनिबद्धानि कर्म्माणि गायन्तिस्म ॥ २० ॥

कुमारं अभिव्याप्य आकुमारं, आकुमारं कथोद्घातो यस्य तत् आकुमारकथोद्घातं।

( सरलार्थ हिन्दी ) ऊँखकी छायामें बैठी हुई खेत की रखवारी करने वालियोंने कुमारोंसे स्तुति किये गये उसके यशको गाया ॥२०॥

प्रससादोदयादम्भः कुम्भयोनेर्महौजसः ।
रघोरभिभवाशङ्कि चुक्षुभे द्विषतां मनः ॥ २१ ॥

( अन्वयः ) महौजसः, कुम्भयोनेः, उदयाद्, अम्भः, प्रससाद, रघोः, अभिभवाशङ्कि, द्विषतां, मनः, चुक्षुभे ॥ २१ ॥

( टीका ) महौजसः [महापराक्रमस्य] कुम्भयोनेः [[1]अगस्त्यस्य] उदयात् [ आविर्भावात् ] अम्भः [ पानीयं ] "अम्भोर्णस्तोयपानीयम्" इत्यमरः,[2]प्रससाद [ निर्मलं बभूव ] "महौजसः लोकोत्तरपराक्रमस्य" रघोः, "उदयात्" अभिभवाशङ्कि [पराभवाशङ्कि] द्विषतां [शत्रूणां] मनः [मानसं] चुक्षुभे [ कालुष्यं प्राप ] ॥ २१ ॥

( समासः ) महद् ओजो यस्य सः महौजाः तस्य । कुम्भः योनिर्यस्य स तस्य । अभिभवम् आशङ्कते अभिभवाशङ्कि ॥ २१ ॥

( वाच्यपरिवर्तनम् ) अम्भसा प्रसेदे.........अभिभवाशङ्किना मनसा चुक्षुभे ॥ २१ ॥

( सरलार्थः ) एकतः अगस्त्ये नक्षत्रे समुदिते वर्षाकलुषितानि जलानि निर्मलानि जातानि, अन्यतस्तु दिग्विजयाय उदिते रघौ अरिभूपालानाम् अन्तःकरणानि उद्वेगमलिनानि जातानि ॥ २१ ॥

( सरलार्थ हिन्दी ) प्रतापी अगस्त्य के उदय से जल स्वच्छ हुआ और रघु के उदय से पराभव की शङ्का मानकर शत्रुओं का हृदय मलिन हुआ ॥ २१ ॥

---

१. तयोरादित्ययोः सत्रे दृष्ट्वाप्सरसमुर्वशीं ।
रेतश्चस्कन्द तत्कुम्भे न्यपतद्वासतीवरे ॥
तेनैव तु मुहूर्तेन वीर्यवन्तौ तपस्विनौ ॥
अगस्त्यश्च वसिष्ठश्च तत्रर्षी सम्बभूवतुः ॥
बहुधा पतितं रेतः कलशे च जले स्थले ।
स्थले वसिष्ठश्च मुनिः सम्बभूवर्षिसत्तमः ॥
कुम्भे त्वगस्त्यः सम्भूतो जले मत्स्यो महाद्युतिः ।

२. अगस्त्योदये जलानि प्रसीदन्तीत्यागमः, शरदृतौ अगस्त्यनक्षत्रोदयानन्तरे मेघा अपगच्छन्ति जलानि च निर्मलानि भवन्तीति ज्योतिर्विदश्च ।

मदोदग्राः ककुद्मन्तः सरितां कूलमुद्रुजाः।
लीलाखेलमनुप्रापुर्महोक्षास्तस्य विक्रमम् ॥ २२ ॥

( अन्वयः ) मदोदग्राः, ककुद्मन्तः, सरितां, कूलमुद्रुजाः, महोक्षाः, तस्य, ( रघोः ) लीलाखेलं, विक्रमम् अनुप्रापुः ॥ २२ ॥

( टीका ) मदोदग्राः [ मदोन्मत्ताः ] ककुद्मन्तः (सबलस्कन्धाः) सरितां (नदीनां) कूलमुद्रुजाः ( तीरभेदकाः ) महोक्षाः ( महाकाया बलीवर्दाः ) तस्य ( रघोः ) लीलाखेलं ( विलाससुभगं ) विक्रमं (पराक्रमं) "रघोर्विक्रमम् अनुगताः" इत्यर्थः, वृषपक्षे तु विक्रमः गतिविशेषः, रघुविक्रमोऽपि महोदयः ककुद्राजचिह्नं तद्युक्तः, यात्रायां करितुरगादिखुराद्यभिघातेन सरितां कूलभेदको भवतीति ॥ २२ ॥

( समासः ) मदेन उदग्रा इति मदोदग्राः। ककुद एषां सन्तीति ककुद्मन्तः। कूलानि उद्रुजन्ति इति कूलमुद्रुजाः। महान्तश्च ते उक्षाणश्च इति महोक्षाः। खेलतीति खेलः, लीलया अनायासेन खेलः लीलाखेलः तं लीलाखेलम् ॥ २२ ॥

( वाच्यपरिवर्तनम् ) मदोदग्रैः ककुद्मद्भिः......उद्रुजैः महोक्षैः तस्य लीलाखेलः, विक्रमः अनुप्रापे ॥ २२ ॥

( सरलार्थः ) मदोन्मत्ताः मांसलाः बलीवर्दाः लीलया नदीतटानि उत्पाटयन्तः रघोर्विक्रममनुचक्रुः। २२ ॥

( सरलार्थ हिन्दी ) मदसे उन्मत्त और नदियों के तट तोड़ने वाले बड़े २ बैलों ने उसके खेल के पराक्रमका अनुकरण किया ॥ २२ ॥

प्रसवैः सप्तपर्णानां मदगन्धिभिराहताः।
असूययेव तन्नागाः सप्तधैव प्रसुस्रुवुः ॥ २३ ॥

( अन्वयः ) मदगन्धिभिः = सप्तपर्णानां प्रसवैः, आहताः तन्नागाः, असूयया, इव सप्तधा, एव, प्रसुस्रुवुः ॥ २३ ॥

( टीका ) मदगन्धिभिः ( मदसदृशगन्धैः ) सप्तपर्णानां (सप्तपर्णवृक्षाणां ) "सप्तपर्णो विशालत्वक्शारदो विषमच्छदः" इत्यमरः, प्रसवैः (पुष्पैः) "स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने" इत्यमरः, आहताः (ताडिताः) तन्नागाः (रघुगजाः) "मतङ्गजो गजो नागः

कुञ्जरो वारणः करी" इत्यमरः, असूयया (आहतिजनितैर्ष्ययेव) [1]सप्तधा (सप्तप्रकारेण) एव, प्रसुस्रुवुः (मदक्षरणं चक्रुः) ॥ २३ ॥

( समासः ) मदस्य गन्ध इव गन्धो येषां ते मदगन्धयस्तैः । तस्य नागा इति तन्नागाः ॥ २३ ॥

( वाच्यपरिवर्तनम् )········आहतैः तन्नागैः प्रसुस्रुवे ॥ २३ ॥

( सरलार्थः ) रघोः करिणः प्रफुल्लितानां सप्तपर्णपुष्पाणां उत्कटं गन्धमाघ्राय तदेव अरण्यकरिणां मदजलगन्धम् अनुमन्यमानाः स्पर्द्धयेव सप्तभ्योऽङ्गेभ्यः मदधारामक्षरन् ॥ २३ ॥

( सरलार्थ हिन्दी ) सप्तपर्ण नामक वृक्षके फूलों के मन्दगन्ध को जंगली हाथी का मद समझ कर ही मानों उसके हाथियोंने ईर्षा से अपने सातों अङ्गोंसे मद बहाया ॥ २३ ॥

**सरितः कुर्वती गाधाः पथश्चाश्यानकर्दमान् ।**
**यात्रायै चोदयामास तं शक्तेः प्रथमं शरत् ॥ २४ ॥**

(अन्वयः ) सरितः, गाधाः, पथः, च, अश्यानकर्दमान् कुर्वती, ( सती ) शरत्, शक्तेः, प्रथमं, तं, ( रघुं ) यात्रायै, चोदयामास॥२४॥

( टीका ) सरितः (नदीः) गाधाः ( स्वल्पजलाः ) कुर्वती (विदधती) पथः (मार्गान्) च अश्यानकर्दमान् ( शुष्कपङ्कान् ) "कुर्वती" सती, शरत् (शरदृतुः) शक्तेः ( उत्साहशक्तेः ) प्रथमं ( प्राक् ) यात्रायै ( दण्डयात्रायै ) दिग्विजयायेत्यर्थः, तं (रघुं) चोदयामास (प्रेरयामास ) ॥ २४ ॥

( समासः ) अश्यानाः कर्दमा येषां ते अश्यानकर्दमास्तान् ।

( सरलार्थः ) प्रखरैः सूर्यकिरणैः शुष्कसलिलतया सरितस्तरणशक्या जाताः, मार्गाश्च सुखेन गन्तुं योग्याः सञ्जाताः, एवम्भूतो रमणीयः समयस्तस्य मन्त्रप्रभावयुक्तस्य रघोः मनसि दिग्विजयाय उत्साहशक्तिमुद्दीपयामास ॥ २४ ॥

---

[1] ( तालुवक्षकपोलेभ्यः शङ्खकुम्भकरे तथा
रोमकुम्भकटिभ्यश्च दानं प्रक्षरति द्विजः ।
करात्कटाभ्यां मेढ्राच नेत्राभ्याञ्च मदस्रुतिः । इति हस्तिशिक्षा । )

( सरलार्थ हिन्दी ) नदियोंको थाहवाली और मार्गको सूखा करनेवाली शरदऋतुने मानों उसे मनकी उत्साहशक्ति से पहलेही यात्रा निमित्त प्रेरणाकी ॥ २४ ॥

तस्मै सम्यग्घुतो वह्निर्वाजिनीराजनाविधौ ।
प्रदक्षिणार्चिर्व्याजेन हस्तेनेव जयं ददौ ॥ २५ ॥

( अन्वयः ) वाजिनीराजनाविधौ, सम्यक्, हुतः, वह्निः, प्रदक्षिणार्चिर्व्याजेन, हस्तेन, इव, तस्मै, जयं, ददौ ॥ २५ ॥

( टीका ) [1]वाजिनीराजनाविधौ ( अश्वनीराजनाख्यशान्तिकर्मणि ) सम्यक् (यथाशास्त्रं) "विधिवत्" इत्यर्थः, हुतः (तर्पितः) होमसमिद्ध इत्यर्थः, वह्निः ( अग्निः) [2]प्रदक्षिणार्चिर्व्याजेन (प्रदक्षिणपरिक्रमणज्वालाछलेन) " अत एव " हस्तेन ( करेण ) इव, तस्मै (रघवे) जयं ( विजयं ) ददौ ( दत्तवान् ) ॥ २५ ॥

( समासः ) वाजिनां नीराजना वाजिनीराजना, तस्या विधिः वाजिनीराजनाविधिः तस्मिन् । प्रगता दक्षिणा (दिग्)यया सा प्रदक्षिणा प्रदक्षिणा च असौ अर्चिश्च प्रदक्षिणार्चिः सैव व्याजः तेन ॥ २५ ॥

( वाच्यपरिवर्तनम् )············हुतेन वह्निना·········तस्मै जयः ददे ॥ २५ ॥

( सरलार्थः ) यदा रघुः विधिवद् आहुतिं वह्नौ समुत्क्षिपन् तुरगादीनां नीराजनाख्यं कर्म अकरोत् तदा होमाग्निः आहुतिमङ्गीकृत्य निजं ज्वालारूपं करं प्रसार्य तस्मै रघवे विजयं ददौ ॥ २५ ॥

( सरलार्थ हिन्दी ) अश्व-पूजनकी विधिमें उत्तम प्रकारसे हवन की हुई अग्निने दक्षिण ओर उठी हुई ज्वालाके बहानेसे मानों उसको हाथोंसे विजय दिया ॥ २५ ॥

---

१ द्वादश्यामष्टम्यां कार्तिकशुक्लस्य पञ्चदश्यां वा अश्वस्य गजस्य हि कुर्यान्नीराजनसंज्ञितां शान्तिम् । इति बृहत्संहिता ।

गजाश्वमङ्गलाय राजानः प्रयाणसमये नीराजनाविधिं कुर्वन्ति ।

२ इद्धः प्रदक्षिणगतो हुतभुङ् नृपस्य
धात्रीं समुद्ररशनां वशगां करोति ।

स गुप्तमूलप्रत्यन्तः शुद्धपार्ष्णिरयान्वितः।
षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया ॥ २६ ॥

( अन्वयः ) गुप्तमूलप्रत्यन्तः ( रक्षितस्वनिवासस्थानप्रान्तदुर्गः ) शुद्धपार्ष्णिः ( नाशितपृष्ठरिपुः ) अयान्वितः ( शुभावहविधिना युक्तः ) "अयः शुभावहो विधिः" इत्यमरः, सः ( रघुः ) [1]षड्विधं ( षट्प्रकारकं बलं ) सैन्यं, "वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम्" इत्यमरः, आदाय ( गृहीत्वा, दिग्जिगीषया ) दिशां जेतुमिच्छया, प्रतस्थे ( चचाल ) ॥ २६ ॥

( समासः ) मूलश्च प्रत्यन्तश्च मूलप्रत्यन्तौ, गुप्तौ मूलप्रत्यन्तौ येन सः। शुद्धः पार्ष्णिर्यस्य सः। अयेन अन्वित इति अयान्वितः। जेतुमिच्छा जिगीषा, दिशां जिगीषा दिग्जिगीषा, तया। षड् विधाः यस्य तत् षड्विधम् ॥ २६ ॥

( वाच्यपरिवर्तनम् ) गुप्तमूलप्रत्यन्तेन शुद्धपार्ष्णिना अयान्वितेन तेन ........प्रस्तथे ॥ २६ ॥

( सरलार्थः ) सः रघुः प्रथमं निजराष्ट्रदुर्गाणां सर्वतोभावेन रक्षणे रक्षकान् नियुज्य यात्राकालयोग्यमखिलं मङ्गलश्च विधाय "मौलं भृत्यः सुहृच्छ्रेणी द्विषदाटविकं बलम्" इति षड्विधं बलमादाय दिग्जिगीषया प्रस्थानमकरोत् ॥ २६ ॥

( सरलार्थ हिन्दी ) विजययात्रा के पूर्व उसने अपने महलों और गढ़ों की रक्षा का प्रबन्ध किया और पीछे एक भी बैरी न छोड़ा जो कि उपद्रव करता। यात्रा समय उसने मंगलाचरण कर, और छ प्रकार का बल लेकर दिग्विजय के लिये प्रस्थान किया ॥ २६ ॥

अवाकिरन्वयोवृद्धास्तं लाजैः पौरयोषितः।
पृषतैर्मन्दरोद्धूतैः क्षीरोर्मय इवाच्युतम् ॥ २७ ॥

( अन्वयः ) वयोवृद्धाः, पौरयोषितः, लाजैः, मन्दरोद्धूतैः, पृषतैः, क्षीरोर्मयः, अच्युतम्, इव, तम्, अवाकिरन् ॥ २७ ॥

(१) षड्विधं तु बलं व्यूह्य द्विषतोऽभिमुखं व्रजेदिति कामन्दकः।
मौलेदाश्व-हस्त्यश्वरथपादाति नाविकाटविकाश्च ये।

( टीकाः ) वयोवृद्धाः( जरठाः, अधिकवयस्का इत्यर्थः) पौरयोषितः ( नागरिकस्त्रियः ) लाजैः (आचारलाजैः) पृषतैः ( बिन्दुभिः ) क्षीरोर्मयः (क्षीरसमुद्रतरङ्गाः) " भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु " इत्यमरः, अच्युतम् इव ( नारायणमिव) तं ( रघुं ) अवाकिरन् ( ववृषुः ) ॥ २७ ॥

( समासः ) वयसा वृद्धाः । पुरे भवाः पौराः, पौराणां योषितश्च । मन्दरेण उद्धूता मन्दरोद्धूतास्तैः। क्षीरस्य ऊर्मय इति क्षीरोर्मयः। नास्ति च्युतं स्वस्वभावात् स्खलनं यस्य सः तम्। "यस्मान्न च्युतपूर्वोऽहमच्युतस्तेन कर्म्मणा " ( भागवतम् ) ॥ २७ ॥

( सरलार्थः ) समुद्रमन्थनसमये क्षीरोदधेस्तरङ्गपङ्क्तयः मन्दराचलमथनोत्थापितैर्जलबिन्दुभिः विष्णुं यथा व्याप्नुवत्यः तथैव रघोः विजयप्रयाणसमयेऽपि वृद्धाः नागरिकस्त्रियः मङ्गलार्थकलाजाः तस्योपरिवर्षन्तिस्म ॥ २७ ॥

( सरलार्थ हिन्दी ) समुद्रमथन के समय क्षीरसागर की लहरों ने मन्दराचल पर्वत के टक्कर खाने से उठे हुए छींटों से जैसे विष्णुको छादिया उसी प्रकार नगर को वृद्ध नारियों ने भी मङ्गल लाभ के लिये उसके ऊपर लाजा से वर्षा की ॥ २७ ॥

स ययौ प्रथमं प्राचीं तुल्यः प्राचीनबर्हिषा ।
अहिताननिलोद्धूतैस्तर्जयन्निव केतुभिः ॥ २८ ॥
रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसन्निभैः ।
भुवस्तलमिव व्योम कुर्वन् व्योमेव भूतलम् ॥ २९ ॥

( अन्वयः ) प्राचीनबर्हिषा, तुल्यः, सः, अनिलोद्धूतैः, केतुभिः, अहितान्, तर्जयन्, इव, स्यन्दनोद्धूतैः, रजोभिः, व्योम, भुवः, तलम्, इव, घनसन्निभैः, गजैः, च, भूतलं, व्योम, इव, कुर्वन्, " सन् " प्रथमं, प्राचीं, " दिशं " ययौ ॥ २८ ॥ २९ ॥

( टीका ) प्राचीबर्हिषा ( इन्द्रेण, " पर्ज्जन्यो मघवा वृषा हरिहयः प्राचीनबर्हिः स्मृतः " इति हलायुधः, तुल्यः (समानः) सः (रघुः) अनिलोद्धूतैः (वातकम्पितैः) केतुभिः (पताकाभिः) अहितान् (शत्रून्)

तर्जयन् (भर्त्सयन्) इव, "अन्योऽपि यथा अङ्गुल्यादिना तर्जयति" स्यन्दनोद्धूतैः (रथोत्थापितैः) "स्यन्दनोरथः" इत्यमरः, रजोभिः (परागैः) "धूलिभिः" इति वा, "परागः सुमनो रजः" इत्यमरः, व्योम (आकाशं) भुवः (भूमेः) तलम् इव, "पृथ्वीतलमिवेत्यर्थः" घनसन्निभैः (मेघतुल्यैः) "वर्णतः क्रियातः परिमाणतश्च मेघसदृशैः" इत्यर्थः, गजैः (हस्तिभिः) च भूतलं (भूमितलं) व्योम इव (आकाशमिव) कुर्वन् (सम्पादयन्) "सन्" प्रथमं (प्राक्) प्राचीं (पूर्वां दिशं) ययौ (जगाम) ॥ २८ ॥ २९ ॥

(समासः) अनिलेन उद्धूता इति अनिलोद्धूताः, तैः। स्यन्दनैः उद्धूतानि स्यन्दनोद्धूतानि तैः। संनिभान्तीति सन्निभाः, घनैः इव सन्निभा घनसन्निभाः, तैः ॥ २८ ॥ २९ ॥

(वाच्यपरिवर्तनम्) प्राचीनबर्हिषा तुल्येन तेन अनिलोद्धूतैः केतुभिः अहितान् तर्जयता इव ··········कुर्वता सता प्रथमं प्राची दिक् ययेे ॥ २८ ॥ २९ ॥

(सरलार्थः) शतक्रतुतुल्यपराक्रमशाली स रघुः प्राक् पूर्वां दिशं जेतुं तामेव दिशं जगाम तथा वायुना कम्पमानानां पताकानां छलेन शत्रून् तर्जयन् इव चचाल ॥ २८ ॥

सैन्यादिपादोत्थापिता धूलिः नभोमण्डलं तथा आच्छादितवती यथा लोकाः भूतलमिव तदनुमेनिरे। तस्य करिघटा घना घनघटेव भूतलं तथा व्याप्नुवती यथा तत् पृथ्वीतलं मेघाच्छन्नं नभोमण्डलमिव अपश्यन् ॥ २९ ॥

(सरलार्थ हिन्दी) पवन से फहराती हुई पताकाओं से मानों शत्रुओं को ताड़ना देता हुआ इन्द्रसदृश पराक्रम वाला रघु पहले पूर्व दिशा की ओर गया॥ २८ ॥

रास्ते में रथों से इतनी धूल उड़ी कि आकाश धरती के समान दिखाई दिया और मेघ के समान बड़े बड़े हाथी इतने थे कि धरती बादलों से भरे आकाश के समान जान पड़ी॥ २९ ॥

प्रतापोऽग्रे ततः शब्दः परागस्तदनन्तरम्।
ययौ पश्चाद्रथादीति चतुस्कन्धेव सा चमूः ॥ ३० ॥

( अन्वयः ) अग्रे, प्रतापः, ततः, शब्दः, तदनन्तरं, परागः, पश्चाद्, रथादि, इति, सा, चमूः, चतुस्कन्धा, इव, ( ययौ ) ॥ ३० ॥

( टीका ) अग्रे (पुरः) प्रतापः (प्रभावः) "शत्रूणां भयोत्पादकवार्तास्वरूपः" "स प्रभावः प्रतापश्च यत्तेजः कोषदण्डजम्" इत्यमरः, ततः (तदनन्तरं) शब्दः (सेनाकलकलः) तदनन्तरं (तत्पश्चात्) परागः ( अश्वादिखुरन्यासोत्थापिताधूलिः ) पश्चात् ( अनन्तरं ) रथादि (रथाश्वादिकं) इति ( अनेन प्रकारेण) "पूर्वोक्ता" सा चमूः ( सेना ) चतुःस्कन्धा (चतुर्व्यूहा) इव, ययौ ( जगाम ) ॥ ३० ॥

( समासः ) रथः आदिर्यस्य तत्। चत्वारः स्कन्धा यस्याः सा चतुस्कन्धा ॥ ३० ॥

( वाच्यपरिवर्तनम् ) अग्रे प्रतापेन ततः शब्देन तदनन्तरं परागेण, पश्चात् रथादिना यये इति तया चम्वा चतुःस्कन्धया इव यये ॥ ३० ॥

( सरलार्थः ) दिग्विजयार्थं चलितस्य रघोः प्रतापमाहात्म्यं पुरश्चचाल, अनन्तरं सैनिककलकलः, ततः रथोत्थापिता धूलिः, तदनु तस्य सेना, इत्थं सा कृतचतुर्विभागेव ययौ ॥ ३० ॥

( सरलार्थ हिन्दी ) दिग्विजय के लिये निकले हुए रघुकी प्रताप कथा सबसे पहिले चली, उसके बाद सैनिकों का कलकल शब्द, उसके अनन्तर धूलि, उसके अनन्तर रथ, इस प्रकार वह सेना चतुरङ्गसी होकर, चार स्कन्ध के समान जान पड़ी ॥ ३० ॥

मरुपृष्ठान्युदम्भांसि नाव्याः सुप्रतरा नदीः।
विपिनानि प्रकाशानि शक्तिमत्वाच्चकार सः ॥ ३१ ॥

( अन्वयः ) सः ( रघुः ) शक्तिमत्वात, मरुपृष्ठानि, उदम्भांसि, नाव्याः, नदीः, सुप्रतराः, विपिनानि, प्रकाशानि, चकार ॥ ३१ ॥

( टीका ) सः ( रघुः ) शक्तिमत्त्वात् (समर्थत्वात्) मरुपृष्ठानि (निर्जलस्थानानि) उदम्भांसि (उद्भूतसलिलानि) नाव्याः (नौकया तर्तुं शक्याः) नदीः (सरितः) सुप्रतराः ( सेतुबन्धादिना सुखेन तार्याः) "चरणतार्याः कृताः" इत्यर्थः, विपिनानि ( वनानि ) "अटव्यरण्यं

विपिनं गहनं काननं वनम्" इत्यमरः, "छेदादिना" प्रकाशानि (आलोकवन्ति) "निर्वृक्षाणि" इत्यर्थः, चकार ( कृतवान् ) ॥ ३१ ॥

( समासः ) शक्तिर्विद्यते यस्यासौ शक्तिमान्, शक्तिमतो भावः शक्तिमत्वं, तस्मात् । म्रियन्ते भूतानि अस्मिन्निति मरुः, मरुः पृष्ठं येषान्तानि । उत् ऊर्ध्वमागतानि अम्भांसि यस्मिंस्तानि उदम्भांसि । नौभिस्तार्याः नाव्याः । सुखेन प्रतर्तुं शक्याः सुप्रतराः ॥ ३१ ॥

( वाच्यपरिवर्तनम् ) तेन······नद्यः·······चक्रिरे ॥ ३१ ॥

( सरलार्थः ) सः शक्तिशालित्वात् जलरहितां भूमिं ( मरुभूमिं ) सजलां, नावा तरणयोग्यां नदीं चरणतरणयोग्यां, वृक्षबाहुल्यात् दुर्गमाणि वनानि, निर्वृक्षकरणेन सुगमानि चकार ॥ ३१ ॥

( सरलार्थ हिन्दी ) वह रघु प्रतापी होनेसे निर्जलभूमिको जल-वती और नावोंसे पार करने योग्य नदियों को पैरसे पार करने योग्य और वन को कटीले वृक्ष आदि कटवा देनेसे सुगम कराता हुआ॥३१॥

स सेनां महतीं कर्षन्पूर्वसागरगामिनीम् ।
बभौ हरजटाभ्रष्टां गङ्गामिव भगीरथः ॥ ३२ ॥

( अन्वयः ) सः ( रघुः ) पूर्वसागरगामिनीम्, महतीं, सेनां, कर्षन्, हरजटाभ्रष्टां, गङ्गाम् "कर्षन्" भगीरथः, इव बभौ ॥ ३२ ॥

( टीका ) सः ( रघुः ) पूर्वसागरगामिनीं (पूर्वसमुद्रगमनशीलां) महतीं ( सङ्ख्यातीतां ) "विशालां" इत्यर्थः, सेनां ( चमूं ) कर्षन् ( धारयन् ) हरजटाभ्रष्टां (रुद्रजटाऽधःपतितां) गङ्गां, कर्षन्" भगीरथ इव ( भगीरथाभिधेयः भूपतिरिव ) बभौ ( शुशुभे ) ॥ ३२ ॥

( समासः ) पूर्वश्च असौ सागरः पूर्वसागरः, तं गन्तुं शीलं यस्याः सा पूर्वसागरगामिनी तां । हरस्य जटा हरजटाः, ताभ्यो हरजटाभ्यः भ्रष्टा ताम् ॥ ३२ ॥

( वाच्यपरिवर्तनम् ) तेन पूर्वसागरगामिनीं महतीं सेनां कर्षता हरजटाभ्रष्टां गङ्गां भगीरथेन इव बभे ॥ ३२ ॥

( सरलार्थः ) भगीरथो यथा पूर्वपुरुषाणामुद्धारणार्थं शङ्करजटा-जूटपतितां गङ्गाम् अनुगच्छन् शुशोभ तथैवायमपि रघुः दिग्विजयाय सेनां नयन् बभौ ॥ ३२ ॥

( सरलार्थ हिन्दी ) प्रतापी राजा भगीरथ, महादेवजी की जटा से निकली हुई गंगा को लिये जाते हुए जैसी शोभा को प्राप्त हुए उसी प्रकार राजा रघु भी अपनी बड़ी सेना को पूर्व समुद्र की ओर ले जाने से अपूर्व शोभा को प्राप्त हुए ॥ ३२ ॥

त्याजितैः फलमुत्खातैर्भग्नैश्च बहुधा नृपैः ।
तस्यासीदुल्बणो मार्गः पादपैरिव दन्तिनः ॥ ३३ ॥

( अन्वयः ) फलं, त्याजितैः, उत्खातैः, बहुधा, भग्नैः, नृपैः, च, पादपैः, दन्तिनः इव, तस्य, ( रघोः ) मार्गः, उल्बणः, आसीत् ॥३३॥

( टीका ) फलं ( लाभं ) त्याजितैः ( परित्याजितैः ) उत्खातैः ( स्वपदाद्भ्रष्टैः ) बहुधा ( प्रायः ) भग्नैः ( संग्रामे जितैः ) नृपैः (भूपालैः) पादपैः ( वृक्षैः ) दन्तिनः (हस्तिनः) इव, तस्य ( रघोः ) मार्गः ( पन्था) उल्बणः (प्रकाशः) "प्रकाशं प्रकटं स्पष्टमुल्बणं विशदं स्फुटम्" इति यादवः, आसीत् ( अभूत् ) ॥ ३३ ॥

वृक्ष पक्षे—

फलं ( वृक्षफलं, "फलं फले धने बीजे निष्पत्तौ भोगलाभयोः" इत्यमरः, त्याजितैः, उत्खातैः ( उत्पाटितैः ) भग्नैः ( रुग्णैः ) पादपैः वृक्षैः (कर्तृभिः) यथा गजस्य मार्गः निरुपद्रवो भवति तथैव रघोरपीति योजना ॥ ३३ ॥

( समासः ) पादेन मूलेन ( सिक्तं ) जलं पिबन्तीति पादपाः तैः । दन्तौ विद्येते यस्य सः दन्ती, तस्य ॥ ३३ ॥

( वाच्यपरिवर्तनम् )………मार्गेण उल्बणेन अभूयत ॥ ३३ ॥

( सरलार्थः ) महाबलोऽरण्यगजः गमनसमये पथि स्थितान् पादपान् स्वस्थानादुन्मूलितान् इतस्ततश्छिन्नभिन्नाँश्च कृत्वा वर्त्म यथा सर्वतः कण्टकरहितं करोति तथैव रघुरपि शत्रून् स्वपदपरिभ्रष्टान् बहुशः प्रनष्टांश्च कृत्वा निजं मार्गं सर्वथा कण्टकरहितम् अकरोत् ॥ ३३ ॥

( सरलार्थ हिन्दी ) अत्यन्त बलवान् जंगली हाथी जैसे चलने के समय मार्ग के वृक्षों को और कांटो को तोड़ता मरोड़ता और कुचलता हुआ अपना आने जाने का मार्ग कण्टक रहित करता

है उसी प्रकार राजा रघुने कण्टक रूप अपने शत्रुओं को पराजित कर अपना मार्ग शत्रु रहित किया ॥ ३३ ॥

पौरस्त्यानेवमाक्रामंस्तांस्ताञ्जनपदाञ्जयी ।
प्राप तालीवनश्याममुपकण्ठं महोदधेः ॥ ३४ ॥

( अन्वयः ) जयी, एवं, तान्, तान्, पौरस्त्यान्, जनपदान्, आक्रामन् (सन्) तालीवनश्यामं, महोदधेः, उपकण्ठं, प्राप ॥ ३४ ॥

( टीका ) जयी ( विजयी ) "सः रघुः" एवं तान् तान् "सर्वान्" पौरस्त्यान् ( प्राच्यान् ) जनपदान् ( देशान् ) आक्रामन्, ( तेजसा अधिकुर्वन् ) "सन्" तालीवनश्यामं ( तालीवनकृष्णं ) "कृष्णे नीलाऽसितश्याम" इत्यमरः, महोदधेः ( महासागरस्य ) उपकण्ठं ( समीपं ) प्राप ॥ ३४ ॥

( समासः ) जयोऽस्यास्तीति जयी । तालीनां वनानि तालीवनानि तैः श्याममिति तालीवनश्यामम् । उदकानि धीयन्तेऽस्मिन्नित्युदधिः, महाँश्चासावुदधिश्च, महोदधिः, तस्य । पुरः भवाः पौरस्त्यास्तान् । उपगतः कण्ठम् उपकण्ठः तम् ॥ ३४ ॥

( वाच्यपरिवर्तनम् ) जयिना······आक्रामता सता···प्रापे॥३४॥

( सरलार्थः ) इत्थं प्रबलप्रतापः सः रघुः पूर्वदिग्भवान्देशान् स्वायत्तीकुर्वन् तालवृक्षसमूहैः श्यामवर्णां महासागरस्य सीमां प्राप ॥ ३४ ॥

( सरलार्थ हिन्दी ) इस प्रकार जयशील रघु पूर्व के सम्पूर्ण देशों को जीतता हुआ ताल के वनों से श्याम रङ्ग वाली महासमुद्र की सीमा पर पहुंचा ॥ ३४ ॥

अनम्राणां समुद्धर्तुस्तस्मात्सिन्धुरयादिव ।
आत्मा संरक्षितः सुह्मैर्वृत्तिमाश्रित्य वैतसीम् ॥ ३५ ॥

( अन्वयः ) सुह्मैः, वैतसीं, वृत्तिम्, आश्रित्य, अनम्राणां, समुद्धर्तुः, तस्मात्, ( रघोः ) सिन्धुरयात्, इव, आत्मा, संरक्षितः ॥३५॥

( टीका ) सुह्मैः ( सुह्मदेशीयैः ) राजभिः ( नृपैः ) वैतसीं (वेतससम्बन्धिनीं) "नम्रतारूपां" इत्यर्थः, वृत्तिं (व्यवहारं) "प्रणतिं"

इत्यर्थः, आश्रित्य ( अधिष्ठाय ) अनम्राणां ( उद्धतानां ) समुद्धर्तुः (उत्पाटयितुः) तस्मात् (रघोः)"सकाशात्"सिन्धुरयात् (नदीवेगात्) इव ( यथा ) आत्मा, संरक्षितः ( सम्पालितः ) ॥ ३५ ॥

( समासः ) वृत्तिं—वर्तते अनया इति वृत्तिस्ताम् । न नम्रा अनम्रास्तेषां । वेतसा इयं वैतसी तां । समुद्धरतीति समुद्धर्ता तस्य । सिन्धोः रयः सिन्धुरयः, तस्मात् ॥ ३५ ॥

( वाच्यपरिवर्तनम् ) सुह्मा ......... आत्मानं संरक्षितवन्तः ॥३५॥

( सरलार्थः ) यथा वेतसा नदीवेगेन प्रणताः सन्त आत्मानं रक्षन्ति स च प्रणतान् तान् न उन्मूलयति तथैव रिपुसमुन्मूलयितुः प्रबलप्रतापस्य तस्य रघोरागमने सुह्मदेशीया राजानश्चरणप्रणता जाताः, स च प्रणतान् तान् नोत्सादयामास ॥ ३५ ॥

( सरलार्थ हिन्दी ) जैसे नदी के वेग से बेंतोंके झुक जाने पर नदी का वेग उन्हें उखाड़ कर नाश नहीं करता उसी प्रकार पराक्रमशाली राजा रघु के आने से सुह्म देशके राजा उनके चरण पर झुकगए ( मस्तक नवाया ) राजा रघु ने नवे हुए उन का नाश नहीं किया ॥ ३५ ॥

वङ्गानुत्खाय तरसा नेता नौसाधनोद्यतान् ।
निचखान जयस्तम्भान् गङ्गास्रोतोऽन्तरेषु सः ॥ ३६ ॥

( अन्वयः ) नेता, सः, (रघुः) नौसाधनोद्यतान्, वङ्गान्, तरसा, उत्खाय, गङ्गास्रोतोऽन्तरेषु जयस्तम्भान्, निचखान ॥ ३६ ॥

( टीका ) नेता (नायकः) सः (रघुः) नौसाधनोद्यतान् ( पोतसाधनसन्नद्धान् ) वङ्गान् (वङ्गदेशीयान्) " राज्ञः " तरसा ( बलेन ) उत्खाय (उत्पाटय) गङ्गास्रोतोऽन्तरेषु ( गङ्गाप्रवाहमध्येषु ) जयस्तम्भान् ( जयसूचकान् स्तम्भान् ) निचखान ( निखातवान् ) स्थापितवानित्यर्थः ॥ ३६ ॥

( समासः ) नाव एव साधनानि नौसाधनानि तैरुद्यतास्तान् । गङ्गायाः स्रोतांसि तेषामन्तराणि तेषु । जयस्य स्तम्भास्तान् ॥ ३६ ॥

( वाच्यपरिवर्तनम् ) नेत्रा तेन नौसाधनोद्यतान् वङ्गान् तरसा उत्खाय गङ्गास्रोतोन्तरेषु जयस्तम्भाः निचख्निरे ॥ ३६ ॥

( सरलार्थः ) वङ्गदेशीया राजानः रणनैकाः सज्जीकृत्य युद्धप्रवृत्ताः बभूवुः। रघुरपि तान् सकलान् बलेनोन्मूल्य तेषु प्रदेशेषु विजयस्तम्भान् निचखान ॥ ३६ ॥

आपादपद्मप्रणताः कलमा इव ते रघुम् ।
फलैः संवर्धयामासुरुत्खातप्रतिरोपिताः ॥ ३७ ॥

( अन्वयः ) आपादपद्मप्रणताः, उत्खातप्रतिरोपिताः, ते, कलमाः, इव, रघुं, फलैः, संवर्धयामासुः ॥ ३७ ॥

( टीका ) आपादपद्मप्रणताः (चरणकमलपर्यन्तं नताः) उत्खातप्रतिरोपिताः (उन्मूलनानन्तरं पुनः स्थापिताः) ते ( वङ्गाः ) कलमाः, ( शालिधान्यविशेषाः ) इव, रघुं, फलैः ( धनैः ) संवर्द्धयामासुः ( परिवर्द्धयामासुः ) धान्यपक्षे :—

आपादपद्मप्रणताः ( मञ्जरीभारेण नम्राः ) उत्खातप्रतिरोपिताः, (आदौ उत्खाताः ततः प्रतिरोपिताः इति प्रसिद्धमेव ) कलमाः ( धान्यविशेषाः ) फलैः ( सस्यैः ) "फलं फले धने बीजे निष्पत्तौ भोगलाभयोः । सस्ये " इति केशवः, संवर्द्धयामासुः ॥ ३७ ॥

( समासः ) पादः एव पद्मं पादपद्मं, पादपद्मं मर्यादीकृत्य इति आपादपद्मं, आपादपद्मं प्रणता इति आपादपद्मप्रणताः, पूर्वमुत्खाताः, पश्चात्प्रतिरोपिता इति उत्खातप्रतिरोपिताः ॥ ३७ ॥

( वाच्यपरिवर्तनम् ) आपादपद्मप्रणतैः उत्खातप्रतिरोपितैः तैः कलमैः इव, रघुः फलैः संवर्धयामासे ॥ ३७ ॥

( सरलार्थः ) यथा धान्यविशेषाः, कृषकेण स्वस्थानादुत्पाट्य अन्यत्र रोपिताः सन्तः फलभारेण तं पूरयन्ति, तथैव वङ्गदेशीया अपि राजानः राज्ञा रघुणा प्राक् स्वपदाद्भ्रष्टा भूयोऽपि स्वपदे स्थापिताः सन्तश्चरणपर्यन्तं रघोः प्रणतमस्तका भूत्वा धनादिभिस्तं संवर्द्धयामासुः ॥ ३७ ॥

( सरलार्थ हिन्दी ) जैसे किसी धान विशेष को किसान एक जगह से उखाड़ कर दूसरी जगह जमाता है और वह फल फूल से लदकर झुक जाता है उसी प्रकार रघु ने वङ्गदेशीराजाओं को राज्यासन से उखाड़ कर पुनः उसी पद में उन्हें बैठाया । उन्हों ने भी प्रणत-होकर धनादि से रघु की सेवा की ॥ ३७ ॥

स तीर्त्वा कपिशां सैन्यैर्बद्धद्विरदसेतुभिः ।
उत्कलादर्शितपथः कलिङ्गाभिमुखो ययौ ॥ ३८ ॥

( अन्वयः ) सः, ( रघुः ) बद्धद्विरदसेतुभिः, सैन्यैः, कपिशां, ( नदीं ) तीर्त्वा, उत्कलादर्शितपथः, (सन्) कलिङ्गाभिमुखः, ययौ॥३८॥

( टीकाः ) सः ( रघुः ) बद्धद्विरदसेतुभिः ( रचितगजसेतुभिः ) सैन्यैः (सैनिकैः) कपिशां (कपिशानाम नदीं) तीर्त्वा ( उत्तीर्य ) उत्कलादर्शितपथः ( उत्कलदेशीयभूपतिसन्दर्शितमार्गः ) कलिङ्गाभिमुखः ( कलिङ्गदेशोन्मुखः ) " सन् " ययौ ( जगाम ) ॥ ३८ ॥

( समासः ) द्वौ रदौ येषान्ते द्विरदाः, त एव सेतव इति द्विरदसेतवः, बद्धाः द्विरदसेतवो यैस्ते तैः । उत्कलैः आदर्शितः पन्था यस्याऽसौ उत्कलादर्शितपथः । कलिङ्गस्य अभिमुखः इति कलिङ्गाभिमुखः ॥ ३८ ॥

( वाच्यपरिवर्तनम् ) उत्कलादर्शितपथेन तेन······कलिङ्गाभिमुखेन सता यये ॥ ३८ ॥

( सरलार्थः ) ससैन्यः सः निजगजपरम्पराभिः सेतुं निर्माय कपिशानदीमुत्तीर्य उत्कलदेशीयैर्नृपैः प्रदर्शितमार्गः सन् कलिङ्गदेशं जेतुञ्जगाम ॥ ३८ ॥

( सरलार्थ हिन्दी ) सेना सहित वह अपने हाथियों की पंक्ति से पुल बाँधकर कपिशा नदी को पार कर उत्कल देशीय राजाओं से मार्ग दिखाया हुआ कलिङ्ग देश को जीतने के लिये चला ॥ ३८ ॥

स प्रतापं महेन्द्रस्य मूर्ध्नि तीक्ष्णं न्यवेशयत् ।
अङ्कुशं द्विरदस्येव यन्ता गम्भीरवेदिनः ॥ ३९ ॥

( अन्वयः ) सः, ( रघुः ) महेन्द्रस्य, मूर्ध्नि, तीक्ष्णं, प्रतापं, यन्ता, गम्भीरवेदिनः द्विरदस्य, ( मूर्ध्नि ) तीक्ष्णम्, अंकुशम्, इव, न्यवेशयत् ॥ ३९ ॥

( टीका ) सः ( रघुः ) [1]महेन्द्रस्य ( कुलपर्वतविशेषस्य ) मूर्ध्नि (मस्तके) तीक्ष्णं ( तीव्रं ) दुःसहमित्यर्थः, प्रतापं ( पराक्रमं ) यन्ता

( १ ) महेन्द्रो मलयः सह्यः शक्तिमानृक्षपर्वताः ।
विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ॥ विष्णुपुराणम् ।

(सारथिः)[1]गम्भीरवेदिनः (विलम्बज्ञानिनः) द्विरदस्य (गजविशेषस्य) मूर्ध्नि, तीक्ष्णं (निशितं) अङ्कुशम्, इव, न्यवेशयत् (स्थापितवान्)॥३९॥

(समासः) गम्भीरं मन्दं वेत्तीति गम्भीरवेदी तस्य ॥ ३९ ॥

(वाच्यपरिवर्तनम्) तेन……तीक्ष्णः प्रतापः, यन्त्रा……तीक्ष्णः अङ्कुशः इव न्यवेश्यत ॥ ३९ ॥

(सरलार्थः) हस्तिपको यथा मदोन्मत्तस्य दुष्टगजस्य शिरसि तीक्ष्णं अङ्कुशं गाढं निवेशयन् तं दमयति तथैव रघुरपि स्वकीयं प्रबलं प्रतापं महेन्द्रस्य मूर्ध्नि न्यवेशयत् ॥ ३९ ॥

(सरलार्थ हिन्दी) जैसे महावत उन्मत्त हाथी के मस्तक पर तेज अङ्कुश रख उसे अपने वश में करता है उसी प्रकार राजा रघु भी अपना प्रबल प्रताप महेन्द्र के मस्तक पर रखता हुआ ॥३९॥

प्रतिजग्राह कालिङ्गस्तमस्त्रैर्गजसाधनः ।
पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः ॥ ४० ॥

(अन्वयः) गजसाधनः, कालिङ्गः, अस्त्रैः, तं, (रघुं) [2]पक्षच्छेदोद्यतं, शक्रं, शिलावर्षी, पर्वतः, इव, प्रतिजग्राह ॥ ४० ॥

(टीका) गजसाधनः (असङ्ख्यहस्तिश्रेणीसहितः) कालिङ्गः (कलिङ्गदेशनृपतिः) [3]अस्त्रैः (प्रहरणैः) तं (रघुं) पक्षच्छेदोद्यतं (पक्षखण्डनोद्युक्तं) शक्रं (इन्द्रं) शिलावर्षी (पाषाणान्मुञ्चन्) पर्वतः (अचलः) इव, प्रतिजग्राह (प्रत्यभियुक्तवान्) ॥ ४० ॥

(१) त्वग्भेदाद्रुधिरस्रावान्मांसस्य क्रथनादपि ।
संज्ञां न लभते यस्तु विद्याद्गम्भीरवेदिनम् ॥ इति राजपुत्रीये ।
"चिरकालेन यो वेत्ति शिक्षां परिचितामपि ।
गम्भीरवेदी विज्ञेयः स गजो गजवेदिभिः" ॥
इति मृगचर्मीये ।-म० ।

(२) उक्तञ्चः—
पक्षवन्तः पुरा शैला बभूवुः शीघ्रगामिनः । व्रजन्तिस्म दिशः सर्वागरुड़ानिलरंहसः ॥
ततस्तेषु प्रयातेषु देवसंघाः सहस्रशः । भूतानि च भयं जग्मुस्तेषां पतनशङ्कया ॥
ततः क्रुद्धः सहस्राक्षः पर्वतानां सहस्रशः । पक्षांश्चिच्छेद वज्रेण तत्र तत्र शतक्रतुः ॥
(रामायणम्)

(३) अस्यते क्षिप्यते यस्तु मन्त्रयन्त्राग्निभिश्च तत् ।
अस्त्रं, तदन्यतः शस्त्रमसिकुन्तादिकञ्च यत् । इति शुक्रनीतौ ।

( समासः ) गजाः एव साधनं ( सेनाङ्गं ) यस्याऽसौ गजसाधनः । कलिङ्गानां राजा कालिङ्गः । पक्षाणां छेद इति पक्षच्छेदः, तस्मिन्नुद्यतस्तम् । शिलां वर्षति तच्छीलः शिलावर्षी ॥ ४० ॥

( वाच्यपरिवर्तनम् ) गजसाधनेन कालिङ्गेन अस्त्रैः सः, शिलावर्षिणा पर्वतेन पक्षच्छेदोद्यतः शक्रः इव प्रतिजगृहे ॥ ४० ॥

( सरलार्थः ) यथा पवतः पक्षच्छेदे प्रवृत्ते महेन्द्रं शिलावृष्ट्या प्रतिरुणद्धिस्म तथैव गजारूढः कलिङ्गभूपतिरपि उदायुधं रघुम् अस्त्राणां वर्षणेन प्रतिजग्राह ॥ ४० ॥

( सरलार्थ हिन्दी ) जिस प्रकार पर्वत ने पक्षोंको काटने में प्रवृत इन्द्रका, पत्थर बरसा कर सामना किया उसी प्रकार हाथी पर बैठकर आये हुये कलिङ्ग देश के राजाने अस्त्रों से रघुका सामना किया ॥ ४० ॥

द्विषां विषह्य काकुत्स्थस्तत्र नाराचदुर्दिनम् ।
सन्मङ्गलस्नात इव प्रतिपेदे जयश्रियम् ॥ ४१ ॥

( अन्वयः ) काकुत्स्थः, तत्र, द्विषां, नाराचदुर्दिनम् विषह्य, सन्मङ्गलस्नातः, इव, जयश्रियं प्रतिपेदे ॥ ४१ ॥

( टीका ) काकुत्स्थः, ( रघुः ) तत्र ( महेन्द्रपर्वते ) द्विषां (शत्रूणां) नाराचदुर्दिनं, (लोहशरवर्षणम् ) विषह्य ( सहित्वा ) सत् ( यथाशास्त्रं ) मङ्गलस्नातः (मङ्गलाभिषिक्तः) " यत्तु सर्वौषधिस्नानं तन्माङ्गल्यमुदीरितम् " इति यादवः । इव, जयश्रियं (विजयलक्ष्मीं) प्रतिपेदे ( प्राप ) " वैरिबाणवर्षणसहनाऽनन्तरं रघुररीन् व्यजेष्ट " इत्यर्थः ॥ ४१ ॥

( समासः ) नराणां समूहः नारम्, नारम् आचामति इति नाराचः, नाराचानां दुर्दिनमिति नाराचदुर्दिनम् । मङ्गलार्थं स्नातः मङ्गलस्नातः । जयस्य श्रीः जयश्रीः ताम् ॥ ४१ ॥

( वाच्यपरिवर्तनम् ) तत्र काकुत्स्थेन ·················· मङ्गलस्नातेन इव, जयश्रीः प्रतिपेदे ॥ ४१ ॥

( सरलार्थः ) यथा कश्चन नृपतिः प्रथमं पुण्यतीर्थसलिलैः अभिषिक्तो भूत्वा पश्चाद्राज्यलक्ष्मीं गृह्णाति तथैव अयमपि प्रथमं सपत्नास्त्रधाराभिः अभिषिक्तो भूत्वा अनन्तरं विजयलक्ष्मीं लेभे ॥४१॥

( सरलार्थ हिन्दी ) जैसे कोई राजा पहले पवित्र मङ्गलस्नान कर राज्यासन को प्राप्त करता है उसी प्रकार यह भी शत्रु के शरधारा से स्नान कर जयलक्ष्मी को प्राप्त करता हुआ ॥ ४१ ॥

ताम्बूलीनां दलैस्तत्र रचिताऽऽपानभूमयः ।
नारिकेलासवं योधाः शात्रवं च पपुर्यशः ॥ ४२ ॥

( अन्वयः ) तत्र, योधाः, रचितापानभूमयः, " सन्तः " ताम्बूलीनां, दलैः, नारिकेलासवं, यशः, च, पपुः ॥ ४२ ॥

( टीका ) तत्र ( महेन्द्रपर्वते ) योधाः ( भटाः ) रचिताऽऽपानभूमयः ( कल्पितपानयोग्यप्रदेशाः, ) " सन्तः " ताम्बूलीनां ( नागवल्लीनां ), " ताम्बूलवल्ली ताम्बूली नागवल्ल्यप्यथ द्विजा " ताम्बूली नागवल्ल्यां स्त्री " इत्यमरमेदिन्यौ, दलैः ( पर्णैः ) नारिकेलासवं ( नारिकेलमद्यं ) शात्रवं ( शत्रुसम्बन्धि ) यशः ( कीर्तिं ) च, पपुः पीतवन्तः ॥ ४२ ॥

( समासः ) युध्यन्त इति योधाः । आसम्भूय पिबन्ति अत्र इति आपानम्, आपानस्य भूमयः आपानभूमयः, रचिता आपानभूमयो यैस्ते । नारिकेलस्य आसवमिति नारिकेलासवम् । शत्रोरिदं शात्रवम् ॥ ४२ ॥

( वाच्यपरिवर्तनम् ) तत्र रचितापानभूमिभिः योधैः………… नारिकेलासवः,…………पपे ॥ ४२ ॥

( सरलार्थः ) शूरा योधाः महेन्द्राद्रौ पानयोग्यं स्थानं संविधाय ताम्बूलपत्ररचितैः पात्रैः अच्छं नारिकेलासवं, स्वच्छं शत्रुयशश्च पीतवन्तः ॥ ४२ ॥

( सरलार्थ हिन्दी ) उस महेन्द्र पर्वत पर मदिरापान के लिये नया मण्डप बना कर सर्दारों ने ताम्बूल के पत्तों से नारियल की मदिरा और शत्रुओं का यश पान किया ॥ ४२ ॥

गृहीतप्रतिमुक्तस्य स धर्मविजयी नृपः ।
श्रियं महेन्द्रनाथस्य जहार न तु मेदिनीम् ॥ ४३ ॥

( अन्वयः ) धर्मविजयी, सः, नृपः, गृहीतप्रतिमुक्तस्य, महेन्द्रनाथस्य, श्रियं जहार, मेदिनीं, तु, न, ( जहार ) ॥ ४३ ॥

( टीका ) [१]धर्मविजयी ( धर्मार्थं विजयशीलः) सः नृपः ( राजा रघुः ) गृहीतप्रतिमुक्तस्य ( पराजयानन्तरं परित्यक्तस्य ) महेन्द्रनाथस्य (महेन्द्राद्रिभूपस्य) " कलिङ्गदेशाधिपस्येत्यर्थः " श्रियं (लक्ष्मीं) जहार ( हृतवान् ) मेदिनीं (भुवं) तु (किन्तु) "शरणागतवात्सल्यात्" न जहार ॥ ४३ ॥

(समासः ) आदौ गृहीतः पश्चात्प्रतिमुक्त इति गृहीतप्रतिमुक्तस्तस्य । महेन्द्रस्य नाथ इति महेन्द्रनाथस्तस्य । नॄन् पातीति नृपः ॥ ४३ ॥

( वाच्यपरिवर्तनम् ) धर्मविजयिना तेन नृपेण.........श्रीः जह्रे, मेदिनी तु न जह्रे ॥ ४३ ॥

( सरलार्थः ) धर्मविजयी रघुः प्राग् उन्मत्तभावेन आगतं संग्रामोद्यतं कलिङ्गनाथं निर्जित्य (बन्दीकृत्य ) पश्चात्तं मोचयित्वा केवलं तस्य श्रियमेवाऽपहरत् न तु शरणागतस्य तस्य राज्याधिकारम् ॥ ४३ ॥

( सरलार्थ हिन्दी ) धर्म विजयी राजा रघुने महेन्द्रनाथ को युद्ध में परास्त कर केवल उसकी लक्ष्मी हरण की और उसे छोड़ दिया शरण में आये हुए उसका राज्य नहीं लिया ॥ ४३ ॥

ततो वेलातटेनैव फलवत्पूगमालिना ।
अगस्त्याचरितामाशामनाशास्यजयो ययौ ॥ ४४ ॥

( अन्वयः ) ततः, अनाशास्यजयः, ( रघुः ) फलवत्पूगमालिना, वेलातटेन, एव, अगस्त्याचरिताम्, आशां, ययौ ॥ ४४ ॥

( टीका ) ततः (पूर्वदिग्विजयानन्तरं) अनाशास्यजयः (पुरुषान्तराजेयः, " रघुः " फलवत्पूगमालिना (फलितपूगतरुश्रेणीमता) वेलातटेन (अब्धिकूलेन) " समुद्रतटेन " इति वा, " अब्ध्यम्बुविकृतौ

---

१. धर्मविजयी लोभविजयी असुरविजयी चेति त्रिविधो राजा । यः शत्रुं निर्जित्य तदीयां नृपश्रियं नीत्वा तं शत्रुं तस्मिन्नेव स्थाने स्थापयति स धर्मविजयी । यः शत्रुं निर्जित्य तदीयां नृपश्रियं मेदिनीं च गृहीत्वा प्राणैर्न विकुरुते स लोभविजयी । यः शत्रुं हत्वा तदीयां श्रियं मेदिनीं च गृह्णाति स असुरविजयी ।

वेला " इत्यमरः, एव, अगस्त्याचरितां ( [1]अगस्त्यसेवितां ) आशां ( दक्षिणां दिशं ) ययौ ( जगाम ) ॥ ४४ ॥

( समासः ) न अन्यैः पुरुषैः आशास्यते जयो विजयश्रीर्यस्य सः । फलवतां पूगानां मालाः सन्त्यस्मिन्निति फलवत्पूगमालि तेन । वेलायाः तटमिति वेलातटं, तेन । अगस्त्येन आचरितेत्यगस्त्याचरिता ताम् ॥ ४४ ॥

( वाच्यपरिवर्तनम् ) अनाशास्यजयेन ......... अगस्त्याचरिता आशा यये ॥ ४४ ॥

( सरलार्थः ) प्रबलप्रतापः स एवं पूर्वां दिशं निर्जित्य फलपरिपूर्णपूगतरुपङ्क्तिभिः सुशोभितेन समुद्रतटेन दक्षिणां दिशं जगाम ॥ ४४ ॥

( सरलार्थ हिन्दी ) विजयी राजा रघु पूर्व दिशा जीत कर सुपारी के वृक्षों से शोभायमान समुद्रतट से दक्षिण दिशा की ओर चला ॥ ४४ ॥

स सैन्यपरिभोगेण गजदानसुगन्धिना ।
कावेरीं सरितां पत्युः शङ्कनीयामिवाकरोत् ॥ ४५ ॥

( अन्वयः ) सः गजदानसुगन्धिना, सैन्यपरिभोगेण, कावेरीं, सरितां, पत्युः, ( समुद्रस्य ) शङ्कनीयाम्, इव, अकरोत् ॥ ४५ ॥

( टीका ) सः ( रघुः ) गजदानसुगन्धिना ( करिमदसुरभिणा ) सैन्यपरिभोगेण ( सैनिकादेर्जलक्रीडाद्युपभोगेन ) " सेनायां समेवता ये सैन्यास्ते सैनिकाश्च ते " इत्यमरः, कावेरीं ( कावेरी नाम सरितं ) सरितां ( नदीनां ) पत्युः ( सागरस्य ) शङ्कनीयाम् (अविश्वसनीयाम् इव ) " व्यभिचारिणीमिवेत्यर्थः, अकरोत् ( चकार ) ॥ ४५ ॥

( समासः ) सुष्ठु गन्धोऽस्यासौ सुगन्धिः, गजानां, दानेन सुगन्धिः गजदानसुगन्धिः, तेन । गजदानमेव सुगन्धिः यस्मिंस्तेनेति वा । सेनायां समवेताः सैन्याः, तेषां परिभोगः तेन । शङ्कितुं योग्या शङ्कनीया ताम् ॥ ४५ ॥

---

( १ ) अगस्त्यो दक्षिणामाशामाश्रित्य नभसि स्थितः ।
वरुणस्यात्मजो योगी विन्ध्यवातापिमर्दनः ॥

( वाच्यपरिवर्तनम् ) तेन.........शङ्कनीया इव अक्रियत ॥ ४५ ॥

( सरलार्थः ) यथा काचन कामिनी परपुरुषसम्भोगलिङ्गैर्नखक्षतादिभिः स्वकान्तस्य मनसि पुरुषेतरोपभोगशङ्कामुत्पादयति तथैव रघुसैनिकानां जलक्रीडादिभिः क्षुब्धसलिला एवं रघुगजानां दानजलैः सुगन्धीकृता सती सा कावेरी स्वभर्तुः समुद्रस्य सम्भोगलिङ्गदर्शनात् अविश्वसनीया जाता ॥ ४५ ॥

( सरलार्थ हिन्दी ) जैसे कुलटा स्त्री नखक्षतादि चिन्हों से अपने विषय में पतिका अविश्वास उत्पन्न कराती है उसी प्रकार रघु राजा के सैनिकों तथा हाथियों के स्नान करने से उनके मद से सुगन्धित उस कावेरी नदी ने अपने पति समुद्र को अपने विषय में शङ्का योग्य बनाया ॥ ४५ ॥

बलैरध्युषितास्तस्य विजिगीषोर्गताध्वनः ।
मारीचोद्भ्रान्तहारीता मलयाद्रेरुपत्यकाः ॥ ४६ ॥

( अन्वयः ) विजिगीषोः, गताध्वनः, तस्य ( रघोः ) बलैः, मारीचोद्भ्रान्तहारीताः, मलयाद्रेः, उपत्यकाः, अध्युषिताः ॥ ४६ ॥

( टीका ) विजिगीषोः ( विजयाभिलाषुकस्य ) गताध्वनः (प्रोल्लङ्घितमार्गस्य) तस्य (रघोः) बलैः (सैन्यैः) " बलं शक्तिर्बलं सैन्यम्; " इति यादवः, मारीचोद्भ्रान्तहारीताः ( मारीचवनोद्भ्रान्तहारीतपक्षिणः ) मलयाद्रेः ( मलयाचलस्य ) उपत्यकाः ( अधोभूमयः ) आसन्नभूमयो वा, " उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका " इत्यमरः, अध्युषिताः ( अधिष्ठिताः ) ॥ ४६ ॥

( समासः ) मारीचोद्भ्रान्तहारीताः मारीचेषु (मारीचवनेषु) उद्भ्रान्ताः (परिभ्रान्ताः) हारीताः (पक्षिविशेषाः) यासु ताः मारीचोद्भ्रान्तहारीताः। अथवा "मारीचानां गन्धेन भक्षणेन वा उद्भ्रान्तास्त्रस्ता इतस्ततश्चलिता हारीताः पक्षिविशेषाः ( शुकाः ) यासु ताः। विजेतुमिच्छुः विजिगीषुः, तस्य। गतः अध्वा यस्य सः तस्य। मलयश्चासौ अद्रिर्मलयाद्रिस्तस्य ॥ ४६ ॥

( वाच्यपरिवर्तनम् ) बलानि.........अध्युषितवन्ति ॥ ४६ ॥

( सरलार्थः ) विजयाभिलाषिणः रघोः सैनिकाः शुकपक्षिविशिष्टमारीचवृक्षवतो मलयाचलस्य मनोरमासु आसन्नभूमिषु ऊषुः ॥४६॥

( सरलार्थ हिन्दी ) उस मार्ग को पारकर विजय चाहने वाली रघुकी सेनाने शुकादि पक्षियोंसे व्याप्त मिरिचके वृक्षोंवाली मलयाचल की तराई में बसेरा लिया ॥ ४६ ॥

ससञ्जुरश्वक्षुण्णानामेलानामुत्पतिष्णवः।
तुल्यगन्धिषु मत्तेभकटेषु फलरेणवः ॥ ४७ ॥

( अन्वयः ) अश्वक्षुण्णानाम्, एलानाम्, उत्पतिष्णवः, फलरेणवः तुल्यगन्धिषु, मत्तेभकटेषु, ससञ्जुः ॥ ४७ ॥

( टीका ) अश्वक्षुण्णानां ( तुरगचूर्णितानाम् ) एलानां ( एलालतानां ) उत्पतिष्णवः ( उत्पतनशीलाः ) फलरेणवः (एलाफलरजांसि) " रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः " इत्यमरः, तुल्यगन्धिषु ( समानसुगन्धिषु ) मत्तेभकटेषु ( उन्मत्तगजकुम्भस्थलेषु ) ससञ्जुः ( संसक्ताः बभूवुः ) ॥ ४७ ॥

(समासः) अश्वैः क्षुण्णाः अश्वक्षुण्णास्तासाम्। उत्पतितुं शीलम् एषान्ते उत्पतिष्णवः। तुल्यः गन्धोऽस्ति एषामिति तेषु। मत्ताश्च ते इभाश्च मत्तेभाः तेषां कटास्तेषु। फलानां रेणव इति फलरेणवः ॥४७॥

( वाच्यपरिवर्तनम् )......उत्पतिष्णुभिः फलरेणुभिः............ ससञ्जे ॥ ४७ ॥

( सरलार्थः ) भूमौ निपतितानि अश्वखुरसङ्चूर्णितानि एलालतानां फलरजांसि. स्वसदृशगन्धिषु मदोन्मत्तानां गजानां कुम्भस्थलेषु वायुवशात् संसक्तानि बभूवुः ॥ ४७ ॥

( सरलार्थ हिन्दी ) घोड़ोंकी टापों ( खुर ) से खुदी हुई इलायचियों की उड़ती हुई रज समान सुगन्धिवाले मतवाले हाथियोंके कनपटियों में लगीं ॥ ४७ ॥

भोगिवेष्टनमार्गेषु चन्दनानां समर्पितम्।
नास्रसत्करिणां ग्रैवं त्रिपदीछेदिनामपि ॥ ४८ ॥

( अन्वयः ) चन्दनानां, भोगिवेष्टनमार्गेषु, समर्पितं, त्रिपदीछेदिनाम्, अपि, करिणां, ग्रैवं, न, अस्रसत् ॥ ४८ ॥

( टीका ) चन्दनानां ( चन्दनतरूणां ) भोगिवेष्टनमार्गेषु ( सर्पवेष्टनस्थानेषु ) समर्पितं (सञ्जितं) त्रिपदीच्छेदिनां ( शृङ्खलाभञ्जकानां ) अपि, सुखावस्थात्यागिनामिति वा, ( करिणां ) गजानां, ग्रैवं (कण्ठबन्धनं) न ( नहि ) अस्रसत् ( स्रस्तमभूत् ॥ ४८ ॥

( समासः ) चन्दयति अङ्गलेपनादिना आह्लादयति चन्दनः, तेषां । भोगाः ( फणाः ) सन्ति एषां ते भोगिनः, तेषां वेष्टनानि भोगिवेष्टनानि तेषां मार्गास्तेषु । त्रयः पादा अस्याः सा त्रिपदी तां छिन्दन्तीति त्रिपदीच्छेदिनः तेषां । कराः ( शुण्डादण्डाः ) सन्ति एषां ते क- तेषाम् । ग्रीवासु भवं ग्रैवम् ॥ ४८ ॥

( वाच्यपरिवर्तनम् )......समर्पितेन ग्रैवेण न अस्रंसि ॥ ४८ ॥

( सरलार्थः ) चन्दनपादपेषु यत्र यत्र सर्पवेष्टनात् रेखाः सञ्जाताः तत्र तत्र पादबन्धनच्छेदनसमर्थानामपि गजानां ग्रीवाबन्धनं स्रस्तं नाभूत् ॥ ४८ ॥

( सरलार्थ हिन्दी ) चन्दनके वृक्षोंमें सर्पोंके लिपटनेकी रेखाओंमें पैरकी सांकल तोड़नेवाले भी हाथियोंके गलेके रस्से ढीले नहीं हुए अर्थात् वहां चन्दनके वृक्ष इतने बड़े २ हैं कि उनमें जो सांप लपटने के घट्टे पड़ गये हैं उनमें डाले हुए रस्से बड़े २ हाथियों से भी नहीं सरकाये गये ॥ ४८ ॥

दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि ।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥ ४९ ॥

( अन्वयः ) दक्षिणस्यां, दिशि, ( तु ) रवेः, अपि, तेजः, मन्दायते, ( परन्तु ) पाण्ड्याः, तस्याम्, ( दक्षिणस्यां दिशि ) एव, रघोः, प्रतापं, न, विषेहिरे ॥ ४९ ॥

( टीका ) दक्षिणस्यां ( अवाच्यां ) दिशि, रवेः ( सूर्यस्य ) अपि, तेजः ( प्रतापः ) मन्दायते ( [१]मन्दं भवति ) "परन्तु" पाण्ड्याः (पाण्डुदेशोद्भवाः क्षत्रियाः) तस्यां (दक्षिणस्याम् एव) "दिशि" रघोः (दिलीपसुतस्य राज्ञः) प्रतापं (तेजः) "स प्रभावः प्रतापश्च यत्तेजः कोषदण्डजम्" इत्यमरः, न ( नहि ) विषेहिरे ) सोढवन्तः ॥ ४९ ॥

(१) दक्षिणायने सूर्यः शिथिलकरो भवतीति भावः ।

( समासः ) मन्द इव आचरतीति मन्दायते । पाण्डूनां जनपदानां राजा पाण्डयः तस्मिन् साधव इति पाण्डयाः ॥ ४६ ॥

( वाच्यपरिवर्तनम् ) तेजसा मन्दाय्यते, पाण्डयैः.........रघोः प्रतापः नविषेहे ॥ ४६ ॥

( व्या० ) पाण्डया इत्यत्र पाण्डूनां जनपदानां राजान इति वाक्ये "तद्राजस्य बहुषु तेनैवास्त्रियाम्" इति तद्राजस्य लुकि पाण्डव इति पदं स्यात् ॥ ४६ ॥

( सरलार्थ ) प्रखरप्रतापस्यापि सूर्यस्य तेजः दक्षिणस्यान्दिशि मन्दं भवति परन्तु तस्यामेव दिशि तद्देशीया एव राजानः "पाण्डुदेशीयाः" रघोः प्रतापं सोढुं समर्था न बभूवुः, एतदतीवाश्चर्यकरं यत् सूरविजयिनोऽपि असौ विजितवानिति रघोर्महानुत्कर्षो गम्यते ॥ ४६ ॥

( सरलार्थ हिन्दी ) दक्षिण दिशा में सूर्यका भी तेज मन्द होता है परन्तु उसी दिशा में पाण्डु देशके राजाओं से रघुका तेज नहीं सहा गया ॥ ४६ ॥

ताम्रपर्णीसमेतस्य मुक्तासारं महोदधेः ।
ते निपत्य ददुस्तस्मै यशः स्वमिव सञ्चितम् ॥ ५० ॥

( अन्वयः ) ते, निपत्य, तस्मै, सञ्चितं, स्वं यशः, इव, ताम्रपर्णीसमेतस्य, महोदधेः मुक्तासारं ददुः ॥ ५० ॥

( टीका ) ते ( पाण्डयाः ) निपत्य (प्रणिपत्य) तस्मै ( रघवे ) सञ्चितं (एकत्रीकृतं) स्वं ( निजं ) यशः ( कीर्तिम् ) इव, ताम्रपर्णीसमेतस्य ( ताम्रपर्णीसरित्सङ्गतस्य ) महोदधेः ( महासागरस्य ) " सम्बन्धि " मुक्तासारं (मौक्तिकवरं) " सर्वोत्तमं मुक्तामणिनिकरमित्यर्थः " ददुः ( दत्तवन्तः ) ॥ ५० ॥

( समासः ) ताम्रपर्ण्या समेतः ताम्रपर्णीसमेतस्तस्य । मुक्तानां सारः मुक्तासारस्तम् । उदकानि धीयन्तेऽस्मिन्नित्युदधिः, महाँश्चासावुदधिश्चेति महोदधिस्तस्य ॥ ५० ॥

( वाच्यपरिवर्तनम् ) तैः निपत्य.........मुक्तासारः ददे ॥ ५० ॥

( सरलार्थः ) ते पाण्डुदेशीया राजानः ताम्रपर्णीनदीमिलितस्य समुद्रस्य " सम्बन्धि " सञ्चितं मुक्तासारं, स्वकीयं सञ्चितं यश इव तस्मै रघवे प्रणामपूर्वकमुपायनीकृतवन्तः ॥ ५० ॥

( सरलार्थ हिन्दी ) वे पाण्डु देशवासी राजे विनय के साथ प्रणाम कर इकट्ठा किये हुए अपने यश की समान ताम्रपर्णी नदी से संयुक्त महासमुद्र के बड़े २ मोती उसे देते हुए ॥ ५० ॥

सनिर्विश्य यथाकामं तटेष्वालीनचन्दनौ।
स्तनाविव दिशस्तस्याः शैलौ मलयदर्दुरौ ॥ ५१ ॥
असह्यविक्रमः सह्यं दूरान्मुक्तमुदन्वता।
नितम्बमिव मेदिन्याः स्रस्तांशुकमलङ्घयत् ॥ ५२ ॥

( अन्वयः ) असह्यविक्रमः, सः, ( रघुः ) तटेषु, आलीनचन्दनौ, तस्याः, दिशः, स्तनौ, इव, ( स्थितौ ) मलयदर्दुरौ, शैलौ, यथाकामं, निर्विश्य, दूरात्, उदन्वता, मुक्तं, स्रस्तांशुकं, मेदिन्याः, नितम्बम्, इव, सह्यम्, अलङ्घयत् ॥ ५१ ॥ ५२ ॥

( टीका ) असह्यविक्रमः ( असह्यपराक्रमः ) सः ( रघुः ) तटेषु (तीरेषु) आलीनचन्दनौ (चन्दनार्चितौ) तस्याः (दक्षिणस्याः) दिशः, स्तनाविव (कुचाविव) " पिचण्डकुक्षी जठरोदरं तुन्दं स्तनौ कुचौ " इत्यमरः, "स्थितौ" मलयदर्दुरौ (मलयदर्दुरनामकौ) शैलौ (पर्वतौ) यथाकामं (यथेच्छं) निर्विश्य (उपभुज्य) " निर्वेशो भृतिभोगयोः " इत्यमरः, दूरात्, (विप्रकृष्टात्) उदन्वता (समुद्रेण) मुक्तं, ( त्यक्तं) स्रस्तांशुकं (विगलितवसनं) मेदिन्याः (भूमेः) नितम्बं ( श्रोणीतटम् ) इव, " स्थितं " सह्यं ( सह्यनामाचलम् ) अलङ्घयत् ( अतिक्रान्तवान् ) ॥ ५१ ॥ ५२ ॥

( समासः ) सोढुं शक्यः सह्यः न सह्योऽसह्यः, असह्यः विक्रमः पौरुषातिरेको यस्य सः। स्तनपक्षे-आलीनं व्याप्तचन्दनं ययोस्तौ पर्वतपक्षेः- आलीनाः ( व्याप्ता ) चन्दनाः (चन्दनवृक्षाः) ययोस्तौ। मलयश्च दर्दुरश्चेति मलयदर्दुरौ। उदकान्यस्य सन्तीत्युदन्वान्, तेन। स्रस्तम् अंशुकं यस्मात्तत्। काममनतिक्रम्य इति यथाकामम् ॥ ५१ ॥ ५२ ॥

( वाच्यपरिवर्तनम् ) असह्यविक्रमेण तेन मुक्तः स्रस्तांशुकः नितम्ब इव सह्यः अलङ्घ्यत ॥ ५१ ॥ ५२ ॥

( सरलार्थः ) यथा कश्चन रतिलीलाविलासी कामुकः पीनोन्नतस्तनजघनायाः नायिकायाः चन्दनचर्चितं स्तनद्वयं सम्मर्द्य, वसनावरणरहितं नितम्बञ्च यथेच्छम् उपभुज्य, एव तत्समीपादन्यतो गच्छति तथैव अन्यपुरुषासह्यपराक्रमः सः रघुरपितस्या दिशः स्तनाविव स्थितौ मलयदर्दुरौ शैलौ, समुद्रसलिलविमुक्तं सह्यनामानं पर्वतञ्च यथेच्छमुपभुज्य ततोऽन्यतो जगाम ॥ ५१ ॥ ५२ ॥

( सरलार्थ हिन्दी ) विजयी रघु दक्षिण दिशा के स्तनके नाईं स्थित मलय और दर्दुर नाम के दो पहाड़ों पर इच्छानुसार भोग विलास कर साड़ी छोड़ी हुई पृथ्वी के नितंब के समान समुद्र से दूर छोड़े हुए सह्य पर्वत को लांघ आगे की ओर चला ॥ ५१ ॥ ५२ ॥

तस्यानीकैर्विसर्पद्भिरपरान्तजयोद्यतैः ।
रामास्त्रोत्सारितोऽप्यासीत्सह्यलग्न इवार्णवः ॥ ५३ ॥

( अन्वयः ) अपरान्तजयोद्यतैः, विसर्पद्भिः, तस्य, ( रघोः ) अनीकैः, रामास्त्रोत्सारितः, अपि, अर्णवः, सह्यलग्नः, इव, आसीत् ॥ ५३ ॥

( टीका ) अपरान्तजयोद्यतैः (कौङ्कणदेशविजयोद्युक्तैः) " कौङ्कणस्तु पाश्चात्त्यदेशविशेषः " "अपरान्तास्तु पाश्चात्याः" इति यादवः, विसर्पद्भिः (प्रसरणशीलैः) " गच्छद्भिरित्यर्थः " तस्य (रघोः) अनीकैः (सैन्यैः) "सैन्यश्चानीकमस्त्रियाम्" इत्यमरः, अर्णवः ( सागरः ) रामास्त्रोत्सारितः ( जामदग्न्यास्त्रापसारितोऽपि ) सह्यलग्नः ( सह्याख्यपर्वतसंलग्नः ) इव, आसीत् ( अभूत् ) ॥ ५३ ॥

( समासः ) अपरस्या अन्ता इति अपरान्तास्तेषां जयस्तस्मिन्नुद्यतानीत्यपरान्तजयोद्यतानि तैः । रामस्य अस्त्रं रामास्त्रं, तेन उत्सारितः । सह्ये लग्न इति सह्यलग्नः ॥ ५३ ॥

( वाच्यपरिवर्तनम् )...रामास्त्रोत्सारितेन अपि अर्णवेन सह्यलग्नेन इव अभूयत ।

( सरलार्थः ) दक्षिणदिग्विजयार्थं समुद्रतटेन प्रचलितया रघुसेनया, परशुरामास्त्रेण सह्यपर्वतात् पृथक्कृतोऽपि समुद्रः सह्यपर्वतसँल्लग्न इवासीत् ( इति तस्य सैन्याधिक्यमुक्तम् ) ॥ ५३ ॥

( सरलार्थ हिन्दी ) पश्चिम की ओर विजयके लिये जानेवाली उस सेनासे परशुरामके अस्त्रसे हटाया हुआ भी समुद्र सह्यसे मिला हुआ सा जानपड़ता था, अर्थात् समुद्र और पहाड़ के बीच से जो सेना चलती थी वह भी समुद्रके समान ही दीख पड़ती थी ॥ ५३ ॥

भयोत्सृष्टविभूषाणां तेन केरलयोषिताम् ।
अलकेषु चमूरेणुश्चूर्णप्रतिनिधीकृतः ॥ ५४ ॥

( अन्वय ) तेन, ( रघुणा ) भयोत्सृष्टविभूषाणां, केरलयोषिताम्, अलकेषु, चमूरेणुः, चूर्णप्रतिनिधीकृतः ॥५४ ॥

( टीका ) तेन ( रघुणा ) भयोत्सृष्टविभूषाणां ( भीतिपरिहृतालङ्काराणां "भूषा तु स्यादलंक्रिया" इत्यमरः, केरलयोषितां (केरलदेशोद्भवाङ्गनानां) अलकेषु (कुन्तलेषु) "अलकाश्चूर्णकुन्तलाः" इत्यमरः, चमूरेणुः ( सेनाधूलिः ) चूर्णप्रतिनिधीकृतः ( कुङ्कमादिरजःस्थानापन्नीकृतः ) ॥ ५४ ॥

( समासः ) भयेन उत्सृष्टाः विभूषाः याभिस्ताः भयोत्सृष्टविभूषाः तासां । चम्वा रेणुरिति चमूरेणुः । प्रतिनिधीयते इति प्रतिनिधिः चूर्णस्य प्रतिनिधिः चूर्णप्रतिनिधिः न चूर्णप्रतिनिधिः अचूर्णप्रतिनिधिः अचूर्णप्रतिनिधिः सम्पद्यमानः कृत इति चूर्णप्रतिनिधीकृतः । केरलानां योषितस्तासाम् ॥ ५४ ॥

( वाच्यपरिवर्तनम् ) सः······चमूरेणुं चूर्णप्रतिनिधीकृतवान् ।

( सरलार्थः ) रघुः, भीत्या अलङ्कारादीन् परित्यज्य पलायमानानां केरलाङ्गनानां कुन्तलेषु सैन्यपादन्यासोत्थापितरजः कुङ्कमादिसुगन्धितचूर्णस्य स्थानीयं कृतवान् ॥ ५४ ॥

( सरलार्थ हिन्दी ) भयसे अलङ्कारों को त्यागी हुई केरल देशकी स्त्रियों के कुङ्कम के स्थान में रघने सेना की धूलि बैठाई ॥५४॥

मुरलामारुतोद्धूतमगमत् कैतकं रजः ।
तद्योधवारबाणानामयत्नपटवासताम् ॥ ५५ ॥

( अन्वयः ) मुरलामारुतोद्धूतं, कैतकं, रजः तद्योधवारबाणानाम्, अयत्नपटवासताम्, अगमत् ॥ ५५ ॥

( टीका ) [1]मुरलामारुतोद्धूतं ( मुरलानदीवायूत्थापितं ) कैतकं (केतकीकुसुमसम्बन्धि) रजः ( परागः ) तद्योधवारबाणानां ( रघुभटकञ्चुकानां ) "कञ्चुको वारबाणोऽस्त्री" इत्यमरः, अयत्नपटवासतां ( अप्रयासवसनसुगन्धिचूर्णत्वं ) "पिष्टातः पटवासकः" इत्यमरः, अगमत् ( जगाम ) ॥ ५५ ॥

( समासः ) मुरलायाः मारुत इति मुरलामारुतः तेन उद्धूतम् । केतक्या इदं कैतकम् । तस्य योधास्तद्योधाः, तेषां वारबाणा इति तद्योधवारबाणास्तेषाम् । पटो वास्यतेऽनेनेति [2]पटवासः अविद्यमानः यत्नः यस्मै अयत्नः, अयत्नः पटवासः अयत्नपटवासः, तस्य भावः अयत्नपटवासता, ताम् ॥ ५५ ॥

( वाच्यपरिवर्तनम् ) मुरलामारुतोद्धूतेन कैतकेन रजसा...... अयत्नपटवासता अगामि ।

( सरलार्थः ) मुरलानदीवायुना उत्थापितः केतकीपुष्पपरागः रघुसैनिकानां कञ्चुकेषु निपत्य प्रयासेन विनैव वसनवासनाकार्यं विदधौ ॥ ५५ ॥

( सरलार्थ हिन्दी ) मुरला नदी की पवन से उठा हुआ केतकी पुष्प का पराग विना प्रयत्न के ही उसके योधाओं के कवचों का सुगन्ध चूर्ण बन गया ॥ ५५ ॥

अभ्यभूयत वाहानां चरतां गात्रशिञ्जितैः ।
वर्मभिः पवनोद्धूतराजतालीवनध्वनिः ॥ ५६ ॥

---

(१) मुरलानाम्नी केरलदेशेषु काचन नदी वर्तते ।
(२) त्वगुशीरपत्रभागैः सूक्ष्मैलार्धेन संयुतैश्चूर्णः । पटवासः प्रवरोऽयं मृगकर्पूरप्रबोधेन । ( बृहत्संहिता ) ।

( अन्वयः ) चरतां, वाहानां, गात्रशिञ्जितैः वर्मभिः, पवनोद्धूतराजतालीवनध्वनिः, अभ्यभूयत ॥ ५६ ॥

( टीका ) चरतां ( गच्छतां ) वाहानां ( अश्वानां ) गात्रशिञ्जितैः ( सत्वरगमनवशाद् ग्रैवेयादिभूषणयोगेन शब्दायमानैः ) वर्म्मभिः ( कवचैः ) पवनोद्धूतराजतालीवनध्वनिः ( वायुकम्पिततालवृक्षपत्रध्वनिः ) अभ्यभूयत ( तिरस्कृतः ) ॥ ५६ ॥

( समासः ) गात्रेषु शिञ्जितानि गात्रशिञ्जितानि तैः । वृण्वन्ति देहमिति वर्माणि तैः । तालीनां राजानः राजताल्यः, राजतालीनां वनानि राजताली वनानि, पवनेन उद्धूतानि पवनोद्धूतानि, पवनोद्धूतानि च तानि राजतालीवनानि च इति पवनोद्धूतराजतालीवनानि तेषां ध्वनिः ॥ ५६ ॥

( वाच्यपरिवर्तनम् )..........गात्रशिञ्जितानि वर्म्माणि पवनोद्धूतराजतालीवनध्वनिम् अभ्यभवन् ॥ ५६ ॥

( सरलार्थः ) अतिवेगेन रघुसैनिकाश्वानां सञ्चालनात् अश्वारूढानां शरीरस्थलोहमयकवचेभ्यः समुद्भूतो महान् "झन् झन्" इति शब्दः पवनसञ्चालिततालपत्रध्वनिमपि तिरस्कृतवान् ॥ ५६ ॥

( सरलार्थ हिन्दी ) घोड़ों की शीघ्र गति के कारण शब्द करते हुए उनके सवारों के कवचों ने वायु वेग से उत्पन्न तालपत्र की ध्वनि को भी दबा दिया ॥ ५६ ॥

खर्जूरीस्कन्धनद्धानां मदोद्गारसुगन्धिषु ।
कटेषु करिणां पेतुः पुन्नागेभ्यः शिलीमुखाः ॥ ५७ ॥

( अन्वयः ) शिलीमुखाः, पुन्नागेभ्यः, खर्जूरीस्कन्धनद्धानां, करिणां, मदोद्गारसुगन्धिषु, कटेषु, पेतुः ॥ ५७ ॥

( टीका ) शिलीमुखाः (अलयः) " अलिबाणौ शिलीमुखौ " इत्यमरः, पुन्नागेभ्यः ( नागकेशरेभ्यः ) " पुन्नागः केशरेऽशोकः " इत्यभिधानचिन्तामणिः, खर्जूरीस्कन्धनद्धानां, ( तृणद्रुमप्रकाण्डबद्धानां ) " खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमः " इति तथा " अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधेस्तरोः " इतिचामरः, करिणां

( गजानां ) मदोद्गारसुगन्धिषु (मदस्रावसुगन्धिषु) कटेषु (गण्डेषु) " गण्डः कटो मदो दानम् " इत्यमरः, पेतुः (पतिताः) ॥ ५७ ॥

( समासः ) शिली ( शल्यं ) मुखे एषान्ते शिलीमुखाः। खर्जूरीणां स्कन्धेषु नद्धास्तेषाम्। मदस्य उद्गारो मदोद्गारस्तेन सुगन्धय इति मदोद्गारसुगन्धयस्तेषु ॥ ५७ ॥

( वाच्यपरिवर्तनम् ) शिलीमुखैः............पेते ॥ ५७ ॥

( सरलार्थः ) भ्रमराः खर्जूरीवृक्षेषु बद्धानां रघुगजानां मदजल-गन्धेन मुग्धाः सन्तः पुन्नागकुसुमानि विहाय हस्तिनां गण्डस्थलेषु अपतन् ॥ ५७ ॥

( सरलार्थ हिन्दी ) खजूर के स्कन्धों में ( पेड़ों में ) बँधे हाथियों के मद के सुगन्ध से मुग्ध हुए भ्रमर नागकेसरों से उड़कर उनके कनपटियों में आ बैठे ॥ ५७ ॥

अवकाशं किलोदन्वान् रामायाभ्यर्थितो ददौ।
अपरान्तमहीपालव्याजेन रघवे करम् ॥ ५८ ॥

( अन्वयः ) उदन्वान्, अभ्यर्थितः, " सन् " रामाय, अवकाशं, ददौ, किल, रघवे, "तु" अपरान्तमहीपालव्याजेन, करं, ददौ ॥ ५८ ॥

( टीका ) उदन्वान् (उदधिः) "समुद्रः" "उदन्वानुदधिः सिन्धुः" इत्यमरः, अभ्यर्थितः (प्रार्थितः) " याचितः " इति वा, " सन् " रामाय (परशुरामाय) अवकाशं ( स्थानं ) ददौ किल ( दत्तवानिति प्रसिद्धिर्वर्तते) रघवे (राज्ञे दिलीपसूनवे) "तु" अपरान्तमहीपालव्या-जेन (पाश्चात्यभूपच्छद्मना) करं (बलिं) " बलिहस्तांशवः कराः " इत्यमरः, ददौ (दत्तवान्) ॥ ५८ ॥

( समासः ) उदकानि सन्त्यस्मिन्निति उदन्वान्। महीम्पालय-न्तीति महीपालाः, अपरान्तानां, महीपाला इत्यपरान्तमहीपालाः, तेषां, व्याजस्तेनेति अपरान्तमहीपालव्याजेन ॥ ५८ ॥

( वाच्यपरिवर्तनम् ) उदन्वता अभ्यर्थितेन सता रामाय अवका-शः ददे, रघवे तु............करः ददे ॥ ५८ ॥

( सरलार्थः ) यमुदधिं परशुरामोऽपि प्रार्थ्य अवकाशं लेभे सोऽप्युदधिः पश्चिमदिङ्निवासिभूपालव्याजेन रघवे करं दत्तवानिति परशुरामादपि रघोरुत्कर्षः ॥ ५८ ॥

( सरलार्थ हिन्दी ) समुद्र ने परशुराम के प्रार्थना करने पर उसे स्थान दिया था परन्तु रघु को उसने बिना प्रार्थना किये ही भय से मानों पश्चिम देश के राजाओं के मिस से नजर दी ॥ ५८ ॥

मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणम् ।
त्रिकूटमेव तत्रोच्चैर्जयस्तम्भं चकार सः ॥ ५९ ॥

( अन्वयः ) सः, ( रघुः ) तत्र, मत्तेभरदनोत्कीर्णव्यक्तविक्रम-लक्षणं, त्रिकूटम्, एव, उच्चैः, जयस्तम्भं, चकार ॥ ५९ ॥

( टीका ) सः ( रघुः, ) तत्र ( केरलदेशे ) मत्तेभरदनोत्कीर्ण-व्यक्तविक्रमलक्षणम् ( मदोन्मत्तगजदन्तक्षतस्पष्टपराक्रमचिह्नं ), "चिह्नं लक्ष्म च लक्षणम्" इत्यमरः, त्रिकूटं ( त्रिकूटाचलम् ), एव, उच्चैः ( उच्छ्रितं ) जयस्तम्भं ( विजयसूचकं स्तम्भं ) चकार ( विदधौ ) ॥ ५९ ॥

( समासः ) मत्ताश्च ते इभाश्च मत्तेभाः, विक्रमस्य लक्षणानि विक्रमलक्षणानि, मत्तेभानां रदनैः उत्कीर्णानि व्यक्तानि च विक्रमल-क्षणानि यस्मिन् सः तं । जयस्य स्तम्भो जयस्तम्भस्तम् ॥ ५९ ॥

( वाच्यपरिवर्तनम् ) तेन तत्र मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणः त्रिकूटः एव जयस्तम्भः चक्रे ॥ ५९ ॥

( सरलार्थः ) सः रघुः मदोन्मत्तकरिरदनप्रहारेण प्रकटितपरा-क्रमचिह्नं त्रिकूटपर्वतमेव विजयस्तम्भरूपेण स्थापयामास ॥ ५९ ॥

( सरलार्थ हिन्दी ) वहां उसने मतवाले हाथियों के दाँतों से खुदे हुए पराक्रमवाला त्रिकूटाचलही ऊंचा जयस्तंभ माना अर्थात् जो राजा जहां विजय पाता है वहां वह अपना एक विजयस्तंभ खड़ा करता है और उसमें उसके पराक्रम लिखे जाते हैं परन्तु यहां उसने वैसा न लिखकर उस पर्वत में अपने हाथियों के दांतोंसे खुदे हुए गड्ढों ही को पराक्रम का चिन्ह माना ॥ ५९ ॥

पारसीकांस्ततो जेतुं प्रतस्थे स्थलवर्त्मना।
इन्द्रियाख्यानिव रिपूँस्तत्वज्ञानेन संयमी ॥ ६० ॥

( अन्वयः ) ततः, संयमी, सः, तत्वज्ञानेन, इन्द्रियाख्यान्, रिपून्, इव पारसीकान्, जेतुं, स्थलवर्त्मना, प्रतस्थे ॥ ६० ॥

( टीका ) ततः (त्रिकूटपर्वतरूपजयस्तम्भस्थापनानन्तरं) संयमी, (योगी) सः ( रघुः ) तत्वज्ञानेन ( परमतत्वावबोधेन ) इन्द्रियाख्यान् ( इन्द्रियाभिधान् ) रिपून् ( शत्रून् ) इव, पारसीकान् ( पारसदेश-भूमिपान् ) " सिन्धुतटवासिनो म्लेच्छभूपतीन् " इति वा, जेतुं (वशी-कर्तुं) † स्थलवर्त्मना (स्थलमार्गेण) " अयनं वर्त्म मार्गाध्व " इत्य-मरः, प्रतस्थे (चलितः) ॥ ६० ॥

( समासः ) संयमोस्यातीति संयमी ॥ स्थलञ्च तद्वर्त्म स्थलवर्त्म तेन। इन्द्रियाणि आख्या येषां ते तान्। तत्वस्य ज्ञानं तत्वज्ञानं तेन ॥ ६० ॥

( वाच्यपरिवर्तनम् ) ततः तेन संयमिना......॥ ६० ॥

( सरलार्थः ) यथा किल कश्चन योगी परमतत्त्वावबोधेन दुर्जया-नपि इन्द्रियरूपान् महाशत्रून् जयति तथैव असौ रघुरपि सिन्धुतट-निवासिनो म्लेच्छनृपतीञ्जेतुं स्थलमार्गेण जगाम ॥ ६० ॥

( सरलार्थ हिन्दी ) इसके बाद जिस प्रकार योगी इन्द्रियरूप महाशत्रुओं को जीतने के लिये तत्त्वज्ञान के मार्ग का अवलम्बन करते हैं, उसी प्रकार रघु ने पारसीक देशों को जीतने के लिये स्थल मार्ग का अवलम्बन किया ॥ ६० ॥

यवनीमुखपद्मानां सेहे मधुमदं न सः।
बालातपमिवाब्जानामकालजलदोदयः ॥ ६१ ॥

( अन्वयः ) सः ( रघुः ) अकालजलदोदयः, अब्जानां, बालात-पम्, इव यवनीमुखपद्मानां, मधुमदं, न, सेहे ॥ ६१ ॥

† समुद्रयानस्य धर्मशास्त्रविगर्हितत्वादेव रघुः स्थलमार्गेण जगाम।

( टीका ) सः ( रघुः ) अकालजलदोदयः ( असमयमेघोदयः ) अब्जानां ( कमलानां ) " सम्बन्धिनं " बालातपं ( कोमलातपं ) इव, यवनीमुखपद्मानां ( यवनदेशीयकामिनीमुखकमलानां ) मधुमदं ( मदिरापानजनितां क्षीवतां ) न सेहे ( न चक्षमे ) ॥ ६१ ॥

( समासः ) जलानि ददतीति जलदास्तेषाम् उदय इति जलदोदयः, न कालः अकालः, अकाले जलदोदयः अकालजलदोदयः । अप्सु जातानि अब्जानि, तेषाम् । मुखानि पद्मानि इवेति मुखपद्मानि, यवनीनां मुखपद्मानि, तेषाम् । मधुनः ( मद्यस्य ) मदस्तम् ॥ ६१ ॥

( वाच्यपरिवर्तनम् ) तेन·········मधुमदः न सेहे ॥ ६१ ॥

( सरलार्थः ) यथा अनवसरे घनघटाडम्बरः विकसितकमलसम्बन्धि स्वल्पमपि सौरातपं न सहते तथैव रघुरपि पारसदेशीययवनस्त्रीमुखकमलानां मदिरापानजनितां क्षीवतां न सोढवान् ॥ ६१ ॥

( सरलार्थ हिन्दी ) असमय में आक्रमण करने वाले रघु ने मधुमद के द्वारा यवनी स्त्रियों के मुखपद्मों को विकसित नहीं होने दिया । जिस प्रकार असमय में उठा हुआ मेघ बालातप के द्वारा कमलों को विकसित नहीं होने देता ॥ ६१ ॥

सङ्ग्रामस्तुमुलस्तस्य पाश्चात्यैरश्वसाधनैः ।
शार्ङ्गकूजितविज्ञेयप्रतियोधे रजस्यभूत् ॥ ६२ ॥

( अन्वयः ) तस्य, अश्वसाधनैः, पाश्चात्यैः, " सह " शार्ङ्गकूजितविज्ञेयप्रतियोधे, रजसि, तुमुलः, सङ्ग्रामः, अभूत् ॥ ६२ ॥

( टीका ) तस्य (रघोः) अश्वसाधनैः ( तुरङ्गसाधनैः ) पाश्चात्यैः (यवनैः) सह (सार्धं) शार्ङ्गकूजितविज्ञेयप्रतियोधे ( चापटङ्कारानुमेयप्रतिभटे) रजसि (धूलौ) तुमुलः (सङ्कुलः) "तुमुलं रणसङ्कुले" इत्यमरः, सङ्ग्रामः ( युद्धं ) अभूत् ( बभूव ) ॥ ६२ ॥

( समासः ) अश्वाः साधनं सेनाङ्गं येषान्ते अश्वसाधनास्तैः । शृङ्गाणां विकाराः शार्ङ्गाणि तेषां कूजितैः विज्ञेयाः ( विज्ञातुं योग्याः ) प्रतियोधाः ( प्रतियुध्यन्त इति प्रतियोधाः ) यस्मिन् तत् तस्मिन् । पश्चाद्भवाः पाश्चात्यास्तैः ॥ ६२ ॥

( वाच्यपरिवर्तनम् ) तस्य················तुमुलेन सङ्ग्रामेण अभावि ॥ ६२ ॥

( सरलार्थः ) तस्य रघोः, अश्वसाधनसम्पन्नैः यवनदेशीयम्लेच्छ-नरपतिभिः सह भयङ्करः सङ्ग्रामः बभूव यत्र च स्वपक्षस्य परपक्षस्य वा परिचयः केवलं प्रत्यञ्चानिर्घोषेणैव जायतेस्म ॥ ६२ ॥

( सरलार्थ हिन्दी ) घोड़ों पर चढ़कर लड़ने वाले पश्चिमदेश वासियों के साथ रघु का भयङ्कर युद्ध हुआ जिसमें आकाश में उड़ी हुई युद्ध की धूल के अन्धेरे में शत्रु पक्ष और अपने पक्ष के भट केवल धनुष की टङ्कार से जाने जाते थे ॥ ६२ ॥

भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम् ।
तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव ॥ ६३ ॥

( अन्वयः ) सः, ( रघुः ) सरघाव्याप्तैः, क्षौद्रपटलैः, इव, ( लक्ष्यमाणैः ) भल्लापवर्जितैः, श्मश्रुलैः, तेषां शिरोभिः, महीं, तस्तार ॥ ६३ ॥

( टीका ) सः (रघुः) सरघाव्याप्तैः (मधुमक्षिकावेष्टितैः) "सरघा मधुमक्षिका" इत्यमरः, क्षौद्रपटलैः (मधुसमूहैः) इव "लक्ष्यमाणैः" भल्लापवर्जितैः ( अर्धचन्द्राकृतिबाणविशेषकृत्तैः ) श्मश्रुलैः ( श्मश्रुव्याप्तैः ) तेषां ( पाश्चात्यदेशवासिनां ) शिरोभिः ( मस्तकैः ) महीं ( पृथ्वीं ) तस्तार ( आच्छादयामास ) ॥ ६३ ॥

( समासः ) सरघाभिः व्याप्तानि इति सरघाव्याप्तानि तैः । श्मश्रूणि विद्यन्ते येषु तानि श्मश्रुलानि तैः । क्षुद्राभिः मधुमक्षिकाभिः कृतानि क्षौद्राणि तेषां पटलानि तैः । भल्लैः अपवर्जितानि तैः ॥६३ ॥

( वाच्यपरिवर्तनम् ) तेन········मही तस्तरे ॥ ६३ ॥

( सरलार्थः ) रघुः मधुमक्षिकायुतानि क्षौद्रपटलानीव, श्मश्रुसहितानि यवननृपतिशिरांसि भल्लास्त्रविशेषैः छित्त्वा तैः पृथ्वीम् आच्छादयामास । पाश्चात्या हि श्मश्रूणि रक्षित्वा केशान्वपन्तीति तद्देशाचारोक्तिः ॥ ६३ ॥

क्षौद्राणाम्

( सरलार्थ हिन्दी ) रघु ने मक्खियों से भरे हुए मधु के छत्तों के समान, भालों से काटे हुए शत्रुओं के दाढ़ीवाले सिरों से पृथ्वी ढांक दी ॥ ६३ ॥

अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः ।
प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् ॥ ६४ ॥

( अन्वयः ) शेषाः, ( यवनाः ) अपनीतशिरस्त्राणाः, ( सन्तः ) तं, ( रघुं ) शरणं, ययुः, हि, ( यतः ) महात्मनां, संरम्भः, प्रणिपातप्रतीकारः, ( भवति ) ॥ ६४ ॥

( टीका ) शेषाः ( हतावशेषाः ) "पाश्चात्त्या यवनाः" इत्यर्थः, अपनीतशिरस्त्राणाः ( अपसारितशीर्षण्याः ) "सन्तः" तं ( रघुं ) शरणं ( रक्षकं ) ययुः ( प्रापुः ) "रघुम् आत्मनः रक्षकं मत्वा तन्निकटं समागताः" हि ( यतः ) महात्मनां ( महानुभावानां ) संरम्भः ( कोपः, प्रणिपातप्रतीकारः ( प्रणत्यपनेयः ) भवति ॥ ६४ ॥

( समासः ) शिरः त्रायतेऽनेनेति शिरस्त्राणं, अपनीतं शिरस्त्राणं यैस्ते । महान् आत्मा येषां ते महात्मानस्तेषाम् । प्रणिपात एव प्रतीकारो यस्य सः ॥ ६४ ॥

( वाच्यपरिवर्तनम् ) शेषैः अपनीतशिरस्त्राणैः ( सद्भिः ) सः शरणं यये । हि······संरम्भेण प्रणिपातप्रतीकारेण भूयते ॥ ६४ ॥

( सरलार्थः ) महानुभावानां क्रोधः प्रणत्या एव दूरीभवतीति सम्यग्विचार्य हतावशिष्टा यवनाः उष्णीषरहितमस्तकाः सन्तः प्राणसंरक्षणार्थं रघुं शरणमागताः ॥ ६४ ॥

( सरलार्थ हिन्दी ) युद्ध से बाकी बचे यवन, पगड़ी उतारकर रघु के शरण गये । क्योंकि महात्माओं का क्रोध शरण जाने से ही दूर होता है ॥ ६४ ॥

विनयन्ते स्म तद्योधा मधुभिर्विजयश्रमम् ।
आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु ॥ ६५ ॥

( अन्वयः ) तद्योधाः, आस्तीर्णाजिनरत्नासु, द्राक्षावलयभूमिषु मधुभिः विजयश्रमं, विनयन्ते स्म ॥ ६५ ॥

( टीका ) तद्योधाः ( रघुभटाः ) आस्तीर्णाजिनरत्नासु ( प्रसारितचर्मश्रेष्ठासु ) द्राक्षावलयभूमिषु ( द्राक्षावेष्टितमण्डपेषु ) मधुभिः ) ( द्राक्षाफलप्रकृतिकैः, ) "मद्यैः" इत्यर्थः, विजयश्रमं ( विजयखेदं ) "संग्रामखेदं" इत्यर्थः, विनयन्ते स्म ( दूरीकुर्वन्ति स्म ) ॥ ६५ ॥

( समासः ) तस्य योधाः तद्योधाः । अजिनेषु रत्नानि अजिनरत्नानि आस्तीर्णानि अजिनरत्नानि यासु ताः तासु । द्राक्षाणां वलयानि द्राक्षावलयानि, द्राक्षावलयानां भूमयो द्राक्षावलयभूमयस्तासु । विजयस्य श्रमो विजयश्रमस्तम् ॥ ६५ ॥

( वाच्यपरिवर्तनम् ) तद्योधैः·······विजयश्रमः विनीयतेस्म ॥६५॥

( सरलार्थः ) युद्धश्रान्ताः रघोः सैनिकाः अजिनासनानि आस्तीर्य तत्र सुखोपविष्टाः सन्तः सरसाऽऽसवपानेन श्रममपनीतवन्तः ॥ ६५ ॥

( सरलार्थ हिन्दी ) उसके सैनिकोंने विजयश्रमकी थकावट अच्छे चमड़े बिछी हुई भूमि में, मदिरा के पान से मिटाई ॥ ६५ ॥

ततः प्रतस्थे कौबेरीं भास्वानिव रघुर्दिशम् ।
शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव ॥ ६६ ॥

( अन्वयः ) ततः, भास्वान्, इव, रघुः, उस्रैः, इव, शरैः रसान्, इव, उदीच्यान्, उद्धरिष्यन् कौबेरीं, दिशं, प्रतस्थे ॥ ६६ ॥

( टीका ) ततः = पाश्चात्यविजयानन्तरं, भास्वान् = सूर्यः, इव, रघुः, उस्रैः( किरणैः) इव, शरैः (बाणैः) रसान् (उदकान्) इव, उदीच्यान् ( उदग्दिग्भवान् ) " नृपान् " उद्धरिष्यन् ( उन्मूलयिष्यन् ) सूर्यपक्षे-(|संशोषयिष्यन्) कौबेरीं ( कुबेरसम्बन्धिनीं ) दिशं ( काष्ठां ) " दिशस्तु ककुभः काष्ठाः " इत्यमरः, प्रतस्थे ( चलितः ) ॥ ६६ ॥

( समासः ) उदीच्यां भवास्तान् । कुबेरस्य इयं कौबेरी ताम् ॥६६॥

( वाच्यपरिवर्तनम् ) भास्वता इव रघुणा······उद्धरिष्यता कौबेरी दिक् प्रस्तथे ॥ ६६ ॥

( सरलार्थः ) यथा सूर्यः प्रखरकिरणैः जलानि शोषयति तथैव असावपि उत्तरदिग्भवानां भूपानां निजतेजोरश्मिभिः शोषणाय उदीचीं दिशं प्रस्थितः ॥ ६६ ॥

१- शतृ प्रत्ययः -

( सरलार्थ हिन्दी ) फिर जैसे सूर्य, जलको अपनी प्रखर किरणों से खींचता है उसी प्रकार रघु उत्तर देशवासियों को अपनी ओर खींचता हुआ उत्तर की ओर चला ॥ ६६ ॥

विनीताध्वश्रमास्तस्य सिन्धुतीरविचेष्टनैः ।
दुधुवुर्वाजिनः स्कन्धांल्लग्नकुङ्कुमकेसरान् ॥ ६७ ॥

( अन्वयः ) सिन्धुतीरविचेष्टनैः, विनीताध्वश्रमाः, तस्य, वाजिनः, लग्नकुङ्कुमकेसरान्, स्कन्धान्, दुधुवुः ॥ ६७ ॥

( टीका ) सिन्धुतीरविचेष्टनैः ( सिन्धुनदतटाङ्गपरिवर्तनैः ) विनीताध्वश्रमाः ( अपनीतमार्गखेदाः ) तस्य ( रघोः ) वाजिनः ( अश्वाः ) लग्नकुङ्कुमकेसरान् ( संलग्नकुङ्कुमकिञ्जल्कान्, ) स्कन्धान् ( कायान् ) "स्कन्धः प्रकाण्डे कायेऽसे विज्ञानादिषु पञ्चसु" इति हैमः, दुधुवुः ( कम्पयन्ति स्म ) ॥ ६७ ॥

( समासः ) सिन्धोस्तीरं सिन्धुतीरं तत्र विचेष्टनानि तैः । अध्वनः श्रमोऽध्वश्रमः, विनीतः अध्वश्रमो यैस्ते । कुङ्कुमानां केसराः कुङ्कुमकेसराः, लग्नाः कुङ्कुमकेसरा येषु तान् ॥ ६७ ॥

( वाच्यपरिवर्तनम् ) तस्य............लग्नकुङ्कुमकेसराः स्कन्धाः दुधुविरे ॥ ६७ ॥

( सरलार्थः ) सिन्धुनदस्य तीरे अङ्गपरिवर्तनैः अपनीतश्रमाः सन्तः रघोरश्वाः कुङ्कमकेसरसंलग्नान् स्कन्धान् पुनः पुनः अधुन्वन् ॥ ६७ ॥

( सरलार्थ हिन्दी ) सिन्धुनद के तट पर लोटने से रघु के घोड़ों ने मार्ग की थकावट मिटाकर केसर लगे हुए कन्धे झाड़े ॥ ६७ ॥

तत्र हूणावरोधानां भर्तृषु व्यक्तविक्रमम् ।
कपोलपाटलादेशि बभूव रघुचेष्टितम् ॥ ६८ ॥

( अन्वयः ) तत्र, भर्तृषु, व्यक्तविक्रमं, रघुचेष्टितं, हूणावरोधानां, कपोलपाटलादेशि, बभूव ॥ ६८ ॥

( टीका ) तत्र ( उत्तरस्यान्दिशि ) भर्तृषु ( स्वामिषु ) व्यक्तविक्रमं ( प्रकटपराक्रमं ) रघुचेष्टितं ( रघुव्यापारः ) हूणावरोधानां

( हूणान्तःपुरस्त्रीणां ) "अवरोधस्तिरोधाने राजदारेषु तद्गृहे" इति मेदिनी, कपोलपाटलादेशि ( कपोलरक्तवर्णसूचकं ) बभूव ( आसीत् ) ॥ ६८ ॥

( समासः ) व्यक्तः विक्रमो यस्य तत् । रघोः चेष्टितमिति रघु-चेष्टितम् । हूणानां ( हूणाभिधेयदेशनिवासिक्षत्रियाणाम् ) अवरोधास्तासाम् । कपोलयोः पाटलः कपोलपाटलः, तम् आदिशतीति कपोलपाटलादेशि ॥ ६८ ॥

( वाच्यपरिवर्तनम् ) तत्र......व्यक्तविक्रमेण रघुचेष्टितेन........ कपोलपाटलादेशि बभूवे ॥ ६८ ॥

( सरलार्थः ) रघुः तस्यान्दिशि हूणदेशाधिपान्तःपुरस्त्रीणां स्वामिनो निर्जित्य निजप्रचण्डं पराक्रमं प्रकटयन् तासां कपोलान् रक्तद्युतीन् चकार अर्थात् हूणयोषितः कुचकपोलताड़नपूर्वकम् अरुदन् ॥ ६८ ॥

( सरलार्थ हिन्दी ) उस दिशा में राजाओं को मारकर रघुने जो भयङ्कर पौरुष दिखलाया इससे उस देश ( तुर्क इङ्गलैण्डादि म्लेच्छ देश ) की ललनाओं के पतिवियोग के कारण अधिक रोने से उनके कपोल लाल २ हो गये ॥ ६८ ॥

काम्बोजाः समरे सोढुं तस्य वीर्यमनीश्वराः ।
गजालानपरिक्लिष्टैरक्षोटैः सार्धमानताः ॥ ६९ ॥

( अन्वयः ) काम्बोजाः, समरे, तस्य, ( रघोः ) विक्रमं, सोढुम्, अनीश्वराः, ( सन्तः ) गजालानपरिक्लिष्टैः, अक्षोटैः, सार्धम्, आनताः ( बभूवुः ) ॥ ६९ ॥

( टीका ) काम्बोजाः ( कम्बोजदेशवासिनो राजानः ) समरे ( संग्रामे ) तस्य ( रघोः ) विक्रमं ( पराक्रमं ) सोढुम्, ( मर्षितुं ) अनीश्वराः ( असमर्थाः ) "सन्तः" गजालानपरिक्लिष्टैः ( करिबन्धनपरिक्षतैः ) अक्षोटैः ( अक्षोटवृक्षैः ) सार्धं ( साकम् ) आनताः बभूवुः ( नम्रा जाताः ) ॥ ६९ ॥

( समासः ) न ईश्वरा इति अनीश्वराः । आलीयतेऽत्रेति आलानं गजानाम् आलानं गजालानं तेन परिक्लिष्टास्तैः ॥ ६९ ॥

( वाच्यपरिवर्तनम् ) काम्बोजैः अनीश्वरैः..............आनतैः ( बभूवे ) ॥ ६९ ॥

( व्या० ) काम्बोजा इत्यत्र कम्बोजोऽभिजनो येषामिति वाक्यम् । कम्बोजानां राजान इति वाक्ये तु " कम्बोजाल्लुक् " इति लुकि प्राप्ते कम्बोजा इति पदं भवति ॥ ६९ ॥

( सरलार्थः ) कम्बोजाधिपाः समरे तस्य प्रतापम् असहमानाः सन्तो रघुगजश्रृङ्खलाकर्षणवेगेन नम्रैः अक्षोटवृक्षैः सहैव नम्रा जाताः ॥ ६९ ॥

( सरलार्थ हिन्दी ) काबुली राजे लड़ाई में उसका तेज न सह कर हाथी बंधे हुए अखरोट के वृक्षों के साथही झुक गये ॥ ६९ ॥

तेषां सदश्वभूयिष्ठास्तुङ्गा द्रविणराशयः ।
उपदा विविशुः शश्वन्नोत्सेकाः कोशलेश्वरम् ॥७०॥

( अन्वयः ) तेषां ( काम्बोजानाम् ) सदश्वभूयिष्ठाः, तुङ्गाः, द्रविणराशयः, उपदाः, शश्वत् ; कोशलेश्वरं, ( रघुं ) विविशुः; (तथापि) उत्सेकाः, न, "विविशुः" ॥ ७० ॥

( टीका ) तेषां (कम्बोजाधिपानां) सदश्वभूयिष्ठाः ( उत्तमतुरङ्ग-बहुलाः ) तुङ्गाः ( उच्चाः ) द्रविणराशयः ( हिरण्यराशयः ) " एव" " हिरण्यं द्रविणं द्युम्नम् " इत्यमरः, उपदाः ( उपहाराः ) "उपायन-मुपग्राह्यमुपहारस्तथोपदा" इत्यमरः, कोशलेश्वरं ( कोशलदेशाधिपं ) "रघुं" विविशुः ( प्राप्तवन्तः ) तथापि उत्सेकाः ( अहङ्काराः ) न विविशुः ॥ ७० ॥

( समासः ) सन्तश्च ते अश्वाश्चेति सदश्वाः तैर्भूयिष्ठा इति सदश्वभूयिष्ठाः । कोशलानामीश्वर इति कोशलेश्वरस्तम् ॥ ७० ॥

( वाच्यपरिवर्तनम् ) तेषां सदश्वभूयिष्ठैः तुङ्गैः द्रविणराशिभिः उपदाभिः शश्वत् कोशलेश्वरः, विविशे, उत्सेकैः न विविशे ॥ ७० ॥

( सरलार्थः ) विजितास्ते भूपतयः असङ्ख्यान् हस्त्यश्वादीन् सुवर्णसमूहांश्च रघवे उपहारीकृतवन्तः परन्तु रघुः अपरिमेयान् अपि तान् प्राप्य निरहङ्कार एव आसीत् ॥ ७० ॥

( सरलार्थ हिन्दी ) काम्बोज देश के नरपतियों ने अच्छे २ घोड़े तथा सुवर्ण की राशियां रघुको नजर कीं परन्तु इतना प्राप्त करने पर भी उसको गर्व नहीं हुआ ॥ ७० ॥

ततो गौरीगुरुं शैलमारुरोहाश्वसाधनः ।
वर्धयन्निव तत्कूटानुद्धूतैर्धातुरेणुभिः ॥ ७१ ॥

( अन्वयः ) ततः, अश्वसाधनः, ( सः, रघुः ) गौरीगुरुं, शैलम्, उद्धूतैः, धातुरेणुभिः, तत्कूटान्, वर्धयन्, इव, आरुरोह ॥ ७१ ॥

( टीकाः ) ततः ( तदनन्तरम् ) अश्वसाधनः (तुरङ्गमात्रसहायः) "सन्" "सः रघुः" गौरीगुरुम् ( उमापितरं ) शैलं ( हिमाचलं ) उद्धूतैः ( अश्वखुरोत्थापितैः ) धातुरेणुभिः (गैरिकादिधातुधूलिभिः) तत्कूटान् ( हिमाद्रिश्रृङ्गाणि ) "कूटोऽस्त्री शिखरं श्रृङ्गम्" इत्यमरः, वर्धयन् ( संवर्धयन् ) इव, आरुरोह ( अध्यारूढवान् ) ॥ ७१ ॥

(समासः) अश्वः साधनं सेनाङ्गम् यस्याऽसौ अश्वसाधनः। गौर्याः गुरुः गौरीगुरुः तं। धातूनां रेणवो धातुरेणवस्तैः धातुरेणुभिः। तस्य कूटास्तत्कूटास्तान्। वर्धयतीति वर्धयन् ॥ ७१॥

( सरलार्थः ) ततोऽश्वसहायो रघुः पर्वतीयान् कोलभिल्लाञ्जेतुं यदा हिमाचलमारुरोह तदा अश्वखुरन्यासोत्थापितप्रभूतगैरिकादि-धातुधूलिदर्शनात् हिमाचलशिखरस्य वृद्धिभ्रमो जातः ॥ ७१ ॥

( सरलार्थ हिन्दी ) उसके उपरान्त घुड़सवारों के साथ यह रघु हिमालयपर चढ़ा । उस समय इतनी धूल उड़ी कि जिससे पर्वत का शिखर ऊँचा होता सा मालूम होने लगा ॥ ७१ ॥

शशंस तुल्यसत्वानां सैन्यघोषेऽप्यसम्भ्रमम् ।
गुहाशयानां सिंहानां परिवृत्यावलोकितम् ॥ ७२ ॥

( अन्वयः) तुल्यसत्वानां, गुहाशयानां, सिंहानां, परिवृत्य, अवलोकितम्, सैन्यघोषे, अपि, असम्भ्रमम्, शशंस ॥ ७२ ॥

( टीका ) तुल्यसत्वानां ( सैन्यसमानबलानां) गुहाशयानां (कन्दरानिद्रितानां) सिंहानां (मृगेन्द्राणां) "सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः" इत्यमरः, परिवृत्य ( ग्रीवां वक्रीकृत्य ) अवलोकितं

(अवलोकनं) " शयितैवावलोकनं " सैन्यघोषे ( सैन्यगर्जने ) अपि, " सम्भ्रमकारणे सत्यपि " असम्भ्रमं ( अन्तःक्षोभशून्यत्वं ) शशंस ( कथयामास ) ॥ ७२ ॥

( समासः ) तुल्यं सत्वं येषान्ते तुल्यसत्वास्तेषां । गुहासु शेरत इति गुहाशयास्तेषाम् । सेनायां समवेताः सैन्यास्तेषां घोषः तस्मिन् । न सम्भ्रमोऽसम्भ्रमस्तम् ॥ ७२ ॥

( वाच्यपरिवर्तनम् )...अवलोकितेन...असम्भ्रमः शशंसे ।

( सरलार्थः ) महाबला गुहाशयाः सिंहाः भयोत्पादकं रघुसेना-कलकलं श्रुत्वाऽपि निर्भयाः सन्तः स्वस्थानादेव ग्रीवां वक्रीकृत्य निजान्तःक्षोभशून्यत्वं प्रकटयामासुः ॥ ७२ ॥

( सरलार्थ हिन्दी ) गुफाओं में सोनेवाले समान बलवाले सिंहों का सेना के कलकल में भी लापरवाही के साथ गरदन टेढ़ीकर देखना उनके निर्भयपना को जनाता हुआ ॥ ७२ ॥

भूर्जेषु मर्मरीभूताः कीचकध्वनिहेतवः ।
गङ्गाशीकरिणो मार्गे मरुतस्तं सिषेविरे ॥ ७३ ॥

( अन्वयः ) भूर्जेषु, मर्मरीभूताः, कीचकध्वनिहेतवः, गङ्गाशी-करिणः, मरुतः, मार्गे, तं ( रघुं ) सिषेविरे ॥ ७३ ॥

( टीका ) भूर्जेषु (भूर्जपत्रेषु), मर्मरीभूताः (मर्मरशब्दकारिणः) कीचकध्वनिहेतवः ( वेणुविशेषशब्दकारणीभूताः ) गङ्गाशीकरिणः ( गङ्गाम्बुकणवाहिनः ) मरुतः ( वायवः ) मार्गे ( पथि ) तं ( रघुं ) सिषेविरे ( सेवितवन्तः ) ॥ ७३ ॥

( समासः ) ध्वनेर्हेतव इति ध्वनिहेतवः, कीचकानां ध्वनिहेतव इति कीचकध्वनिहेतवः । शीकराः सन्त्येषान्ते शीकरिणः, गङ्गायाः शीकरिण इति गङ्गाशीकरिणः । न मर्मरा अमर्मराः, अमर्मराः मर्मराः सम्पद्यमाना इति मर्मरीभूताः ॥ ७३ ॥

( वाच्यपरिवर्तनम् ) मर्मरीभूतैः कीचकध्वनिहेतुभिः गङ्गाशीक-रिभिः मरुद्भिः सः सिषेवे ॥ ७३ ॥

( सरलार्थः ) पथि शुष्कभूर्जपत्रेषु मर्मरशब्दं कुर्वन्तः, वंशविवरेषु मधुरध्वनिम् उत्पादयन्तः, जान्हवीजलकणांश्च सञ्चारयन्तो मान्द्यशैत्यसौगन्ध्यविशिष्टा वायवः रघोः मार्गखेदम् अपानयन् ॥७३॥

( सरलार्थ हिन्दी ) मन्द २ और शीतल तथा सुगन्धित वायु रघु की सेवा करती हुई ॥ ७३ ॥

विशश्रमुर्नमेरूणां छायास्वध्यास्य सैनिकाः ।
दृषदो वासितोत्सङ्गा निषरणमृगनाभिभिः ॥ ७४ ॥

( अन्वयः ) सैनिकाः, नमेरूणां, छायासु, निषरणमृगनाभिभिः, वासितोत्सङ्गाः, दृषदः, अध्यास्य, विशश्रमुः ॥ ७४ ॥

( टीका ) सैनिकाः ( सैन्याः ) नमेरूणां (देवनागकेसरवृक्षाणां) छायासु (अनातपेषु) "वृक्षपत्रावृतप्रदेशेषु" इति वा, निषरणमृगनाभिभिः (पाषाणोपविष्टकस्तूरीमृगनाभिभिः) "उपविष्टकस्तूरीमृगमदैः" इति वा, वासितोत्सङ्गाः ( सुगन्धिततलाः ) दृषदः ( पाषाणान् ), अध्यास्य ( अधिष्ठाय ) विशश्रमुः ( श्रममपनीतवन्तः ) ॥ ७४ ॥

( समासः ) निषरणाश्च ते मृगाश्च इति निषरणमृगाः, तेषां नाभयस्तैः । सेनायां समवेताः सैनिकाः । वासिता उत्सङ्गा येषां ते ॥७४॥

( वाच्यपरिवर्तनम् ) सैनिकैः......विशश्रमे ॥ ७४ ॥

( सरलार्थः ) रघुसैनिकाः नागकेसरवृक्षाणां छायासु मृगनाभिसुवासितानि पाषाणतलानि ( चट्टान इतिभाषा ) मार्गश्रमापनयनार्थम् अधिष्ठितवन्तः ॥ ७४ ॥

( सरलार्थ हिन्दी ) योधाओं ने नागकेसरकी छायामें हरिणों की नाभि से सुगन्धित चट्टानों पर विश्राम किया ॥ ७४ ॥

सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषः ।
आसन्नोषधयो नेतुर्नक्तमस्नेहदीपिकाः ॥ ७५ ॥

( अन्वयः ) सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषः, ओषधयः, नेतुः, ( रघोः ) नक्तम्, अस्नेहदीपिकाः, आसन् ॥ ७५ ॥

( टीका ) सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषः ( देवदारुसंसक्तकरिकण्ठश्रृङ्खलास्फुरितभासः ) ओषधयः (ज्वलज्ज्योतिर्लताविशेषाः)

नेतुः ( रघोः ) नक्तं ( रात्रौ ) अस्नेहदीपिकाः ( तैलरहितप्रदीपाः ) आसन् ( अभूवन् ) ॥ ७५ ॥

( समासः ) ग्रीवासु भवानि ग्रैवेयाणि, मातङ्गानां ग्रैवेयाणि मातङ्गग्रैवेयाणि, सरलेषु आसक्तानि च तानि मातङ्गग्रैवेयाणि इति सरलासक्तमातङ्गग्रैवेयाणि तेषु स्फुरिताः त्विषो यासान्ताः । ओषाः ( दीप्तयः ) धीयन्तेऽत्रेत्योषधयः । दीपा एव दीपिकाः, न स्नेहा इत्यस्नेहा अस्नेहाश्च ता दीपिकाश्चेत्यस्नेहदीपिकाः ॥ ७५ ॥

( वाच्यपरिवर्तनम् ) सरलासक्तमातङ्गग्रैवेयस्फुरितत्विड्भिः ओषधिभिः......अस्नेहदीपिकाभिः अभूयत ॥ ७५ ॥

( सरलार्थः ) तत्र निशायां देदीप्यमाना वनौषधयः देवदारुतरुसम्बद्धगजानां कण्ठबन्धनेषु श्रृङ्खलादिषु प्रतिस्फुरितकान्तयः सत्यः रघोर्दीपावलीकार्यमकुर्वन् ॥ ७५ ॥

( सरलार्थ हिन्दी ) देवदारु के वृक्षों से बंधे हुए हाथियों के गले की सिकड़ों में चमकती हुई जङ्गल की बूटियां रात में उस रघुकी बिना तेल की दीपिका ( दीयों की कतार ) बनी ॥ ७५ ॥

तस्योत्सृष्टनिवासेषु कण्ठरज्जुक्षतत्वचः ।
गजवर्ष्म किरातेभ्यः शशंसुर्देवदारवः ॥ ७६ ॥

( अन्वयः ) तस्य ( रघोः ) उत्सृष्टनिवासेषु, कण्ठरज्जुक्षतत्वचः, देवदारवः, किरातेभ्यः, गजवर्ष्म, शशंसुः, ॥ ७६ ॥

( टीका ) तस्य (रघोः) उत्सृष्टनिवासेषु ( त्यक्तसेनानिवेशेषु ) कण्ठरज्जुक्षतत्वचः (श्रृङ्खलाक्षतोपरिभागाः) देवदारवः (सरलवृक्षाः) किरातेभ्यः ( पुलिन्देभ्यः ) " भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः" इत्यमरः, गजवर्ष्म ( गजदेहप्रमाणं ) " वर्ष्म देहप्रमाणयोः " इत्यमरः, शशंसुः ( कथयामासुः ) ॥ ७६ ॥

( समासः ) उत्सृष्टाश्च निवासाश्च उत्सृष्टनिवासास्तेषु । कण्ठानां रज्जवः कण्ठरज्जवस्तैः क्षताः त्वचो येषां ते । गजस्य वर्ष्म गजवर्ष्म ॥ ७६ ॥

( वाच्यपरिवर्तनम् )........कण्ठरज्जुक्षतत्वग्भिः देवदारुभिः ........शशंसे ॥ ७६ ॥

( सरलार्थः ) रघुणा परित्यक्तेषु सेनानिवेशप्रदेशेषु तस्य देवदारुवृक्षस्कन्धेषु गजश्रृङ्खलाघर्षचिह्नानि मतङ्गजानां देहौन्नत्यम् अप्रकाशयन् ॥ ७६ ॥

( सरलार्थ हिन्दी ) पड़ाओं के छोड़ने पर रघु के हाथियों की ऊंचाई गले के सिकड़ों से छिली हुई छाल वाले देवदारु वृक्षों ने ही किरातों को बताई ॥ ७६ ॥

तत्र जन्यं रघोर्घोरं पर्वतीयैर्गणैरभूत् ।
नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम् ॥ ७७ ॥

( अन्वयः ) तत्र, रघोः, पर्वतीयैः, गणैः, ( सह ) नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम्, घोरं, जन्यम्, अभूत् ॥ ७७ ॥

( टीका ) तत्र (हिमाचले) रघोः, पर्वतीयैः (पर्वतनिवासिभिः) [1]गणैः (उत्सवसङ्केताख्यैः सप्तभिः) "सह" नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम् ( लोहबाणपाषाणशकलसङ्घर्षोत्थितवह्निं ) "पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्" इत्यमरः, घोरं ( भयङ्करं ) जन्यं ( युद्धं ) "युद्धमायोधनं जन्यम्" इत्यमरः, अभूत् ( बभूव ) ॥ ७७ ॥

( समासः ) पर्वते भवाः पर्वतीयास्तैः । नाराचाश्च क्षेपणीया अश्मानश्च नाराचक्षेपणीयाश्मानः तेषां निष्पेषेण उत्पतिता अनला यस्मिंस्तत् ॥ ७७ ॥

( वाच्यपरिवर्तनम् )······नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलेन घोरेण जन्येन अभावि ॥ ७७ ॥

( सरलार्थः ) तत्र पर्वतीयैः भिल्लादिभिः सह रघोर्घोरं युद्धं बभूव रघुक्षिप्तानां बाणानां भिल्लादिनिक्षिप्तानां पाषाणानां च अन्योन्यसंघर्षणात् वह्नयः प्रादुरासन् ॥ ७७ ॥

( सरलार्थ हिन्दी ) रघुका पहाड़ी लोगों से बाण और गोफनों के पत्थरों की रगड़ से उठी हुई अग्निवाला भयङ्कर युद्ध हुआ ॥ ७७ ॥

[1] गणानुत्सवसङ्केतानजयत्सप्त पाण्डवः । महाभारतम् ।

शरैरुत्सवसङ्केतान् स कृत्वा विरतोत्सवान्
जयोदाहरणं बाह्वोर्गापयामास किन्नरान् ॥ ७८ ॥

( अन्वयः ) सः ( रघुः ) शरैः, उत्सवसङ्केतान्, विरतोत्सवान् कृत्वा, किन्नरान्, बाह्वोः, जयोदाहरणं, गापयामास ॥ ७८ ॥

( टीका ) सः (रघुः) शरैः (बाणैः) उत्सवसङ्केतान् ( उत्सवसङ्केताभिधसप्तगणान् ) विरतोत्सवान् ( नष्टयुद्धोत्साहान् ) कृत्वा ( विधाय ) " विजित्येत्यर्थः " किन्नरान् ( तदाख्यदेवयोनिविशेषान् ) बाह्वोः ( निजभुजयोः ) जयोदाहरणं ( जयख्यापकं यशः ) "यशोजयोदाहरणम् " इति हैमः, गापयामास ॥ ७८ ॥

( समासः ) विरत उत्सवो येषां ते तान् । उद् आह्वयत इत्युदाहरणम् जयस्योदाहरणमिति जयोदाहरणम् ॥ ७८ ॥

( वाच्यपरिवर्तनम् ) तेन······किन्नरा······गापयाञ्चक्रिरे॥७८॥

( सरलार्थः ) तत्र उत्सवसङ्केतनाम्नां पर्वतवासिनां, शरधारासम्पातेन चिरमहोत्सवान् निरुत्सवान् कृतवतो रघोर्यशः किन्नराः सर्वतो जगुः ॥ ७८ ॥

( सरलार्थ हिन्दी ) उसने उत्सव संकेतों को ( उत्सवसंकेत एक जात के पहाड़ी मनुष्य थे ) बाणों से निरुत्साह कर किन्नरों से अपनी भुजा की जयकथा गवाई ॥ ७८ ॥

परस्परेण विज्ञातस्तेषूपायनपाणिषु ।
राज्ञा हिमवतः सारो राज्ञः सारो हिमाद्रिणा ॥ ७९ ॥

( अन्वयः ) तेषु, उपायनपाणिषु, ( सत्सु ) परस्परेण, राज्ञा ( रघुणा ) हिमवतः, सारः, हिमाद्रिणा, ( च ) राज्ञः, सारः, विज्ञातः ॥ ७९ ॥

† तथा च :—

" येन केनापि तालेन गद्य-पद्य समन्वितम् ।
जयेत्युपक्रमं मालिन्यादिप्रास विचित्रितम् ॥
तदुदाहरणं नाम विभक्त्यष्टाङ्गसंयुतम् ।

( टीका ) तेषु, गणेषु ( उत्सवसङ्केताभिधेषु ) उपायनपाणिषु ( गृहीतोपहारहस्तेषु ) " सत्सु " परस्परेण ( अन्योन्येन ) राज्ञा ( रघुणा ) हिमवतः ( हिमाद्रेः ) सारः ( बलं ) " धनरूपं " हिमाद्रिणा च, राज्ञः ( रघोः ) सारः ( बलरूपं ) " सारो बले, स्थिरांशे च " इत्यमरः, विज्ञातः ( अवगतः ) ॥ ७९ ॥

( समासः ) उपायनानि पाणिषु येषान्ते उपायनपाणयः तेषु।७९।

( वाच्यपरिवर्तनम् ) राजा हिमाद्रिः च···सारं विज्ञातवान्।७९।

( सरलार्थः ) रघोः, पर्वतीयानाञ्च परस्परसम्मेलनात् हिमालयवासिनः असंख्यमणिगणादिवस्तुजातानि रघवे उपहारीकृतवन्तः सच तानि अमूल्यानि रत्नानि समवलोक्य हिमाचलस्य कियद् धनबलमिति ज्ञातवान् हिमाचलोऽपि तस्य प्रचण्डं भुजदण्डपराक्रमं ज्ञातवान् ॥ ७९ ॥

( सरलार्थ हिन्दी ) पर्वतीयों के नजर देने पर रघु ने हिमालय का सार ( धन ) जाना और हिमालय ने राजा रघु का सार (बल) जाना ॥ ७९ ॥

तत्राक्षोभ्यं यशोराशिं निवेश्यावरुरोह सः।
पौलस्त्यतुलितस्याद्रेरादधान इव ह्रियम् ॥ ८० ॥

( अन्वयः ) सः, तत्र, अक्षोभ्यं, यशोराशिं, निवेश्य, पौलस्त्यतुलितस्य, अद्रेः, ह्रियम्, आदधानः, इव, अवरुरोह ॥ ८० ॥

( टीका ) सः (रघुः) तत्र (हिमाद्रौ) अक्षोभ्यं ( अधृष्यं ) यशोराशिं ( कीर्तिसमूहं ) निवेश्य ( स्थापयित्वा ) पौलस्त्यतुलितस्य (रावणचालितस्य ) अद्रेः (कैलासस्य) ह्रियं ( लज्जाम् ) आदधानः ( उत्पादयन् ) इव, अवरुरोह ( अवततार ) ॥ ८० ॥

( समासः ) यशसां राशिः यशोराशिः तम्। पुलस्तेः गोत्रापत्यं पुमान् पौलस्त्यः, पौलस्त्येन तुलितः पौलस्त्यतुलितस्तस्य। न क्षोभ्यमित्यक्षोभ्यम् ॥ ८० ॥

( वाच्यपरिवर्तनम् ) तेन तत्र·····················आदधानेन इव अवरुरुहे ॥ ८० ॥

( सरलार्थः ) सः अनेन प्रकारेण हिमाद्रौ अचलं यशोराशिं संस्थाप्य, कैलासमगत्वा तस्य लज्जां समुत्पादयन्निव अवततार ॥ ८० ॥

( सरलार्थ हिन्दी ) वहां अपने यश की राशिस्थापन कर वह रावण के उठाये हुए कैलाश की ओर न जाकर उसे लज्जित सा करता हुआ उतरा ॥ ८० ॥

चकम्पे तीर्णलौहित्ये तस्मिन्प्राग्ज्यौतिषेश्वरः ।
तद्गजालानतां प्राप्तैः सह कालागुरुद्रुमैः ॥ ८१ ॥

( अन्वयः ) तस्मिन्, तीर्णलौहित्ये, "सति" प्राग्ज्यौतिषेश्वरः, तद्गजालानतां, प्राप्तैः, कालागुरुद्रुमैः, सह, चकम्पे ॥ ८१ ॥

( टीका ) तस्मिन् ( रघौ ) [1]तीर्णलौहित्ये ( अतिक्रान्तब्रह्मपुत्रे ) "सति" "लौहित्यं लोहितत्वे च क्लीबं पुंसि नदान्तरे" इति मेदिनी, प्राग्ज्यौतिषेश्वरः ( कामरूपजनपदेश्वरः ) तद्गजालानतां (रघुकरिबन्धनस्तम्भतां) प्राप्तैः (सम्प्राप्तैः) कालागुरुद्रुमैः ( कृष्णागुरुपादपैः ) सह ( साकं ) चकम्पे ( कम्पितवान् ) ॥ ८१ ॥

( समासः ) तीर्णो लौहित्यः ( ब्रह्मपुत्रो नाम नदः ) येन असौ तीर्णलौहित्यस्तस्मिन् । ईशितुं शीलम् अस्य असावीश्वरः, प्राग्ज्यौतिषाणामीश्वर इति प्राग्ज्यौतिषेश्वरः । आलानस्य भावः आलानता, तस्य गजा इति तद्गजाः, तेषाम् आलानता ताम् । कालागुरूणां द्रुमा इति कालागुरुद्रुमास्तैः ॥ ८१ ॥

( सरलार्थः ) यदा रघुः ब्रह्मपुत्रनदमुत्तीर्य प्राग्ज्यौतिषं देशं ( कामरूपं ) सम्प्राप्तः तदा कालागुरुतरुबद्धानां रघुगजानां शृङ्खलाकर्षणघर्षणादिभिः यथा वृक्षाः कम्पितवन्तः तथैव तद्देशाधिपोऽपि चकम्पे ॥ ८१ ॥

( सरलार्थ हिन्दी ) उसके लोहित्या नदी के पार उतरने पर प्राग्ज्यौतिष देश ( कामरूप ) का राजा, रघु के हाथी बांधने के स्तम्भरूप हुए कालागुरुवृक्षों के साथही थरथराया ॥ ८१ ॥

(१) ब्रह्मपुत्र महाभाग शान्तनोः कुलनन्दन ! ।
अमोघागर्भसम्भूत पापं लौहित्य मे हर ॥ इति पुराणम् ।

न प्रसेहे स रुद्धार्कमधारावर्षदुर्दिनम् ।
रथवर्त्मरजोऽप्यस्य कुत एव पताकिनीम् ॥ ८२ ॥

( अन्वयः ) सः, रुद्धार्कम्, अधारावर्षदुर्दिनम्, अस्य, रथवर्त्म-रजः, अपि, न, प्रसेहे, पताकिनीं, "तु" कुतः, एव प्रसेहे ॥ ८२ ॥

( टीका ) सः ( प्राग्ज्यौतिषेश्वरः ) रुद्धार्कम् ( आच्छन्नसूर्यम् ) अधारावर्षदुर्दिनं ( धारावृष्टिं विनैव दुर्दिनीभूतं ) "मेघच्छन्नेऽह्नि दुर्दिनम्" इत्यमरः, अस्य ( रघोः ) रथवर्त्मरजः ( रथमार्गधूलिः ) "अयनं वर्त्म मार्गाध्व" तथा "रेणुर्द्वयोः स्त्रियां धूलिः" इति चामरः, अपि न प्रसेहे ( न शेके ) पताकिनीं ( सेनां ) "तु" कुतः, एव प्रसेहे ( कथमसहिष्ट ) ॥ ८२ ॥

( समासः ) रुद्धः अर्कः येन तत् । धाराणां वर्षः धारावर्षः, अविद्यमानः धारावर्षः यस्मिंस्तद् अधारावर्षम् अधारावर्षश्च तद्दुर्दिनमिति अधारावर्षदुर्दिनम् । रथस्य वर्त्म रथवर्त्म तस्य रजः । पताका विद्यन्ते अस्यां सा पताकिनी ताम् ॥ ८२ ॥

( वाच्यपरिवर्तनम् ) .......ईशेन यैः अन्ये उपरुरुधिरे ॥ ८२ ॥

( सरलार्थः ) सः कामरूपाधिपः वृष्ट्या विनैव दुर्दिनं कुर्वतीं, सूर्यमण्डलमाच्छादयन्तीं रथोत्थापितां धूलिमपि यदा विलोकयितुं समर्थो नाभूत् तदा पुनः सेनां सोढुं कथं शक्तो भविता ॥ ८२ ॥

( सरलार्थ हिन्दी ) वह कामरूप का राजा बरसात के बिना ही दुर्दिन करने वाली, सूर्य को रोकने वाली उसके रथ की धूलि को भी नहीं सह सका फिर सेना को कैसे सहता ॥ ८२ ॥

तमीशः कामरूपाणामत्याखण्डलविक्रमम् ।
भेजे भिन्नकटैर्नागैरन्यानुपरुरोध यैः ॥ ८३ ॥

( अन्वयः ) कामरूपाणां, ईशः, यैः, "नागैः," अन्यान्, उपरु-रोध, भिन्नकटैः, तैः, नागैः, अत्याखण्डलविक्रमं, तं, भेजे ॥ ८२ ॥

( टीका ) कामरूपाणां ( कामरूपजनपदानाम् ) ईशः (अधिपः) यैः ( नागैः ) अन्यान् ( रघुव्यतिरिक्तान् वैरिभूतान् नृपान् ) उपरु-रोध ( निराचकार ) भिन्नकटैः (प्रस्रवन्मदगण्डैः) तैः, नागैः (गजैः)

अत्याखण्डलविक्रमं ( अतिक्रान्तेन्द्रपराक्रमं ) तं ( रघुं ) भेजे ( सिषेवे ) ॥ ८३ ॥

( समासः ) भिन्नाः कटा येषान्ते तैः । आखण्डलस्य विक्रमः आखण्डलविक्रमः, अतिक्रान्तः आखण्डलविक्रमो येन सः तम् ॥८२॥

( वाच्यपरिवर्तनम् ) अत्याखण्डलविक्रमः सः भेजे ॥ ८३ ॥

( सरलार्थः ) कामरूपाधिपः यैः मदस्राविभिः गजैः अन्यान् शत्रुभूतान् नृपान् निराचकार एवम्भूतान् तानेव गजान् उपहारीकृत्य सः रघुं शरणमागतः ॥ ८३ ॥

( सरलार्थ हिन्दी ) उस अत्यन्त पराक्रमी रघु को कामरूप देश का राजा जिनसे कि और और शत्रुओं को जीतता था उन्हीं मदस्रावी हाथियों को नजर करता हुआ ॥ ८३ ॥

कामरूपेश्वरस्तस्य हेमपीठाधिदेवताम् ।
रत्नपुष्पोपहारेण छायामानर्च पादयोः ॥ ८४ ॥

( अन्वयः ) कामरूपेश्वरः, हेमपीठाधिदेवतां, तस्य पादयोः छायां, रत्नपुष्पोपहारेण, आनर्च ॥ ८४ ॥

( टीका ) कामरूपेश्वरः कामरूपदेशाधिपः, हेमपीठाधिदेवतां (सुवर्णपीठाधिष्ठातृदेवतां) तस्य (रघोः) पादयोः (चरणयोः) छायां ( सुवर्णमयपादपीठप्रतिबिम्बितां कान्तिं ) "छाया सूर्यप्रिया कान्तिः" इत्यमरः, रत्नपुष्पोपहारेण ( रत्नकुसुमोपायनेन ) आनर्च ( पूजयामास ) ॥ ८४ ॥

( समासः ) कामरूपाणामीश्वर इति कामरूपेश्वरः । अधिष्ठिता चासौ देवता अधिदेवता, हेम्नः पीठं हेमपीठं तस्य अधिदेवता ताम् । रत्नान्येव पुष्पाणि रत्नपुष्पाणि तेषामुपहारस्तेन ॥ ८४ ॥

( वाच्यपरिवर्तनम् ) कामरूपेश्वरेण हेमपीठाधिदेवता.........
रत्नपुष्पोपहारेण आनर्चे ॥ ८४ ॥

( सरलार्थः ) यथा कश्चन भक्तः पुरुषः परमाराध्यं देवं प्रसादयितुं पुष्पोपहारादिना तं पूजयति तथैव कामरूपभूपोऽपि रत्नमणिखचितहिरण्मये पादपीठे पतितां परमाराध्यां देवतामिव रघुचरणकमलच्छायां रत्नकुसुमोपहारेण पूजयामास ॥ ८४ ॥

( सरलार्थ हिन्दी ) कामरूपेश्वरने सोनेके सिंहासन की अधिदेवतास्वरूप उसके पैरोंकी छायाकी रत्नरूपी फूलों से पूजाकी ॥ ८४ ॥

इति जित्वा दिशो जिष्णुर्न्यवर्तत रथोद्धतम् ।
रजो विश्रामयन्राज्ञां छत्रशून्येषु मौलिषु ॥ ८५ ॥

( अन्वयः ) जिष्णुः, सः, इति, दिशः, जित्वा, रथोद्धतं, रजः, छत्रशून्येषु, राज्ञां, मौलिषु, विश्रामयन्, न्यवर्तत ॥ ८५ ॥

( टीका ) जिष्णुः (विजयशीलः) सः ( रघुः ) इति ( अनेन प्रकारेण) दिशः ( ककुभः ) "दिशस्तु ककुभः काष्ठाः" इत्यमरः, जित्वा ( स्वायत्तीकृत्य ) रथोद्धतं ( रथोत्थापितं ) रजः ( धूलिं) "रेणुर्द्वयोः स्त्रियां धूलिः" इत्यमरः, छत्रशून्येषु ( छत्त्ररहितेषु ) 'रघोरेकच्छत्रकत्वादन्येषां तद्रहितत्वमिति भावः, राज्ञां ( नृपाणां ) मौलिषु ( किरीटेषु ) विश्रामयन् ( सङ्क्रामयन् ) न्यवर्तत ( परावृत्तः ) ॥ ८५ ॥

( समासः ) रथैः उद्धतमिति रथोद्धतम् । छत्रैः शून्याः छत्रशून्यास्तेषु ॥ ८५ ॥

( वाच्यपरिवर्तनम् ) जिष्णुना तेन..................विश्रामयता सता ॥ ८५ ॥

( सरलार्थः ) इत्थं सर्वां दिशं निर्जित्य रघुः जगतः एकच्छत्रमधिपतित्वं लब्ध्वा राजच्छत्ररहितानां तत्तद्देशनृपाणां किरीटेषु निजरथोत्थापितां धूलिं सङ्क्रामयन् निजराजधानीमाजगाम ॥ ८५ ॥

( सरलार्थ हिन्दी ) इस प्रकार दिशाओं को जीतकर विना छत्रवाले राजाओं के किरीटों में रथकी उठी हुई धूल जमाता हुआ जयशील रघु लौटा ॥ ८५ ॥

स विश्वजितमाजह्रे यज्ञं सर्वस्वदक्षिणम् ।
आदानं हि विसर्गाय सतां वारिमुचामिव ॥ ८६ ॥

( अन्वयः ) सः, सर्वस्वदक्षिणं, विश्वजितं, यज्ञम्, आजह्रे, हि, वारिमुचाम्, इव, सताम्, आदानं, विसर्गाय भवति ॥ ८६ ॥

( टीका ) सः ( रघुः ) सर्वस्वदक्षिणं ( समस्तवित्तदक्षिणं ) "विश्वजित्सर्वस्वदक्षिणः" इति श्रुतेः, विश्वजितं ( विश्वजिन्नामकं ) यज्ञं (यागं) "यज्ञः सवोऽध्वरो यागः" इत्यमरः, आजह्रे (चक्रे) हि ( यतः ) वारिमुचां ( मेघानाम् ) इव (यथा) सतां ( सज्जनानां ) आदानम् ( उपार्जनं ) विसर्गाय ( त्यागाय ) भवति ॥ ८६ ॥

( समासः ) विश्वं जयतीति विश्वजित् तम् । सर्वस्वं दक्षिणा यस्य स तम् । वारीणि मुञ्चन्तीति वारिमुचस्तेषाम् ॥ ८६ ॥

( वाच्यपरिवर्तनम् ) तेन सर्वस्वदक्षिणः विश्वजित् यज्ञः आजह्रे ॥

( सरलार्थः ) यथा मेघानां समुद्राज्जलग्रहणं परोपकारकभूतायै वृष्ट्यै एव भवति तथैव महात्मनामपि धनोपार्जनं परोपकारभूताय दानायैव भवतीति विचार्य रघुरपि विश्वजिन्नामकं महायज्ञं कृत्वा निजभुजार्जितं सकलं धनं विद्वद्भ्यो दक्षिणारूपेण दत्तवान् ८६

( सरलार्थ हिन्दी ) उसने सर्वस्व दक्षिणावाला विश्वजित यज्ञ किया । महात्माओंका धन सञ्चय दानहीके लिये है जैसे बादलोंका जलसञ्चय ॥ ८६ ॥

सत्रान्ते सचिवसखः पुरस्क्रियाभि-
र्गुर्वीभिः शमितपराजयव्यलीकान् ।
काकुत्स्थश्चिरविरहोत्सुकावरोधान-
राजन्यान्स्वपुरनिवृत्तयेऽनुमेने ॥ ८७ ॥

( अन्वयः ) काकुत्स्थः, सत्रान्ते, सचिवसखः, "सन्" गुर्वीभिः पुरस्क्रियाभिः, शमितपराजयव्यलीकान्, चिरविरहोत्सुकावरोधान् राजन्यान् स्वपुरनिवृत्तये, अनुमेने ॥ ८७ ॥

( टीका ) काकुत्स्थः ( रघुः ) सत्रान्ते (यज्ञावसाने) सचिवसखः[1] ( मन्त्रिसहायः ) "सन्" "सखा मित्रे सहाये ना" इति मेदिनी, गुर्वीभिः ( महतीभिः ) "गुरुर्महत्याङ्गिरसे" इति हैमः, पुरस्क्रियाभिः ( अर्चाभिः ) "पूजाभिः" इति वा, शमितपराजय-

(१) अत्यागसहनो बन्धुः सदैवानुमतः सुहृत् ।
एकक्रियं भवेन्मित्रं समप्राणः सखा स्मृतः ॥

व्यलीकान् ( दूरीकृतपराभवजनितदुःखान् ) चिरविरहोत्सुकावरोधान् ( चिरवियोगोत्कण्ठितान्तःपुरान् ) " स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् । शुद्धान्तश्चावरोधश्च " इत्यमरः, राजन्यान् ( क्षत्रियान्नृपान्, स्वपुरनिवृत्तये (निजनगरम्प्रति गमनाय) अनुमेने ( अनुज्ञातवान् ) ॥ ८७ ॥

( समासः ) सत्रस्य अन्त इति सत्रान्तस्तस्मिन् । सचिवानां सखेति सचिवसखः । पराजयस्य व्यलीकमिति पराजयव्यलीकं, शमितं पराजयव्यलीकं येषां ते तान् । चिरं विरह इति चिरविरहः, तेन उत्सुका अवरोधा एषां तान् । राज्ञोऽपत्यानि राजन्यास्तान् । स्वस्य पुरं स्वपुरं, तम्प्रति निवृत्तिस्तस्यै ॥ ८७ ॥

( वाच्यपरिवर्तनम् ) सचिवसखेन काकुत्स्थेन............शमित-पराजयव्यलीकाः चिरविरहोत्सुकावरोधाः राजन्याः.................अनुमेनिरे ॥ ८७ ॥

( सरलार्थः ) यज्ञान्ते मन्त्रिसहितो रघुः पराभवप्राप्तानां निमन्त्रितानां भूपतीनां पराभवजनितदुःखं सन्मानादिना निवारितवान् कामिनीचिरविरहितांश्च तान् भूपतीन् स्वदेशगमनाय अनुजज्ञे ॥ ८७ ॥

( सरलार्थ हिन्दी ) यज्ञ के अन्त में मन्त्रियों के मित्र रघु ने बहुत दिन से छोड़े रनवासों में अभिलाषा करने वाले राजाओं का पराजय जनित दुःख उनके सन्मान से दूर कर उन्हें अपने अपने नगर जाने की आज्ञा दी ॥ ८७ ॥

ते रेखाध्वजकुलिशातपत्रचिह्नं सम्राजश्चरणयुगं प्रसादलभ्यम् ।
प्रस्थानप्रणतिभिरङ्गुलीषु चक्रुर्मौलिस्रक्च्युतमकरन्दरेणुगौरम् ॥८८॥

( अन्वयः ) ते, रेखाध्वजकुलिशातपत्रचिह्नं, प्रसादलभ्यं, सम्राजः, चरणयुगं, प्रस्थानप्रणतिभिः, अङ्गुलीषु, मौलिस्रक्च्युतमकरन्दरेणुगौरं चक्रुः ॥ ८८ ॥

( टीका ) ते (राजानः) रेखाध्वजकुलिशातपत्रचिह्नं (ध्वजवज्रच्छत्राकाररेखाचिह्नितं, प्रसादलभ्यं ( प्रसन्नतया प्राप्यं ) सम्राजः (चक्रवर्तिनः रघोः) चरणयुगं ( पादयुग्मं ) प्रस्थानप्रणतिभिः (प्रयाणकालीननमस्कारैः ) अङ्गुलीषु ( करशाखासु ) " अङ्गुलयः करशाखाः स्युः " इत्यमरः, मौलिस्रक्च्युतमकरन्दरेणुगौरं ( मौलिमाल्यगलित-

पुष्परसपरागगौरवर्ण) " मकरन्दः पुष्परसः " इत्यमरः, चक्रुः (कृतवन्तः ॥ ८८ ॥

( समासः ) आतपात्त्रायत इत्यापत्त्रं, रेखा एव ध्वजश्च कुलिशश्च आतपत्त्रञ्चेति रेखाध्वजकुलिशातपत्त्राणि, तानि चिह्नानि यस्मिन् तत् । लब्धुं योग्यं लभ्यं प्रसादेन लभ्यमिति प्रसादलभ्यम् । सम्यक् राजतेऽसौ सम्राट् तस्य । प्रस्थाने प्रणतयः प्रस्थानप्रणतयस्ताभिः । मकरन्दस्य रेणवः मकरन्दरेणवः, मौलिषु स्रजो मौलिस्रजः, ताभ्यश्च्युता मकरन्दरेणवश्चेति मौलिस्रक्च्युतमकरन्दरेणवः, तैः गौरम् ॥ ८८ ॥

( वाच्यपरिवर्तनम् ) तैः.........चक्रे ॥ ८८ ॥

( सरलार्थः ) ततः प्रस्थानसमये सर्वे एव ते राजानः प्रणिपातपूर्वकं रघोश्चरणद्वन्द्वं प्रणेमुः, तदा तेषां मुकुटमाल्यगलितमधुपरागः रघुचरणयुगलाङ्गुलीरलञ्चक्रुः ॥ ८८ ॥

( सरलार्थ हिन्दी ) वे राजे, रेखाही से ध्वज, वज्र और छत्र चिह्नवाले चक्रवर्ति लक्षणसे युक्त उस रघु के चरणों को चलती समय की दण्डवत् कर सिर की माला से गिरे हुए सुगन्धित परागों से अपनी चरणाङ्गुलियों को श्वेत करते हुए ॥ ८८ ॥

श्रीकालिदासकविवर्यविनिर्मितेऽस्मिन्
काव्ये वरे हि रघुवंशमिति प्रसिद्धे ।
सर्गः प्रतापिरघुदिग्विजयप्रयाण-
नामा समाप्तिमगमद्रुचिरस्तुरीयः ॥ ८९ ॥

इति पाठकोपाव्ह-स्मार्तकर्मानुष्ठाननिष्ठ-स्वधर्मधुरन्धर-कश्यपवंशावतंस-
श्रीजयकृष्णशर्मतनुजनुषा श्रीगौरीनाथशर्म्मणा विरचितया
सुबोधिनीसमाख्यया व्याख्यया सरलार्थया प्राकृत-
भाषया च संवलितो महाकवि श्रीकालिदास-
कृतौ रघुवंशे महाकाव्ये रघुराज्या-
भिषेको नाम चतुर्थः
सर्गः ॥ ४ ॥

—:※:—

# कथा-संक्षेप ।

## सन्तान के निमित्त राजा दिलीप का वसिष्ठ के आश्रम पर जाना ।

( प्रथम सर्ग )

राजासीन्मनुवंशभूर्भुजजितद्वीपो दिलीपो महान्
पुत्रार्थी स वधूसखः प्रणमितुं शिष्टं वसिष्ठं ययौ ।
क्ष्मासङ्कन्दन ! नन्दिनीं परिचर त्वं नन्दनं प्राप्स्यसी-
त्यादिष्टो हि पुरोधसा स विदधे तस्याः स्वयं सेवनम् ॥ १ ॥

सर्ग के आरम्भ में प्रथमश्लोक में मंगलाचरण उसके बाद दो श्लोकों में कवि की निरभिमानिता, नवें श्लोक तक वर्णनीय नायक विशेषण तथा दसवें में इसके सुनने के लिये महात्माओं की प्रार्थना की गई है, तदुपरान्त कथाभाग इस प्रकार वर्णन किया गया है :—

राजाओं में प्रथम, माननीय, सर्वश्रेष्ठ वैवस्वतनाम मनु के पवित्रवंश में, प्रवल प्रतापी दिलीप नामका राजेन्द्र क्षीरसागर में चन्द्रमा की तरह उत्पन्न हुआ । शास्त्रमें, नीतिमें, युद्धमें कलाकौशल में, इसका सानी और कोई राजा न था ।

यह चक्रवर्ती हो निष्कण्टक राज्य का उपभोग किया करता था । इसकी आज्ञा पालन करनेवाली धार्मिक-प्रजा, तिलमात्र भी नियम के विरुद्ध नहीं चलती थी ।

इस प्रकार हर तरह का सुख रहते हुए भी राजादिलीप सन्तानके न होनेके कारण सर्वदा राज्य की ओर से विरक्तसा रहा करता था ।

एक दिन इसी प्रकार बैठे बैठे उसके मन में न जाने कौनसा विचार उत्पन्न हुआ, कि अपना सारा राज मन्त्रियों के अधीन कर अपनी धर्मपत्नी सुदक्षिणा को साथ ले, कुलगुरु भगवान वसिष्ठमुनि के आश्रमकी ओर चला गया । वहां जा, परस्पर कुशल प्रश्न होनेके अनन्तर, दिलीप ने सन्तान न होनेकी अपनी दुःख कहानी कह सुनाई

महर्षि ने अपने योगबल से सन्तान की रुकावट को समझ कर, राजासे कहा, कि "राजन्" एक समय तुझे इन्द्रलोक से लौटती बार मार्ग में कल्पवृक्ष की छाया में बैठी कामधेनू मिली, पर उस समय तूने उसे प्रणाम न किया और प्रदक्षिणा भी न की। इसलिये उसने तुझे यह शाप दिया कि "जबतक मेरी कन्याकी आराधना न करेगा तुझे सन्तान न होगी"। इसे तूने आकाशगङ्गा (मन्दाकिनी) में दिग्गजों के स्नान करने तथा मन्दाकिनी की हर हर हर हिलोर-ध्वनि के कारण नहीं सुना।

इस समय कामधेनु बरुण के यज्ञिय सामग्री की सहायतार्थ पाताल लोक में गई है। उसकी कन्या नन्दिनी मेरे आश्रम में है, इसकी सेवा करो, यही प्रसन्न होने पर तेरा मनोरथ पूर्ण कर सकेगी। इतना कह मुनिवसिष्ठ ने सेवाकी विधि समझाई और राजा तथा रानी को रहने के लिये एक पर्णशाला दी, उसमें उन दोनों ने तपस्वियों की भांति एक रात निवास किया ॥ १ ॥

## दूसरा-सर्ग

*राजा दिलीप को नन्दिनी का वरदान देना।*

मायाकेसरिणं प्रदर्श्य नृपतेर्भावं विदित्वा मुने-
र्धेनुः सूनुमवाप्नुहीति मुदिता तस्मै वरं सा ददौ।
सोऽपि प्राप्य मनोरथं मुनिमुपामन्त्र्य प्रजावत्सलो
देव्या सार्धमुपाजगाम पवनप्रेङ्खत्पताकं पुरम् ॥ २ ॥

प्रातःकाल होतेही नित्यकर्म से निवृत्त हो, रानी से नन्दिनी का पूजन कराकर राजा उसे चराने के लिये जङ्गल ले गया। कुछ दूर जाने पर रानी तथा सिपाहियों को लौटा दिया। और स्वयं, गुरुदेव की आज्ञानुसार सारा दिन नन्दिनी को चराता व उसकी सेवा करता और सायंकाल होतेही उसे आश्रम में लाता, रानी सुदक्षिणा आगे बढ़कर उसके पुनीत मस्तक की पूजा करती, इस प्रकार सेवा करते २ उसे २१ दिन व्यतीत हुए।

बाइसवें दिन नन्दिनी दिलीप की परीक्षा करने के हेतु चरती चरती गङ्गाजी के किनारे हरी हरी दूबों वाली एक गुफा में चली

गई। राजा यह समझ कर कि यह कामधेनु की कन्या है किस पशु की शक्ति है जो उस पर आक्रमण कर सके; उसकी रक्षा से निश्चिन्त हो पहाड़ी सुहावना दृश्य देखने लगा। इधर राजा का नन्दिनी के ओट होना, अकस्मात् एकाएक एक सिंह उस पर झपटा। नन्दिनी बड़ी ज़ोर से डकराई उसकी मर्मभेदी आवाज सुन पीछे घूमकर राजा क्या देखता है कि नन्दिनी के ऊपर सिंह बैठा हुआ है और नन्दिनी राजा की ओर अपनी रक्षा के लिये अत्यन्त कातर दृष्टि से देख रही है। इस दृश्य को देखकर राजा के मनमें बड़ी दया आई और सिंह पर अत्यन्तक्रुद्ध हो उसे मारने के लिये तरकस से बाण निकालने के हेतु अपना दाहिना हाथ पीठ की ओर किया, पर, उसका हाथ बाण के पास जाकर वहीं चिपक गया। राजा अपनी ऐसी अनहोनी दशा देखकर बड़ा असमंजस में पड़ा, क्रोध के मारे सर्वांग से चिनगारियां निकलने लगीं पर कुछ कर न सका। तब सिंह मनुष्य वाणी में बोला "हे राजन्! अब तू मेरे मारने के लिये विशेष प्रयत्न न कर, तेरा एक भी शस्त्र मेरा बाल बांका नही कर सकता, मैं जन्म का पशु नहीं हूँ, तू अपने सामने जो देवदारु का पेड़ देख रहा है, यह पार्वतीजी के हाथ का सींचा हुआ है और पुत्र की तरह उन्हें अत्यन्त प्यारा है।

एक दिन किसी जङ्गली हाथी ने खुजलाने के लिये अपनी कनपटी इसी वृक्ष के स्कन्ध में रगड़दी उससे इसकी छाल छिल गई। पार्वती जी यह देख उतनी ही शोकाकुला हुईं जितनी देव और दानवों की लड़ाई में स्वामीकार्तिक के घायल होने से हुईं थीं। इसलिये उसी दिन से जङ्गली हाथियोंको डराने के लिये मुझे शिवजी ने सिंह बनाकर यहां रहनेकी आज्ञा दी है और यहभी कहाहै कि पशु अपने आप तेरे पास आ जाय उसे खा लेना भक्ष्य ढूढ़ने कहीं न जाना इसलिये आज मानों साक्षात् शंकर भगवान की भेजी हुई यह गाय मेरे पास आई है। यह मेरा भक्ष्य है मैं इसे छोड़ नहीं सकता। अब तू अपने गुरु के पास लौट जा। लज्जा छोड़ दे। मनुष्य जिस वस्तु की रक्षा नहीं कर सकता। उससे उसका यश क्षीण नहीं होता।" इस प्रकार सिंह का वचन सुनकर राजा ने उससे यों कहना शुरू किया:—

" हे सिंह ! देवादिदेव महादेव जैसे आप के मान्य हैं उसी तरह वे मेरे भी मान्य हैं और गुरु की यह "गाय" भी पूजनीय है, इसलिये अपने सामने इसका विनाश होने देना सर्वथा अनुचित है अतः यदि आपको भोजन करना है तो आप दया करके इसे छोड़ दें और उसकी जगह मुझे खालें। सिंह यह सुन बड़ी जोर से हँसता हुआ बोला :—

राजन् ! एक पशु के लिये अपने इतनेबड़े राज को लात मारना महा मूर्खता है। यदि तू जीता रहेगा, असंख्य प्रजा का पालन करेगा, इस एक गाय के बदले इससे भी अधिक दूध देने वाली बड़ी २ करोड़ों गायें देकर अपने गुरु को प्रसन्न कर सकेगा। इस पर राजा ने कहा, जो कुछ हो अपने सामने गुरु की वस्तु का नाश देख नहीं सकता, इस तरह अपनी बातों से सिंह को हरा कर गाय का छोड़ना और अपना खाना सिंह से उसने स्वीकार करवाया और अपने शस्त्र दूर रख शरीर को मांस पिण्ड की तरह सिंह के सामने झुका दिया, मानों मांस का लोथड़ा किसी ने सिंह को खाने दिया हो। दिलीप मन ही मन समझ रहा था कि अब सिंह मेरे ऊपर झपटेगा और बिचारी नन्दिनी की जान बचेगी पर इतने ही में ऊपर से विद्याधरों ने फूल बरसाये और नन्दिनी ने अति मधुर बचनों से कहा कि:—"हे पुत्र उठो"। राजा उठा और उसने अपने सामने माता की समान नन्दिनी को देखा पर सिंह कहीं दिखाई न दिया। नन्दिनी ने राजा से कहा कि " हे पुत्र मैं तुझ पर प्रसन्न हुई, तुझे जो वर मांगना हो मांग ले"। इस पर राजा ने जब सुदक्षिणा में अपने समान पुत्र मांगा तब नन्दिनी ने दोने में दूध दुहकर पीने की आज्ञा दी। परन्तु राजा ने बिना गुरु की आज्ञा के उसे ग्रहण करना उचित न समझ कर आश्रम में आ, गुरु को सम्पूर्ण वृत्तान्त कहकर उनकी आज्ञा ले नन्दिनी का दूध पीया।

प्रातःकाल गोसेवारूप व्रत की पारणा करने के उपरान्त वे दोनों राजा रानी, गुरु, गुरुपत्नी, अग्नि, और नन्दिनी की प्रदक्षिणा कर अपनी राजधानी की ओर लौटे और रानी गर्भवती हुई ॥ २ ॥

## तीसरा सर्ग।

*रघु का जन्म और उसका राज्याभिषेक।*

देवी द्राक्सुषुवे शुभेऽहनि रघुं राजाऽस्य यूनः क्रमात्
कृत्वोद्वाहमतीव गृध्नुरभवद्वृद्धोऽश्वमेधान् प्रति।
द्वेषादश्वमुषं विजित्य रघुणा शक्रं प्रतापी मखां-
ल्लब्ध्वैकोनशतं रघौ कुलधुरं धृत्वा सदारोऽसरत्॥

इस प्रकार कुछ दिन के अनन्तर दसवें महीने रानी को पुत्र उत्पन्न हुआ राजा ने उसका नाम "रघु" रक्खा। राजकुमार रघु शुक्लपक्ष के चन्द्र की तरह दिन प्रतिदिन अपने शरीर की पुष्टि को धारण करने लगा। राजा दिलीप ने बड़े उत्साह और उमंग के साथ यथासमय उसके चूड़ाकरण उपनयन आदि संस्कार कराये। विद्वानों को रख कर विद्या पढ़ाई। उसके सम्पूर्ण विद्या में निष्णात होने पर राजा दिलीप ने स्वयं उसे धनुर्वेद की शिक्षादी अनन्तर उसे युवराज बनाया। दिलीप ने अपना सौवां अश्वमेध यज्ञ आरम्भ किया और उस यज्ञिय अश्व की रक्षा करने के लिये अन्यान्य राजकुमारों सहित युवराज रघु को नियुक्त किया। इन्द्र यह समझ कर कि यदि दिलीप का यह यज्ञ पूरा हो जायगा तो वह मेरे पद का अधिकारी होगा। इसलिये इन्द्र ने उस अश्व को रघु और उसके अनुयाइयों के सामने से ही चुराया परन्तु उसकी माया से कोई उसे और अश्व को देख न सका। रघु और उसके अनुयायी अत्यन्त चकित हुए। उसी समय परमेश्वर की कृपा से कुलगुरु भगवान् वसिष्ठ मुनि की धेनु वहां आई। उसके मूत्र से रघु ने ज्योंही अपने नेत्र को धोया; पूर्व दिशा में घोड़ा भगाकर ले जाते हुए इन्द्र को देखा और बड़े गम्भीर स्वर से इन्द्र को ललकार कर कहा कि हे देवेन्द्र! यज्ञ की रक्षा करने वाले आप ही यदि ऐसे नीच कर्म में प्रवृत्त होंगे तो यह सब कर्म सदा के लिये लुप्त हो जायगा। इसलिये आप कृपाकर इस अश्व को छोड़ दें रघु के ऐसे बचन सुन इन्द्र बोला—"हे राजकुमार! तेरा कहना सत्य है परन्तु शतक्रतु अर्थात् सौ यज्ञ करने वाला मेरा ही नाम है दूसरे का नहीं, पर, अब तेरे पिता ने मेरा यह नाम मिटाने के लिये ही यह सौवां अश्वमेध यज्ञ रचा है इसलिये मैंने इस अश्वको

चुराया है। तू इसके पीछे मत पड़, नहीं तो सगर राजा की सन्तान की तरह तेरा भी नाश होगा "। इन्द्र के इस बचन को सुन रघु बड़े जोर से ठह ठहा कर हँस पड़ा और इन्द्र से बोला, इन्द्र ! मुझे बिना जीते तू घोड़ा नहीं ले जा सकता इतना कह तुरन्त इन्द्र की छाती में एक बाण मारा इन्द्र ने भी रघुको बाण से घायल किया रघुने भी एक बाण से उसकी ध्वजा काटी और एक बांण उसकी बाहु में मारा इस प्रकार चारो ओर से सिद्ध और सैनिकों से घिरा हुआ उन दोनों में भयंकर युद्ध होने लगा। अन्त में रघु के बाण से इन्द्र की प्रत्यञ्चा कट जाने पर इन्द्र ने अति क्रुद्ध हो रघु के ऊपर वज्र छोड़ा राजकुमार रघु के छाती पर उसका प्रहार होते ही वह मूर्छित हो भूमि पर गिर पड़ा। सारी सेना हा हा कार करती हुई दौड़ी, पर वाहरे राजकुमार, इन्द्र के वज्र प्रहार की तनिक भी परवाह न कर देखते ही देखते उठ खड़ा हुआ, इतनाही नहीं, उठतेही उस महा-वीर ने इन्द्रको मारने के लिये ज्योंही धनुष पर बाण चढ़ाना चाहा कि इन्द्र ने रोक कर उसे कहाः—

"राजकुमार ! मैं तेरी वीरता से प्रसन्न हुआ इस घोड़े को छोड़ कर तू जो चाहे मुझसे वर मांग"। रघु ने उत्तर दिया कि जो यही तेरे मनमें है तो ऐसा कर कि बिना घोड़ा छोड़े ही मेरे पिता ९९ यज्ञों से १०० यज्ञ का फल प्राप्त कर सकें और इस वृत्तान्त को वह तेरे ही मुख से सुनें। इन्द्र ने रघुकी चतुराई को समझ कर मनही मन उसे सराहा और उसके बचनको स्वीकार किया। इसके बाद इन्द्र घोड़ा लेकर अपनी पुरीको सिधारा। रघुभी अपने राज्यकी ओर लौटा। रघुके आने से पहिले दिलीप ने इन्द्र के दूतसे लड़ाई का सारा वृत्तान्त सुन लिया था इसलिए राजकुमार रघु के आतेही बड़ी खुशी २ उसे गले लगाया और कुछ दिन के उपरान्त रघुको राज देकर वानप्रस्थाश्रम का आश्रय लिया ॥ ३ ॥

## चौथा सर्ग।

*रघुकी दिग्विजय यात्रा*

स्थित्वा राज्यपदे रघुः परिचरन् हित्वा प्रमादं द्विजान्
गत्वा सैन्यपुरःसरः समधिकं जित्वा चतस्रो दिशः।

हत्वा विद्विषतां श्रियो मखमहं कृत्वा कृती दक्षिणां ।
दत्त्वा सर्वधनोच्चयं निजयशः श्रुत्वा दरिद्रो बभौ ॥

शरदऋतु के लगतेही रघु को दिग्विजय का उत्साह हुआ। सेना लेकर पहले पूर्व दिशा की ओर गया। सुह्मदेश और बङ्गदेश जीता। गङ्गा के टापुओं में विजय स्तम्भ गाड़े। कपिशा नदी उतर कर कलिंग देश में गया। वहां के राजा को जीता। कपिशा नदी के किनारे २ चल कर कावेरी को पार कर मलयागिरि की तराई में डेरा किया। पाण्डुदेश के राजा से मोती आदि अनेक रत्न भेंट लेकर मलय तथा दर्दुर पर्वतों पर होता हुआ पश्चिम की ओर चला वहां के राजाओं को जीत उनसे भेंट ले त्रिकूट पहाड़ को देखता हुआ पारसीक देश में आकर यवनों को जीता उसके बाद उत्तर दिशा की ओर गया। वहां हूण जाति के क्षत्रियों कों जीत कर उनसे तथा काम्बोजों से भेंटली। हिमालय पर चढ़ कर पहाड़ियों से बहुत धन लिया और कैलाश तक गया। वहां से लौट कर लौहित्या नदी के पार प्रागूज्योतिष के राजा को तथा कामरूप के राजा को जीत कर उनसे भेंट में हाथी लिये। इस प्रकार चारो दिशाएँ जीतकर रघु अपनी राजधानी में पहुँचा और विश्वजित यज्ञ कर सारा धन ब्राह्मणों को दे धर्म-राजकरने लगा।

१९११

अथैकधेनोरपराधचण्डाद्गुरोः कृशानुप्रतिमाद्बिभेषि ।
शक्याऽस्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोध्नीः ॥
अमंस्त चानेन परार्ध्यजन्मना स्थितेरभेत्ता स्थितिमन्तमन्वयम् ।
स्वमूर्तिभेदेन गुणाग्र्यवर्तिना पतिः प्रजानामिव सर्गमात्मनः ॥ २ ॥
आपादपद्मप्रणताः कलमा इव ते रघुम् ।
फलैः संवर्धयामासुरुत्खातप्रतिरोपिताः ॥ ३ ॥
खर्जूरीस्कन्धनद्धानां मदोद्गारसुगन्धिषु ।
कटेषु करिणां पेतुः पुन्नागेभ्यः शिलीमुखाः ॥ ४ ॥
भक्तिः प्रतीक्ष्येषु कुलोचिता ते पूर्वान् महाभाग तयातिशेषे ।
व्यतीतकालस्त्वहमभ्युपेतस्त्वामर्थिभावादिति मे विषादः ॥ ५ ॥
तस्यैकनागस्य कपोलभित्त्योर्जलावगाहक्षणमात्रशान्ता ।
वन्येतरानेकपदर्शनेन पुनर्दिदीपे मददुर्दिनश्रीः ॥ ६ ॥
तं तस्थिवांसं नगरोपकण्ठे तदागमारूढगुरुप्रहर्षः ।
प्रत्युज्जगाम क्रथकैशिकेन्द्रश्चन्द्रं प्रवृद्धोर्मिरिवोर्मिमाली ॥ ७ ॥
एषां दण्डान्वयं खण्डान्वयं वावलम्ब्य व्याख्या कार्या ।

सन् १९१२

(१) निवर्त्य राजा दयितां दयालुः (२) पुरन्दरश्रीः पुरमुत्पताकम् ।
(३) ततोनिषङ्गादसमग्रमुद्धृतं (४) इक्षुच्छायानिषादिन्यः ।
(५) तमीशः कामरूपाणाम् (६) तं श्लाघ्यसम्बन्धमसौ विचिन्त्य ।
दण्डान्वयं खण्डान्वयं वावलम्ब्यैषां व्याख्या कार्या ।

सन् १९१३

(१) धनुर्भृतोऽप्यस्य दयार्द्रभावं (२) तदङ्गमग्र्यं मघवन्महाक्रतोः
(३) स सैन्यपरिभोगेण (४) अपनीतशिरस्त्राणाः (५) तमर्चयित्वा
विधिवद्विधिज्ञः (६) अथ प्रभावोपनतैः कुमारं ।
एषामन्वयमुखेन व्याख्या कार्या ।

सन् १९१४

( १ ) सा दुष्प्रधर्षा मनसापि हिंस्रैरित्यद्रिशोभा प्रहितेक्षणेन ।
अलक्षिताभ्युत्पतनो नृपेण प्रसह्य सिंहः किल तां चकर्ष ॥

( २ ) तमाहितोत्सुक्यमदर्शनेन प्रजाः प्रजार्थव्रतकर्षिताङ्गम् ।
नेत्रैः पपुस्तृप्तिमनाप्नुवद्भिर्नवोदयं नाथमिवौषधीनाम् ॥

( ३ ) तथापि शस्त्रव्यवहारनिष्ठुरे विपक्षभावे चिरमस्य तस्थुषः ।
तुतोष वीर्यातिशयेन वृत्रहा पदं हि सर्वत्र गुणैर्निधीयते ॥

( ४ ) लब्धप्रशमनस्वस्थमथैनं समुपस्थिता ।
पार्थिवश्रीर्द्वितीयेव शरत्पङ्कजलक्षणा ॥

( ५ ) विनयन्तेस्म तद्योधा मधुभिर्विजयश्रमम् ।
आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु ॥

( ६ ) उपात्तविद्यं विधिवद्गुरुभ्यस्तं यौवनोद्भेदविशेषकान्तम् ।
श्रीः साभिलाषापिगुरोरनुज्ञां धीरेव कन्या पितुराचकाङ्क्ष ॥

अन्वयमुखेन व्याख्येया अमी श्लोकाः ।

सन् १६१५

(१) तमार्यगृह्यं निगृहीतधेनुः (२) यदात्थ राजन्यकुमार तत्तथा
(३) ताम्बूलीनां दलैस्तत्र (४) तथेत्युपस्पृश्य पयः पवित्रं ।
(५) तत्र जन्यं रघोर्घोरं पर्वतीयैर्गणैरभूत् । नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम् ।

(६) ते रेखाध्वजकुलिशातपत्रचिन्हं
सम्राजश्चरणयुगं प्रसादलभ्यम् ।
प्रस्थानप्रणतिभिरङ्गुलीषु चक्रु-
र्मौलिस्रक्च्युतमकरन्दरेणु गौरम् ।

अन्वयमुखेन एते श्लोका व्याख्येयाः ।

सन् १६१६

टीकानुकरणमकिञ्चित्करमिति निधार्यान्वयमुखेन व्याख्यातव्या इमे श्लोकाः ।

(१) दिलीपसूनोः स बृहद्भुजान्तरं प्रविश्य भीमासुरशोणितोचितः
पपावनास्वादितपूर्वमाशुगः कुतूहलेनेव मनुष्यशोणितम् ।

( २ ) सममेव समाक्रान्तं द्वयं द्विरदगामिना । तेन सिंहासनं
पित्र्यमखिलं चारिमण्डलम् ।

( ३ ) भाक्तः प्रतीक्ष्येषु कुलोचिता ते पूर्वान् महाभाग तयातिशेषे।
व्यतीतकालस्त्वहमभ्युपेतस्त्वामर्थिभावादिति मे विषादः ।

(४) ततः प्रकोष्ठे हरिचन्दनाङ्किते प्रमथ्यमानार्णवधीरनादिनीम् ।
रघुः शशाङ्कार्धमुखेन पत्रिणा शरासनज्यामलुनाद्बिडौजसः ।

सन् १९१७

(१) लब्धप्रशमनस्वस्थमथैनं समुपस्थिता ।
पार्थिवश्रीर्द्वितीयेव शरत्पङ्कजलक्षणा ।
(२) तथेत्युपस्पृश्य पयः पवित्रं सोमोद्भवायाः सरितो नृसोमः
उदङ्मुखः सोऽस्त्रविदस्त्रमन्त्रं जग्राह तस्मान्निगृहीतशापात्
(३) उपात्तविद्यं विधिवद्गुरुभ्यस्तं यौवनोद्भेदविशेषकान्तम् ।
श्रीः साभिलाषापि गुरोरनुज्ञां धीरेव कन्या पितुराचकाङ्क्ष ।
(४) तत्र जन्यं रघोर्घोरं पर्वतीयैर्गणैरभूत् ।
नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम् ॥
(५) भक्तिः प्रतीक्ष्येषु कुलोचिता ते पूर्वान्महाभाग तयातिशेते ।
व्यतीतकालस्त्वहमभ्युपेतस्त्वामर्थिभावादिति मे विषादः
उपरितनाः श्लोकाः स्पष्टं व्याख्येयाः

सन् १९१८

(१) दिलीपसूनोस्स बृहद्भुजान्तरं (२) तदाप्रभृत्येव वनद्विपानां ।
(३) आपादपद्मप्रणताः (४) तत्राक्षोभ्यं यशोराशिम् ।
(५) तमापतन्तं नृपतेरवध्यः । व्याख्यायन्ताममी श्लोकाः ॥

सन् १९१९

(१) इत्थं व्रतं धारयतः प्रजार्थं (२) तमभ्यनन्दत्प्रथमं प्रबोधितः ।
(३) ततो निषङ्गादसमग्रमुद्धृतं (४) आधारबन्धप्रमुखैः प्रयत्नैः ।
(५) तं भूपतिर्भासुरहेमराशिम् ।
एते श्लोका अन्वयप्रदर्शनपुरस्सरं व्याख्येयाः ।

सन् १९२०

(१) अन्येद्युरात्मानुचरस्य भावं जिज्ञासमाना मुनिहोमधेनुः ।
गङ्गाप्रपातान्तविरूढशष्पं गौरीगुरोर्गह्वरमाविवेश ।
(२) शतैस्तमक्ष्णामनिमेषवृत्तिभिर्हरिं विदित्वा हरिभिश्च वाजिभिः ।
अवोचदेनं गगनस्पृशा रघुः स्वरेण धीरेण निवर्तयन्निव ।
(३) स नर्मदारोधसि सीकरार्द्रैर्मरुद्भिरानर्तितनक्तमाले ।
निवेशयामास विलंघिताध्वा क्लान्तं रजोधूसरकेतु सैन्यम् ।

(४) अथैकधेनोरपराधचण्डाद् गुरोः कृशानुप्रतिमाद्बिभेषि।
शक्योऽस्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोध्नीः।
(५) जनस्य साकेतनिवासिनस्तौ द्वावप्यभूतामभिनन्द्यसत्वौ।
गुरुः प्रदेयाधिकनिस्पृहोऽर्थी नृपोऽर्थिकामादधिकप्रदश्च॥
एते श्लोका अन्वयसमासतात्पर्यनिर्णयपुरःसरं व्याख्येयाः।

सन् १९२१

( १ ) पुन्दरश्रीः पुरमुत्पताकं प्रविश्य पौरैरभिनन्द्यमानः।
भुजे भुजङ्गेन्द्रसमानसारे भूयः स भूमेर्धुरमाससञ्ज॥
( २ ) अमंस्त चानेन परार्ध्यजन्मना स्थितेरभेत्ता स्थितिमन्तमन्वयम्।
स्वमूर्तिभेदेन गुणाग्र्यवर्तिना पतिः प्रजानामिव सर्गमात्मनः॥
( ३ ) स गुप्तमूलप्रत्यन्तः शुद्धपार्ष्णिरयान्वितः।
षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया॥
( ४ ) ताम्रोदरेषु पतितं तरुपल्लवेषु निर्धौतहारगुलिकाविशदं हिमाम्भः।
आभाति लब्धपरभागतयाऽधरोष्ठे लीलास्मितं सदशनार्चिरिवत्वदीयं
एते श्लोका अन्वयार्थकोविग्रहभावसन्दर्भप्रदर्शनपुरःसरं व्याख्येयाः।
( ५ ) इन्द्रयुद्धरघुवृत्तान्तः सरलसंस्कृतेन लेख्यः।

सन् १९२२

( अ ) सञ्चारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम्।
प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः॥
( क ) सेयं स्वदेहार्पणनिष्क्रयेण न्याय्या मया मोचयितुं भवत्तः।
न पारणा स्याद्विहता तवैवं भवेदलुप्तश्च मुनेः क्रियार्थः।
( च ) त्वचं स मेध्यां परिधाय रौरवीमशिक्षतास्त्रं पितुरेव मन्त्रवत्।
न केवलं तद्गुरुरेकपार्थिवः क्षितावभूदेकधनुर्धरोऽपि सः।
( ट ) कामरूपेश्वरस्तस्य हेमपीठाधिदेवताम्।
रत्नपुष्पोपहारेण छायामानर्च पादयोः॥
( ५ ) एवं तयोरध्वनि दैवयोगादासेदुषोः सख्यमचिन्त्यहेतु।
एको ययौ चैत्ररथप्रदेशान् सौराज्यरम्यानपरो विदर्भान्॥
एते श्लोका दण्डान्वयमुखेन समासविग्रहप्रदर्शनपूर्वकं व्याख्येयाः,
सिंहदिलीपयोः संवादः संस्कृतभाषया संक्षेपतो लेख्यः।

१९२३

१. विसृष्टपार्श्वानुचरस्य तस्य पार्श्वद्रुमाः पाशभृता समस्य ।
उदीरयामासुरिवोन्मदानामालोकशब्दं वयसां विरावैः ॥ १ ॥
न संयतस्तस्य बभूव रक्षितुर्विसर्जयेद्यं सुतजन्महर्षितः ।
ऋणाभिधानात्स्वयमेव केवलं तदा पितॄणां मुमुचे स बन्धनात् ॥
दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि ।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥ ३ ॥
शरैरुत्सवसङ्केतान् कृत्वा स विरतोत्सवान् ।
जयोदाहरणं बाह्वोर्गापयामास किन्नरान् ॥ ४ ॥
संमोचितः सत्त्ववता त्वयाहं शापाच्चिरप्रार्थितदर्शनेन ।
प्रतिप्रियं चेद्भवतो न कुर्यां वृथाहि मे स्यात्स्वपदोपलब्धिः ॥ ५ ॥
(क) एते श्लोका दण्डान्वयेन समासविग्रहप्रदर्शनपूर्वकं व्याख्येयाः ।
(ग) अन्तिमश्लोके कः केन शप्तः केन च मोचितः
२. कौत्सस्य रघोश्च संवादः स्वसंस्कृतेन लेख्यः ॥ २० ॥

१९२४

(१) अलं महीपाल तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात्
न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्च्छति मारुतस्य ।
स पूर्वतः पर्वतपक्षशातनं ददर्श देवं नरदेवसम्भवः
पुनः पुनः सूतनिषिद्धचापलं हरन्तमश्वं रथरश्मिसंयतम् ॥
ससैन्यपरिभोगेण गजदानसुगन्धिना
कावेरीं सरितां पत्युः शङ्कनीयामिवाकरोत् ।
अवकाशं किलोदन्वान्रामायाभ्यर्थितो ददौ
अपरान्तमहीपालव्याजेन रघवे करम् ॥
निद्रावशेन भवताप्यनवेक्षमाणा
पर्युत्सुकत्वमबला निशि खण्डितेव ।
लक्ष्मीर्विनोदयति येन दिगन्तलम्बी
सोऽपि त्वदाननरुचिं विजहाति चन्द्रः ॥
(क) एते श्लोका दण्डान्वयमवलम्ब्य व्याख्येयाः समस्तपदानां विग्रहवाक्यानि च प्रदर्शनीयानि ॥
(ख) प्रथमपञ्चमयोः वक्तृबोद्धव्यप्रदर्शनञ्च कार्यम्

(ग) द्वितीयतृतीययोर्वाच्यपरिवर्तनं लेख्यम् ।

(२) राजा दिलीपेन कुत्र, किमर्थं, कतिदिवसपर्यन्तं गोचारणं कृतमिति स्वसंस्कृतेन लेख्यम् ।

१९२५

१ पुरुषायुषजीविन्यो निरातङ्का निरीतयः ।
यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्चसम् ॥ ....२०

२ तस्मिन्क्षणे पालयितुः प्रजानामुत्पश्यतः सिंहनिपातमुग्रम् ।
अवाङ्मुखस्योपरि पुष्पवृष्टिः पपात विद्याधरहस्तमुक्ता ॥...२०

३ ग्रहैस्ततः पञ्चभिरुच्चसंश्रयैरसूर्यगैः सूचितभाग्यसम्पदम् ।
असूत पुत्रं समये शचीसमा त्रिसाधना शक्तिरिवार्थमक्षयम् ॥ २०

४ स सेनां महतीं कर्षन्पूर्वसागरगामिनीम् ।
बभौ हरजटाभ्रष्टां गङ्गामिव भगीरथः ॥

५ ते रेखाध्वजकुलिशातपत्रचिन्हं
सम्राजश्चरणयुगं प्रसादलभ्यम् ॥ ...२०
प्रस्थानप्रणतिभिरङ्गुलीषु चक्रु-
र्मौलिस्रक्च्युतमकरन्दरेणुगौरम् ॥

एते श्लोकाः कोषविग्रहसन्दर्भोऽभिप्रायादिनिरूपणपूर्वकं व्याख्येयाः

१९२६

(१) पुरुषायुषजीविन्यो निरातङ्का निरीतयः ।
यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्चसम् ॥...............१५

(२) तदङ्ग कल्याणपरम्पराणां भोक्तारमूर्ज्जस्वलमात्मदेहम् ।
महीतलस्पर्शनमात्रभिन्नमृद्धं हि राज्यं पदमैन्द्रमाहुः ॥.......२०

(३) ग्रहैस्ततः पञ्चभिरुच्चसंश्रयैरसूर्यगैः सूचितभाग्यसम्पदम् ।
असूत पुत्रं समये शचीसमा त्रिसाधना शक्तिरिवार्थमक्षयम् ॥ २०

(४) वार्षिकं सञ्जहारेन्द्रो रघुर्जैत्रं धनुर्दधौ ।
प्रजार्थसाधने तौ हि पर्यायोद्यतकार्मुकौ ॥ ....................१५

(५) दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि ।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥ ......... ..१५

एते श्लोकाः ससङ्गति कोषविग्रहभावप्रदर्शनपुरस्सरं व्याख्येयाः ।

(क) प्रथमप्रश्ने ईतयो नामग्राहं परिगणनीयाः ।..............३

(ख) द्वितीयप्रश्ने ऐन्द्रपदस्य स्वरूपं यथावदवगतं प्रदर्शनीयम् ३

(ग) तृतीयप्रश्ने "त्रिसाधनाशक्तिः" का ? कानि च त्रीणि साधनानीति स्पष्टं प्रदर्शनीयम् ।..........................३
(घ) चतुर्थप्रश्ने वाच्यपरिवर्तनमावश्यकम् । .................३
(ङ) पञ्चमप्रश्ने दक्षिणस्यां दिशि रवेस्तेजः कुतो मन्दायते इत्यत्र हेतुरुपन्यस्यताम् ।...................................३

१९२७

(क) वनान्तरादुपावृत्तैः समित्कुशफलाहरैः ।
पूर्यमाणमदृश्याग्निप्रत्युद्यातैस्तपस्विभिः ॥
(ख) कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम् ।
अवेहि मां किङ्करमष्टमूर्त्तेः कुम्भोदरं नाम निकुम्भमित्रम् ॥

१ अनयोर्यथोपयोगं अग्नीनां प्रत्युद्गमनबोधकं श्रुतिवचनम्, अष्टमूर्त्तीनां स्वरूपं चोपवर्ण्य व्याख्या कार्या ।
विभावसुः सारथिनेव वायुना घनव्यपायेन गभस्तिमानिव ।
बभूव तेनातितरां सुदुःसहः कटप्रभेदेन करीव पार्थिवः ॥
२ अस्मिन् पद्ये सुदुःसहत्वसादृश्यं सम्यक् समर्थयत ।
(क) तस्यानीकैर्विसर्पद्भिरपरान्तजयोद्यतैः ।
रामास्त्रोत्सारितोप्यासीत्सह्यलग्न इवार्णवः ॥
(ख) यवनीमुखपद्मानां सेहे मधुमदं न सः ।
बालातपमिवाब्जानामकालजलदोदयः ॥
३ अनयोर्यथाक्रमं अर्णवस्य रामास्त्रोत्सारणे कारणं मधुमदाऽसहिष्णुत्वे वर्णितं सादृश्यं च स्फुटीकुरुत । ४०

१९२८

१ उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।
दैवीनां मानुषीणां च प्रतिहर्ता त्वमापदाम् ॥ १३
२ धर्मलोपभयाद्राज्ञीमृतुस्नातामिमां स्मरन् ।
प्रदक्षिणक्रियार्हायां तस्यां त्वं साधु नाचरः ॥ १३
३ क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः ।
राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥ ... १५
४ ग्रहैस्ततः पञ्चभिरुच्चसंश्रयैरसूर्यगैः सूचितभाग्यसम्पदम् ।
असूत पुत्रं समये शचीसमा त्रिसाधना शक्तिरिवार्थमक्षयम् ॥ २४
५ स गुप्तमूलप्रत्यन्तः शुद्धपार्ष्णिरयान्वितः ।
षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया ॥ ... १३

६ आपादपद्मप्रणताः कलमा इव ते रघुम् ।
फलैः संवर्धयामासुरुत्खातप्रतिरोपिताः ॥

(क) प्रथमश्लोके सप्ताङ्गानि दैव्यो मानुष्यश्चापदो नामग्राहं वर्णनीयाः । ... २

(ख) द्वितीयश्लोके कीदृशं धर्मलोपभयम्, कश्च स धर्मः, के च प्रदक्षिणक्रियार्हा इति सोपपत्तिकं वर्णनीयम् ... २

(ग) चतुर्थश्लोके कानि त्रीणि साधनानीति नामग्राहं वर्णनीयानि ।

(घ) पञ्चमश्लोके बलस्य षड्विधत्वं वर्णय ।

(ङ) षष्ठश्लोके कलमानां राज्ञां चासाधारणं साधर्म्यं निरूपणीयम् । ... १

वक्तृबोद्धव्यकोशविग्रहपर्य्यायतात्पर्य्यनिरूपणपूर्वकं व्याख्यायन्तामिमे श्लोकाः ।

१९२९

तया हीनं विधातर्मां कथं पश्यन्न दूयसे ।
सिक्तं स्वयमिव स्नेहाद् वन्ध्यमाश्रमवृक्षकम् ॥ १ ॥
अवजानासि मां यस्मादतस्ते न भविष्यति ।
मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा ॥ २ ॥
अलं महीपाल तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ।
न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्च्छति मारुतस्य ॥३॥
भवानपीदं परवानवैति महान् हि यत्नस्तव देवदारौ ।
स्थातुं नियोक्तुर्नहि शक्यमग्रे विनाश्य रक्ष्यं स्वयमक्षतेन ॥४॥
जनाय शुद्धान्तचराय शंसते कुमारजन्मामृतसंमिताक्षरम्
अदेयमासीत् त्रयमेव भूपतेः शशिप्रभं छत्रमुभे च चामरे ॥५॥
पञ्चानामपिभूतानामुत्कर्षं पुपुषुर्गुणाः ।
नवे तस्मिन् महीपाले सर्वं नव मिवाभवत् ॥ ६ ॥

१ एते श्लोकाः साधु व्याख्यायन्ताम् । ... ७५
२ द्वितीयश्लोके मत्प्रसूतिमित्यत्रकः समासः ? ... ३
३ तृतीयश्लोके इत इत्यत्र का विभक्तिः ? .... २
४ पञ्चम श्लोकस्य भावार्थः हिन्दी भाषायां लिख्यताम् ... १५
५ षष्ठ श्लोके पञ्चभूतानि कानि ! तेषां गुणाश्च के ? ५